| शिर्षक | ग्रंथकार | विषय | विस्तार (पुर्ण/ अपूर्ण) | टिकाकार | आकार | पृष्ठे | लिपी | सामग्री | Lines per page | Letters per line | Condition & age (शके/विक्रम सवंत) | Additional Particulars / Remark |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| रामायण | वाल्मीकि | पुराण | अपूर्ण | शिवभक्त | ६/९ | ५०० | संस्कृत | कागद | | | | |

M- 2819

॥श्रीगणेशायनमः॥ श्रीरामदासउवाच॥ अथैकदा रमाजानिः सुहृद्भिः सदसिस्थितः॥ वीजित-श्चामरेणैव लक्ष्मणेनाति शोभितः॥१॥ एतस्मिन्नंतरे तत्र पौरः कश्चित्सभास्थितः॥ वारांगनानां नृत्यादि दृष्ट्वा हास्यं चकार सः॥२॥ तद्धास्यं राघवः श्रुत्वा सस्मार पूर्वचेष्टितम्॥ लंकायां युद्ध-समये रावणस्य शिरां सिरवात्॥३॥ रामबाणान्मृतिर्लब्धास्माभिश्चेति विहस्य च॥ श्रीरामं वंदनं कर्तुं पतंतिऽस्म प्रभुं पुनः॥४॥ तेषां विक्रालतां दृष्ट्वा दंतादीनां रघूत्तमः॥ मामत्तुं मां पुनर्यांति शि-रांस्ये तानिरवादति॥५॥ रामो भीत्या पुनस्तानि खे शिरांस्य क्षिपच्छरैः॥ एकोत्तरशतान्येव वारंवारं त्वरान्वितः॥६॥ तद्वृत्त राघवः स्मृत्वा किं दशास्यस्य वै शिरः॥ समागतं सभामध्ये त्रेति पार्श्वे व्य-लोकयत्॥७॥ मायाविनो राक्षसाश्च संत्यत्रेति विचिंत्य च॥ एवं यदा यदा हास्यं समुश्राव रघूत्तमः॥८॥ तदा तदा पूर्व वृत्तं स्मृत्वा पार्श्वे व्यलोकयत्॥ ततो रामः क्षणं चित्ते चिंतयामास सादरम्॥९ यदा यदा श्रूयतेऽत्र हास्यं केनापि यत्कृतम्॥ तदा तदा दशास्यस्य शिरो हास्यं स्मराम्यहम्॥१०॥ मायाविनो राक्षसा स्ते मां विस्मार्य पुनश्चिरात्॥ मामत्तुमत्र यास्यंति त्विति मत्त्वा स्वचेतसि॥११॥ अन्यच्च निंदितं हास्यं नीति शास्त्रपि सर्वदा॥ अतो हास्यं वर्जयामि सर्वेषां भूनिवासिनाम्॥१२॥ इति निश्चित्य हृदये लक्ष्मणं वाक्यमब्रवीत्॥ दुंदुभिं घोषयस्वाद्य पुर्यां राष्ट्रेऽवनीतले॥१३॥ स्मि-ताननो नरः कश्चिन्नारी वा मत्सुहृच्च वा॥ सीता वा तनयो बंधुः रामे दंडयो भवेदिति॥१४॥ तथे-ति रामवाक्यात्स घोषयामास दुंदुभिम्॥ पौरा जानपदाः सर्वे श्रुत्वा शीक्षाध्वनिं प्रभोः॥१५॥ राम-

दंडभयात्सर्वे न चक्रुस्ते स्मिताननम्॥ वारांगना नृत्यगीते नटगीत प्रवर्तने ॥१६॥स्त्रिभिसुहृद्भि-
र्मित्रैश्च विनोदानुत्सवान्वरान्॥ मांगल्यानि च कर्माणि हास्यकारिणि नाचरन्॥१७॥ वंशस्तंभ कला-
भिश्च कौतुकानि हि यानि च ॥ तुर्य घोषादि मांगल्यकर्माणि विविधाः कथाः ॥१८॥ सांवत्सरोत्सवा-
न्सर्वान् यात्रा यज्ञोत्सवान्शुभान्॥ विवाहादिषु कर्मेषु कौतुकान्युत्सवान्तथा ॥१९॥ वार्ता चित्रकथा-
श्चापि न चक्रुश्च कदाजनाः॥ ययौ नावश्यकात्कार्याद्विना सदसिकः प्रभुम्॥२०॥ पुराणानितिहा-
सांश्च न पठंतिस्म केच न ॥ गर्भाधाने पुत्रजन्मे नामकर्मादिषुत्सवान्॥२१॥ पौरा जानपदाः सर्वे
सप्तद्वीपनिवासिनः॥ एतानि हास्यकारीणि नानाकर्माणि भूतले ॥२२॥ रहस्यपि न चक्रुस्ते राम-
दंडभयात्कदा॥ एवमासीद्वर्षमेकं तदा भूम्यां कदापि ह ॥२३॥ स्मिताननं न कस्यासिन्न चक्रुर्मंड-
नादिकम्॥ तदोत्साहा देवताश्च नाना कर्मांगिदेवताः॥२४॥ इंद्राय कथयामासुस्तद्वृत्तं जगती भ-
व ॥ इंद्रादिनां सुराणां च कर्मांगि पूजनानि हि ॥२५॥ नासीद्यदा जगत्याहि तदेंद्रः कथयद्वि-
धिम्॥ तदा सुरान्विधिः प्राह न रामाग्रे बलं हि नः॥२६॥ नैवोपदेष्टुं योग्यः स ममापि जनक-
स्तु यः॥ युक्त्या कार्यं साधयामि येन बोद्धा हितं भवेत्॥२७॥ इत्याश्वास्य सुरान्सर्वान्विधि-
र्भूमंडलं ययौ ॥ अयोध्यायाश्च सीमायां दृष्ट्वा वेधा स पिप्पलम्॥२८॥ स्वयं विवेश तन्मध्ये
दृष्ट्वा पांथान् जहास सः॥ एतस्मिन्नंतरे कश्चित्काष्टभारवहः पुमान्॥२९॥ श्रुत्वा पिप्पल हा-
स्यं त तेन दीर्घं जहास सः॥ ततः स भारवाहश्च ययौ हट्टे प्रभोः पुरीम्॥३०॥ काष्टभार विक्रया-

र्थ तत्र स्मृत्वा स्मित हृदि ॥ चलपत्रस्य सोत्युच्चैर्जहास हृदि शंकितः॥३१॥ भारवाहस्य हास्यं तद्राज दूतोथ सुश्रुवे ॥ राजदूतो जहासोच्चैर्न समर्थो निरोधितुम्॥३२॥ राजदूतः सभां गत्वा भारवाहस्य तात्स्मितम्॥ हृदि स्मृत्वा जहासोच्चै स्तच्छ्रुत्वा ते सभासदाः॥३३॥ सभायां जहसुः सर्वे तच्छ्रुत्वा राघवोऽपि सः॥ उच्चैर्जहास सदसि वर सिंहासन स्थितः॥३४॥ रामो वीचारयामास किमर्थं हसितं मया॥ यन्निमित्तं सदा दंडः पौरान्जानपदान्निजान्॥३५॥ अहं करोमि सोद्याहं सभायां हसितः कथम्॥ दंडयिष्यति मां कोऽद्य किं मां पौरा वदंति हि॥३६॥ अस्माकमेव शीक्षास्ति सर्वदा राघवस्यसा॥ स कथं हससिश्चाद्य सर्वेषां पुरतः स्फुटम्॥३७॥ शीक्षां करिष्यति विभोः कोऽस्यत्विति वदंति ते॥ मानयिष्यंति ना तस्ते ममाग्रे शीक्षितं भुवि॥३८॥ मयै तन्नकृतं योग्यंमिति रामस्त्व मन्यत॥ पुनर्जहास श्रीराम स्तान्निरोधुं न सः क्षमः॥३९॥ ततो रामोऽब्रवीत्पौरान् सभास्थान्सस्मिताननः॥ किमर्थं हसिता यूयं येभ्यो हास्यं ममापि हि॥४०॥ समागतं सभामध्ये पौराः प्रोचुर्नृपोत्तमम्॥ दृष्ट्वा त्वद्दूत हास्यं हि तेनास्माकं समागतम्॥४१॥ तत्पौर वचनं श्रुत्वा दूत माहा रघूत्तमः॥ त्वया किमर्थं हसितं सोऽब्रवीद्रघुनंदनम्॥४२॥ भारवाहस्य हास्यं तत्स्मृत्वा प्रहसितं मया॥ तद्दूतवचनं श्रुत्वा भारवाहं तदा प्रभुः॥४३॥ दूतैरानीय सदसि तमाह रघुनंदनः॥ मा भीतिं भज मत्त स्त्वं सत्यं ब्रूहि ममाग्रतः॥४४॥ हट्टे किमर्थं हसितं त्वयाद्य कथयस्व माम्॥ स भारवाहश्चकितः शुष्क कंठोष्ट तालुकः॥४५॥ वेपमानः स्खलद्वा-

चा राघवं वाक्यमब्रवीत् ॥ अयोध्यायाश्च सीमायामश्वत्थस्य मयाद्य हि ॥ ४६॥ दृष्ट्वा प्रहसितं
राजन् हदृे हास्यं ततः कृतम् ॥ तदपूर्वां तद्गिरां स प्रभुः श्रुत्वा स विस्मितः ॥ ४७॥ दूतानुवाचः
श्रीराम स्त्वनेन सह वेगतः ॥ यूयं गत्वाद्य द्रष्टव्यं किं सत्यं कथ्य तेन वा ॥ ४८॥ अनेन भारवाहे-
न ते तथेति त्वरान्विताः ॥ गत्वाऽश्वत्थ समीपं हि ददृशुस्तेत्स्मितं मुहुः ॥ ४९॥ तदाश्चर्येण त-
द्दूता प्रहसंतोऽतिवेगतः ॥ अश्वत्थ हसितं रामं गत्वा सर्वं न्यवेदयन् ॥ ५०॥ तद्दूतवचनं श्रुत्वा
राघवश्चाति विस्मितः ॥ राज्ये ममैद्दुश्चिन्हं मे शीक्षां लुप्तुमुद्यतम् ॥ ५१॥ इति निश्चित्त्य मनसि
दूतानाज्ञापयत्तदा ॥ छिंद्य तां चलपत्रः स ममाज्ञा भंगकारकः ॥ ५२॥ तद्रामवचनादेव शतशोथ
सहस्रशः ॥ कुठारपाणयः शीघ्रमश्वत्थं दुद्रुवुस्तदा ॥ ५३॥ हास्यमानं नगं दृष्ट्वा ते सर्वेतीव वि-
स्मितः ॥ कुठारैस्तं तदा छेतुमुद्यता राघवाज्ञया ॥ ५४॥ तान् छेतुकामान्सकलान्प्राप्तान्स्वनिकटां
विधिः ॥ उपलैः छिन्न भिन्नांगास्ते दूता लोहितांकिता ॥ ५५॥ कोलाहलं प्रकुर्वतो रामं वृत्तं न्यवेद-
यन् ॥ ५६॥ ततोऽति विस्मितो रामः पुनर्दूतान्सहस्रशः ॥ प्रेषयामास तं छेतुं धनुर्बाणासि धारिणः
॥ ५७॥ तेऽपि गत्वा नगं तेन ताडिता उपलैर्दृढम् ॥ छिन्नांगा राघवा वेगात्सर्वं वृत्तं न्यवेदयन् ५८
ततो रामोऽति संक्रुद्धं सुमंत्रं सेनयायुतम् ॥ प्रेषयामास तं वृक्षं छेतुं बुद्धिपुरःसरम् ॥ ५९॥ सुमंत्रे
राघवं नत्वा सेनया तं नगं ययौ ॥ तावदश्वत्थपाषाणैरग्रे गंतुं न स क्षमः ॥ ६०॥ ततो राघव भीत्या
स शनैः सैन्येन तत्पुरः ॥ ययौ तावन्नगोद्भूतैः पाषाणैस्ताडितो पतत् ॥ ६१॥ सुमंत्रं पतितं दृष्ट्वा हा-

हाकारो महानभूत् ॥ अयोध्यायां तु सर्वत्र तद्भूतमिवा भवत् ॥ ६२॥ सुमंत्रं पतितं श्रुत्वा पुत्राभ्यां रघु-
नंदनः ॥ सैन्येन प्रेषयामासु शत्रुघ्नं तं नगं पुनः ॥६३॥ तत स्तत्कौतुकं श्रुत्वा पौरैर्नार्यैः सहस्रशः॥
प्रासादशिखरारूढा अूर्ध्वास्यास्तं व्यलोकयन् ॥ ६४॥ तर्जन्या दर्शयामासुः सोऽश्वस्तथश्चेति तामिथः
॥ वामहस्तं भ्रुवोः स्थाप्य रविदीप्तिर्न्यवारयन् ॥६५॥ कुंचितानलकानेत्र पतितान्करपल्लवैः ॥
स्त्रियो निवार्य प्रासाद गोपुराट्टालसंस्थिताः॥ ६६॥ निद्रासंभ्रांत नयनाश्चान्योन्यं दर्शयन्नगम्
॥ एवं तन्नगरं सर्वं चकितं चाभवत्तदा ॥६७॥ शत्रुघ्नोथ पुराद्धावत्सैन्येन निर्गतो बहिः॥ तावत-
द्रथवाहश्च संस्थिता एव ते पथि ॥ ६८॥ ताडिता अपि सूतेन नो तस्थुस्तुरगोत्तमाः॥ कुशस्याथ
लवस्याथ रथवाहस्तथैव च॥ ६९॥ ताडिता रुक्मदंडैश्च नोतस्थुः पथि संस्थिताः॥ आश्चर्येणाथ
तद्वृत्तं राघवाय न्यवेदयन् ॥७०॥ रामोऽपि श्रुत्वा चकित स्तदा चित्ते विचारयत् ॥ विचारः कर-
णीयोत्र ह्यविचारोद्य नोचितः ॥७१॥ अस्त्यत्र कारणं किंचित्प्रष्ट न्याद्य पुरोहितम् ॥ जानन्नपि रमा-
नाथः स्वयं सर्वं तथापि सः ॥७२॥ मानुषं भावमाश्रित्य पुरोहितमथाव्हयत् ॥ सोऽपि रामाज्ञया
शीघ्रं तां सभां प्रययौ गुरुः ॥७३॥ प्रत्युद्गम्य गुरुं रामो ददावासनमुत्तमम् ॥ ततः संपूज्य विधिव-
त्सर्ववृत्तं न्यवेदयत् ॥ ७४॥ तच्छ्रुत्वा राघवं प्राह वसिष्ठो मुनिसत्तमः ॥ वाल्मीकि स्त्वद्य प्रष्टव्यो
येन ते चरितं कृतम् ॥ ७५॥ तद्गुरोर्वचनं श्रुत्वा वाल्मीकिं स समाव्हयत् ॥ सोऽपि रामाज्ञया शी-
घ्रं ययौ श्रीराघवं प्रति ॥७६॥ प्रत्युद्गम्य मुनिं रामो ददावासनमुत्तमम् ॥ नत्वा संपूज्य विधिवत्स-

र्व वृत्तं न्यवेदयत् ॥ ७७॥ ततो विहस्य वाल्मीकिः प्रोवाच रघुनंदनम् ॥ सर्वं वेत्सि भवान् राम
किमर्थं मां तु पृच्छसि ॥७८॥ त्वं चेत्पृच्छसि रामात्र मानुषं भावमाश्रितः ॥ तर्हि ते कथयाम्य-
द्य शृणुष्व रघुनंदन ॥७९॥ त्वयात्र वर्जितं हास्यं त्वद्भित्या सकलं जनैः ॥ हास्यकारीणि कर्माणि
संत्यक्तावनीतले ॥८०॥ विवाहादि समुत्साहा कथा वार्तादि कौतुकम् ॥ ८१॥ यात्रा संवत्सरोत्सा-
हास्त्यक्ता एवावनीतले ॥ यद्यत्कर्म तोषकारि हास्यकारि च तन्नरैः॥ ८२॥ एकसंवत्सरन्नात्र क्री-
यते रघुनंदन ॥ उत्साहदेवताः सर्वास्तथा कर्मांगदेवता ॥ ८३॥ ञिंद्रादि लोकपालाश्च दृष्ट्वा स्वीयं
प्रपूजनम् ॥ लुप्तं भूम्यां ततो राम तद्वृत्तं कथयन्विधिम् ॥ ८४॥ ततो विधिश्च तच्छ्रुत्वा ऽसमर्थ
स्त्वां निवेदितुम् ॥ त्वयि कुंठितसामर्थ्यः सोऽश्वत्थे संप्रवेशितः ॥ ८५॥ हितार्थं निर्जराणां च सोऽ
द्य तिष्ठति पिप्पले॥ प्रक्षिपत्युपलान्राम छेतुकामान्समागतान् ॥ ८६॥ तन्मुनेर्वचनं श्रुत्वा राघवः
क्रोधमाययौ ॥ अहमेवाद्य गच्छामि सारं पश्यामि ब्रह्मणः ॥ ८७॥ कथं नाम रघुश्रेष्ठः स्वशीक्षां परि-
वर्तयेत् ॥ इत्युक्त्वाज्ञापयामास वाल्मीकिर्मुनिसत्तमः ॥ ८८॥ क्रोधं त्यज रघुश्रेष्ठ शृणुष्व वचनं
मम ॥ ८९॥ सच्चिदानंदस्वरूपस्त्वमानंद चरितं तव ॥ मयास्ति वर्णितं राम तत्किंचित्पुत्रयोर्मुखात्
॥ ९०॥ त्वयापि यज्ञसमये श्रुतं गंगातटे पुरा ॥ यस्य संश्रवणादेवानंदरूपो भवेन्नरः ॥ ९१॥ हास्यं
वर्जयसि त्वं चे तर्हि चे चरितं त्विदम् ॥ न जनाः कीर्तयिष्यंति दुःखरूपं स्मितं विना ॥ ९२॥ अन्य-
त्किंचित्प्रवक्ष्यामि प्रभो वृत्तं तवाग्रतः ॥ शतकोटिमितं तेत्र चरितं यन्मयाकृतम् ॥ ९३॥ पुरा त्वया

विभक्तं यत्सर्वत्र रघुनंदन ॥भागान्द्वारतवर्षांतर्गताद्रामायणात्प्रभो ॥९४॥सारंसारं विगृह्याथ
यद्यद्रम्यं मनोहरम् ॥ कथानकं तेन तेन व्यासेन मुनिनात्रहि॥९५॥ अष्टादश पुराणानि तथोप-
पुराणानि च ॥ कृतान्यन्येनि मुनयः षड्शास्त्रादिन्यनेकशः ॥९६॥अग्रे सर्वे करिष्यंति सारं
रम्यं विगृह्य च ॥ततोऽग्रे शोकरूपं च यत्त्वया दंडके वने॥९७॥ चतुर्दश वत्सरैश्च कैकेयी दुष्ट-
भावतः॥ कृतं चरित्रं सीताया विरहादपि राघव ॥९८॥ तत्किंचिच्छेषभूतं हि चतुर्विंशत्सहस्र-
कम् ॥तावन्मात्रं वदिष्यंति मद्वाल्मीके कृतं त्विति ॥९९॥ तत्सर्वं सकलं ज्ञात्वा भावी वृत्तं रघूत्तम
॥श्लोकस्तदुपयोग्यश्च पूर्वमेव मयेरितः ॥१००॥ युद्धं प्रभाते श्रोतव्यं शोकश्चैवापराण्हके॥ र-
तिर्निशायां श्रोतव्याऽनंदरामायणं सदा ॥१॥ युद्धं ज्ञेयं भारतं हि रतिर्भागवत स्मृतम् ॥ शेषभू-
त चतुर्विंशत्सहस्रं शोक उच्यते॥२॥ तव भावि वरेणैव तदानंद चरितं तव ॥शतकोटिमिते पूर्वं
यन्मयैव विनिर्मितम् ॥३॥ नवकांडमितं रम्यं यद्द्वादश सहस्रकम् ॥ नवोत्तर शतं सर्गं क्वचि—
त्स्थास्यति भूतले ॥४॥तव भावि वराद्राम न कोऽप्येनां मनोरमाम् ॥अष्टोत्तरशतैः सर्गैर्मितामे-
रु मनन्विताम् ॥५॥ तव कीर्तन मालां हि खंडयिष्यंति भूतले ॥ नवकांड युतं रम्यं दृष्ट्वा त्वत्तुष्टि
हेतवे ॥६॥ एतद्धि रक्षयिष्यंति यावच्चंद्र दिवाकरौ॥ यदा तत्खंडितं पूर्वं व्यासेन मुनिना तव
॥७॥शतकोटि मितं रामचरितं यन्मयाकृतम् ॥ तया किंचिद्धितं दृष्ट्वाहं तूष्णिमेव संस्थितः ॥८॥
भविष्यंति कलौ मंदमतयोऽल्पायुषो नराः॥ न समर्थो मम ग्रंथं त्विमं श्रोतुं कदापिहि ॥ ९ ॥

अतो व्यासेन मुनिना मत्काव्यं यत्पृथक् कृतम् ॥ तत्सम्यगित्यहं मत्वा परां तुष्टिं गतः प्रभो ॥ ११०॥
अतस्त्वां प्रार्थयाम्यद्य नवकांडमितं त्विदम् ॥ आनंदरामचरितं न विरूपय राघव ॥ ११ ॥ वर्जयिष्य-
सि चेद्धास्यं तदा दुःखमयं प्रभो ॥ भविष्यति शेषवद्धि चैतच्चापि मनोहरम् ॥ १२ ॥ अतस्ते कथ-
याम्यद्य येन तच्छीक्षितं भुवि ॥ भविष्यति मृषानैव येन तुष्टास्तु देवताः ॥ १३ ॥ भविष्यंति जना-
श्चापि सत्यामत्कविता भवेत् ॥ जना हास्यं तु सर्वत्र दंतानां दर्शनं विना ॥ १४ ॥ अस्यमाच्छाद्य व-
स्त्रेण कदा कौतुकदर्शनात् ॥ हास्यं लक्ष्मीसूचकं हि हसितं सौख्यकारकम् ॥ १५ ॥ मांगल्य हसि-
तं चैतद्धास्याच्छ्रेष्ठं न किंचन ॥ नारी स्मितानना यस्मिन्गेहे तन्मंदिरं स्मृतम् ॥ १६ ॥ लक्ष्म्यापि
स्थियते तत्र निश्चलं रघुनंदन ॥ स एव पुरुषो धन्यो यस्यस्याच्च स्मिताननम् ॥ १७ ॥ स एषः
पुरुषो निंद्यो यस्यास्यं क्रोधसंयुतम् ॥ निंदिता सा प्रमदापि यदास्यं क्रोधसंयुतम् ॥ १८ ॥ गर्हयं-
त्यतिहास्यं हि सर्वदा ते मुनीश्वराः ॥ अतस्त्वां प्रार्थयाम्येतन्मानयत्वं वचो मम ॥ १९ ॥ न करोति
विधिर्गर्वं त्वां तातं वेत्ति राघव ॥ आनयिष्यामि शरणं तवाहं चतुराननम् ॥ १२० ॥ एवं वाल्मीकि व
चनमंगीकृत्य रघूत्तमः ॥ एवमस्त्विति तं प्राह मुनिं तद्वाक्यगौरवात् ॥ २१ ॥ तद्रामवचनं श्रुत्वा वा-
ल्मीकिस्तुष्टमानसः ॥ शिष्यं संप्रेष्य ब्रह्माणमानयामास पिप्पलात् ॥ २२ ॥ अश्वाः सर्वे स तस्थुर्ययु
स्ते नगरीं प्रति ॥ ययौ सैन्येन शत्रुघ्नो रामपार्श्वे स्थिरोभवत् ॥ २३ ॥ रामपुत्रौ समायातौ पितुरग्रे निषि-
दतुः ॥ रामाज्ञया भारवाहस्ततो दूतै र्विसर्जितः ॥ २४ ॥ कृतेंद्रेण सुधावृष्टिः सुमंत्राद्याः सुजीविताः ॥

सुमंत्राद्या रामदूता स्तक्षाश्च राघवं ययुः ॥२५॥ नत्वा रामं सुमंत्रः स रामपार्श्वे स्थिरोभवत्॥ ततः सु-
रैर्ययाविंद्रः श्रीरामं प्रणनाम सः ॥२६॥ रामं नत्वाऽब्रवी त्ब्रह्मामयाायदपराधितम्॥ तत्क्षमस्व रघु-
श्रेष्ठ त्वत्पाल्याः सर्वदा वयम्॥ २७॥ पुरास्माकं हितार्थं हि त्वया रामावनीतले॥ अवताराश्च बहवो
धृतानो रिपवो हताः ॥२८॥ शंखासुरो वेदहर्ता मत्स्यस्वरूपेण दारितः॥ तथास्माकं सुधां दातुं न्युब्ज
तं मंदराचलम्॥ २९॥ दृष्ट्वा स कूर्मस्वरूपेण त्वयापृष्ठे धृतो गिरिः ॥ मत्पृथ्विति स्पर्द्धमानं हिरण्याक्षं
निहत्य च ॥३०॥ त्वया वाराहस्वरूपेण जलात्पृथ्वि समुद्धृता॥ प्रल्हाद वचनात्स्तंभादाविर्भूय त्वया
पुरा॥३१॥ नारसिंहस्वरूपेण हिरण्यकशिपु र्हतः ॥ तथा राज्यं हृतं दृष्ट्वा पुरामद्यवतस्त्वया॥३२॥
बलिर्वामन रूपेण पाताले विनिवेशितः॥ नृपैरधर्मनिरते दृष्ट्वा व्याप्ताभुवं पुरा ॥३३॥ त्वयै कविं-
शद्वारं हि जामदग्न्य स्वरूपिणा ॥पितुर्वैरं पुरस्कृत्य निःक्षत्रि पृथिवि कृता ॥३४॥ दशास्य कुंभ-
कर्णौ तौ रामस्वरूपेण राक्षसौ॥ पत्नीवैरं पुरस्कृत्य त्वया दुष्टौ हताविह॥३५॥ उद्धारितौ तौ स्वग-
णौ द्विवारं देवशापतः॥ एकवारं पुनस्त्वग्रे ताववोद्धरिष्यति॥३६॥ तद्ब्रह्मवचनं श्रुत्वा वसि-
ष्ठोमुनिसत्तमः॥ सर्वजानन्नपि जनान्ज्ञातुं पप्रच्छतं विधिम्॥१३७॥ इति श्रीशतकोटि रामच-
रितांतर्गत श्रीमदानंद रामायणे वाल्मीकिये राज्यकांडे उत्तरार्द्धे हास्यमोक्षणं नाम
त्रयोदशः सर्गः॥ शुभंभवतु॥ श्रीसीतारामचंद्रार्पणमस्तु॥

कापुसतळणी
ता. १४-५-१९५२

॥ श्रीगणेशायनमः॥ वसिष्ठउवाच ॥ कौ गणौ देवशप्तौ तौ वाथमुद्धारितौ वद ॥ पूर्वं द्विवारं रामे-
णाग्रे कथं चोद्धरिष्यति ॥१॥ तद्वसिष्ठवचः श्रुत्वा विधिः प्राह विहस्य तम् ॥ सर्वं वेत्सि भवान्लो-
कान् ज्ञातुं चेन्मां हि पृच्छसि ॥२॥ तर्हि वदाम्यहं सर्वं गणयोः शापकारणम् ॥ एकदायं महाविष्णु-
र्वैकुंठं रमया रहः ॥३॥ संस्थितश्च तदा द्वारि विष्णुं द्रष्टुं सुरोत्तमौ ॥ तावश्विनिकुमारौ हि समाजग्म-
तुरावणात् ॥४॥ समागतौ देववैद्यौ तौ दृष्ट्वा द्वाररक्षकौ ॥ जय विजय नामानौ तयोरग्रे प्रजग्मतुः ॥५॥
ताभ्या वैद्यौ तदा प्रोक्तौ विष्णुस्तिष्ठति वै रहः ॥ नायं कालो दर्शनस्य तच्छ्रुत्वा प्रोचतुः सुरौ ॥६॥
अधुना द्रष्टुमिच्छावो विष्णुं कथय तां गणौ ॥ द्वार्या वयोरागमनं वायुं श्रृणु तदीरितम् ॥७॥ तत्तयोर्व-
चनं श्रुत्वा तौ पुनः प्रोचतुर्गणौ ॥ न गच्छावो महाविष्णु मावां लक्ष्म्या रह स्थितम् ॥८॥ एवं त्रिवारं ता-
भ्यां तौ प्रोक्तौ नेत्युचतुर्गणौ ॥ तदाऽश्विनिकुमारौ तौ प्रोचतुः क्रोधमुर्छितौ ॥९॥ आवयोर्वचनं नैव
युवाभ्यां हि श्रुतं गणौ ॥ एतस्त्रिवारं तस्माद्धि युवां जन्मत्रयं भुवि ॥१०॥ लभ्यतश्च न संदेह तच्छ्रु-
त्वा वचनं तयोः ॥ गणावपि तयोः शापं ददतुर्देववैद्ययोः ॥११॥ विनापराधितः शापो यस्माद्दत्तस्तु चाव-
योः ॥ एकवारं युवां चापि जन्माप्तश्चातु वै भुवि ॥१२॥ एवं परस्परं शापं लब्ध्वा हाहेति चक्रुशुः ॥
तदा कोलाहलश्चासीदाव्हयामास ---- हरिः ॥१३॥ ततस्तत्सकलं वृत्तं ते प्रोचुर्जगदीश्वरम् ॥ चत्वा-
रस्ते महाविष्णुं प्रार्थयामासुरादरात् ॥१४॥ येन शीघ्रं विमुक्तिस्यात्तन्नो वद महेश्वर ॥ ततः प्रोवाच
तान्विष्णुर्मुक्तिः शीघ्रं शुभात्र हि ॥१५॥ मयि भक्त्या विरोधिन्या जायते नात्र संशयः ॥ सप्तजन्मांत-

रेरेव सद्भक्त्या जायते गतिः ॥१६॥ युष्माकं रोचते या सा भक्तिः कार्यावनीतले ॥ तद्विष्णोर्वचनं श्रु-
त्वा ते प्रोचुर्जगदीश्वरम् ॥१७॥ नोऽस्तु भक्त्या विरोधिन्या शीघ्रं ते दर्शनं पुनः ॥ तथेत्युक्त्वा रमानाथ
स्तान्सर्वान्विसर्जयत् ॥१८॥ ते जन्मानि ततः प्रापुर्जगत्यां मुनिसत्तमः ॥ जयो जातो हिरण्याक्षो हि-
-रण्यकशिपुस्तथा ॥ १९॥ जातोऽत्र विजयः पूर्वं तौ हतौ विष्णुना पुरा ॥ वाराहरूपिणानेन हिरण्या-
क्षो विदारितः ॥२०॥ नारसिंह स्वस्रूपेण हिरण्यकशिपुर्हतः ॥ ततः पुनर्द्वितीयं हि जन्म तौ प्रापतुर्भुवि
॥२१॥ जयो जातो रावणोऽत्र कुंभकर्णस्तथा परः ॥ जातो विजयनामा हि रामेणानेन तौ हतौ ॥२२॥ ता-
वश्विनिकुमारौ हि एको ऐरावण स्मृतः ॥ मैरावणश्च त्वपरो एवं तौ जनिता वधः ॥२३॥ पाताले वरदानाच्च
रामहस्तान्मृतिं गतौ ॥ अग्रे जयः शिशुपालो भविष्यति न संशयः ॥२४॥ विजयो वक्रदंतश्च भविष्यत्त्य
वनीतले ॥ द्वापारे कृष्णरूपेण शिशुपाल हरिः स्वयम् ॥२५॥ वधिष्यति वक्रदंतं तथैव मुनिसत्तमः ॥
एवं जन्मत्रयं शापा भुक्त्वा तौ भगवद्गणौ ॥ २६॥ जय विजय नामानौ पूर्ववत्स्थास्य तः शुभौ ॥ द्वार-
देशेऽस्य वै विष्णोर्वैकुंठे दुःखवर्जितः ॥२७॥ तावश्विनौ देव वैद्यौ पूर्ववद्दिवि तौ स्थितौ ॥ एवं मुने त्व
या पृष्ठं तन्मया परिवर्णितम् ॥२८॥ भगवद्गणयोः शापकारणं च पुरातनम् ॥ एवं राघव चाग्रे त्वं द्वापारे प-
रमे शुभे ॥२९॥ जरासंधादि वीरैश्च कंसाद्यैरपि भूतलम् ॥ खिन्नं दृष्ट्वात्रावतीर्य कृष्णरूपेण लीलया ३०
सर्वान् हत्वा तोषयुक्तं करिष्यसि महीतलम् ॥ तान्बौद्धदान्बुद्धरूपेण कलावग्रे विजेष्यसि ॥३१॥ वर्ण
संकरमालक्ष्य कलेरंत रघूत्तम ॥ कल्किरूपेण सकलान्संहारयसि लीलया ॥३२॥ एवं दशावताराश्च

तथान्येऽपि सहस्रशः॥ त्वया हितार्थमस्माकं धृताश्चाग्रे धरिष्यसि ॥३३॥ रामदास उवाच ॥ एवं स्तुवंतं ब्रह्माणं समालिंग्य रघूत्तम ॥ संन्निवेश्यासने प्राह त्वदर्थं च मुनेर्गिरा ॥३४॥ हास्यमाज्ञापितं किंचिज्जनाः कुर्वंतु ते सुखम् ॥ यथा वाल्मीकिना प्रोक्तं तथा मा विस्तरो स्तुवै ॥३५॥ तद्रामवचनं श्रुत्वा तदा तुष्टा सुरादयः॥ अथ पप्रच्छ वाल्मीकिं सभायां रघुनंदनः ॥३६॥ ममावतार पूर्वं स त्वया मच्चरितं कृतम् ॥ कथं ज्ञातं त्वया पूर्वं केन त्वामुपदेशितम् ॥३७॥ पूर्वजन्मनि कस्त्वं हि किं पुण्यं हि त्वया कृतम् ॥ तत्सर्वं विस्तरेणैवं कथयस्वाद्य मां प्रति ॥३८॥ तद्रामवचनं श्रुत्वा वाल्मीकि र्मुनिपुंगवः॥ सभायां राघवं सर्वं वक्तुं समुपचक्रमे ॥३९॥ वाल्मीकिरुवाच॥ सम्यक् पृष्टं त्वया राम सावधान मनाः श्रृणु॥ राम त्वन्नाममहिमा वर्ण्यते केन वा कथम् ॥४०॥ यत्प्रभावादहं राम ब्रह्मर्षित्व मवाप्तवान् ॥ पंपातीरे द्विजः कश्चिच्छंखो नाम महायशः ॥४१॥ गुरोः सिद्धिं गतश्चागान्नदीं गोदावरीं प्रति॥ तीर्त्वा भीमरथीं पुण्यां कांतारे कंटकाविले ॥४२॥ निर्जले निर्जने घोरे वैशाखे तापकर्षितः॥ वनं चोपविवेशासौ मध्यान्ह समये द्विजः॥४३॥ तदा कश्चिद्दुराचारो व्याधश्चापधरः षठः॥ निर्घृणः सर्वभूतेषु कालांतर इवापरः॥४४॥ तं कुंडलधरं विप्र दीक्षितं भास्करोपमम् ॥ खड्गेन भीषयित्वा तु जग्राह कुंडलादिकम् ४५ उपानहौ तच्छत्रं च वस्त्राणि च कमंडलुम् ॥ पश्चाद्दिता च तं विप्रं गच्छेत्याह स मूढधीः॥४६॥ तथा स गच्छन्पथि शर्कराविले - सूर्यांसि तप्तेज न वर्जिते खरे ॥ संतप्तपादस्तृणगोपिते स्थले - क्वचिच्च वस्त्रोपरि संस्थितो भवत् ॥४७॥ स वै द्रुतं संतपतोऽपि तिष्ठन् - होहेति बादीजप्रगाम विप्रः॥ दृष्ट्वा मुनिः

तं बहुखिन्नमानं- मध्यं गते पूष्णि यदाति तीव्रे॥ व्याधस्य जाता मतिरीदृशी वै॥ तस्मै ददामीति च
पादरक्षे ॥ स्वीयेन धर्मेण तु तास्करेण- वने गृहीतं सकलं च तन्मे ॥४९॥ चौर्येण चस्वधर्मेण यद्ध-
हितं वनांतरे ॥ तदीयमेव तत्सर्वं व्याधानां धर्मनिर्णयः॥५०॥ तस्मादुपानहौ दास्ये मुहुर्दुःखापनु-
त्तये ॥ तेन श्रेयो भवेद्यच्च तद्भवेन्मम पापिनः ॥५१॥ जीर्णौ चोपानहा वे तौ दिव्येऽस्ति पदयोर्म-
म॥ न चाभ्यामास्ति मे कार्यं तस्मात्तस्मै ददाम्यहम्॥५२॥ इति निश्चित्य मनसि तूर्णं गत्वा ददौ च
ते॥ शर्करा तप्तपादाय द्विजवर्याय सीदते॥५३॥उपानहौ गृहित्वा सौ निर्वृतिं चपरां ययौ॥सुखी भ-
वेति तं प्राह शंखस्तं पुनरब्रवीत्॥५४॥पूर्वपुण्येन ते जाता शुभाबुद्धिर्वनेचर॥ ययाबुव्याध वैशाखे
त्वया दत्ता वुपानहौ॥५५॥इति तद्वचनं श्रुत्वा शंखं व्याधोऽब्रवीद्वचः॥ किं मया चरितं पूर्वं तत्सर्वं वक्तु-
मर्हसि ॥५६॥ शंखउवाच ॥आतपो बाधते घोरो नात्र छाया न वै जलम्॥ तस्मात्स्थलांतरं गत्वा यत्र
छायांबु वर्तते॥५७॥ तत्र गत्वा जलं पीत्वा सुछायां च समाश्रिताः॥ ततस्ते सुकृतं पूर्वं सविस्तारं वदा-
म्यहम्॥५८॥इत्युक्तो मुनिना तेन व्याधः प्राह कृतांजलीः॥ इतो विदूरे सलिलं वर्तते च सरोवरे ५९
कपित्थास्तत्र वै संति फलभारेण पीडिताः॥गच्छाव स्तत्र संतुष्टिर्भविता नात्र संशयः॥६०॥ व्याधे-
नैव समादिष्टस्तेन साकं ययौ मुनिः॥कियद्दूरं ततो गत्वा ददर्शाग्र्यं सरोवरम्॥६१॥ स्नात्वा मध्यान्ह-
वेळायां तस्मिन्सरसि निर्मले॥निवाससि पधायाथ कृत्वा माध्यान्हिकीः क्रियाः॥६२॥ देवपूजां त-
था कृत्वा फलमूलमतंद्रितः॥ व्याधोपनीतं सुस्वादु कपित्थं श्रमहारि च ॥६३॥ भुक्त्वा सुखं जलं

पीत्वा सुछायां चसमाश्रितः ॥ सुखोपविष्ट स्तं प्राह पूर्वपुण्यं वदामि ते ॥ ६४॥ शाकले नगरे पूर्वं
द्विज स्त्वं वेदपारगः ॥ स्तंभो नाम महापापि तथा श्रीवत्स गोत्रजः ॥ ६५॥ तवेष्टा गणिका काचित्तदासी
त्संगदोषतः ॥ त्यक्त नित्यक्रियो नित्यं शुद्रवन्मूर्ख मार्गगः ॥ ६६॥ शून्याचारस्य मूढस्य परित्यक्त
क्रियस्य च ॥ ब्राह्मणी ते तदाचासीद्भार्या कांतिमयि तथा ॥ ६७॥ सा त्वां परिचयत्सुभ्रूः स वेश्यं ब्राह्मणा-
धमम् ॥ उभयोः क्षालयंती च पादौ त्वत्प्रीयकाम्यया ॥ ६८ ॥ उभयोरप्यधः से ते उभयोर्वचने रता ॥
वेश्यया वार्यमाणापि हितकार्ये तयोः स्थिता ॥ ६९॥ एवं शुश्रुषयंत्या हि भर्त्तारं वेश्ययासह ॥ जगाम
सुमहान्कालो दुःखितायां महीतले ॥ ७० ॥ अपरस्मिन् दिने भर्ता माहिष्यं मूळकान्वितम् ॥ अभक्षय-
त्क्षुद्रकर्मा निश्यावान् तिळमिश्रितान् ॥ ७१॥ तमपथ्यमसित्वा तु वमंश्चैव विरेचयन् ॥ अपथ्याद्दा-
रुणो रोगो व्यजायत भगंदरः ॥ ७२ ॥ सदह्यमानो रोगेण दिवारात्रं सुभूरिशः ॥ यावदास्ते गृहे वित्तं
तावद्वेश्या च संस्थिता ॥ ७३ ॥ गृहित्वा सकलं वित्तं पश्चान्नो वास मंदिरे ॥ अन्यस्य पार्श्वमासाद्य त-
स्थौ घोराति निर्घृणा ॥ ७४॥ ततः सु दीन वचनो व्याधिबाधासुपीडितः ॥ उक्तवान्सरुदन् भार्यां रु-
जा व्याकुल मानसः ॥ ७५॥ परिपालय मां देवि वेशासक्तं सुनिष्ठुरम् ॥ न मयोपकृतं किंचित्तव सुंदरि पा-
वनि ॥ ७६॥ को भार्यां प्रणतां पापो नानुमन्येत मूढधीः ॥ सं षंढो भवतित्यत्र दशजन्मानि सप्त च
॥ ७७॥ दिवारात्रं महाभागे निंदितः साधुभिर्जनैः ॥ पापयो मवाप्स्यामि त्वां साध्वीमवमन्य वै ॥ ७८॥
अहंक्रोधेन दग्धोऽस्मि सदा निष्ठुर भाषणः ॥ एवं ब्रुवाण भर्तारं कृतांजलिपुटाब्रवीत् ॥ ७९॥ न

दैन्यं भवता कार्यं न व्रीडा कांत मां प्रति॥ न चापि त्वयि मां क्रोधो वर्तते सुमनागपि ॥८०॥ पुरा
कृतानि पापानि दुःखानि हि भवंति हि॥ तानि या क्षमते साध्वी पुरुषोवास उत्तमः ॥८१॥ यन्मया
पापया पापं कृतं वै पूर्वजन्मनि॥ तद्भुंजत्या न मे दुःखं न विषादं कथं च न ॥८२॥ इत्येव मुक्त्वा भर्ता-
रं सा सुभ्रूरन्व पालयत्॥ आनीय जनकाद्वित्तं बंधुभ्यो वरवर्णिनि॥८३॥ क्षीरोदवासिनं विष्णुं भ-
र्तुर्देहे व्यचिंतयत्॥ शोधयंति दिवारात्रौ पुरीषं मुत्रमेव च ॥८४॥ नखेन कर्षति भर्तुः क्रीमीन्का-
ष्ठाच्छनैः शनैः॥ न सा स्वपति रात्रौ तु दिवा वा वरवर्णिनि॥८५॥ भर्तु दुःखेन संतप्ता दुःखिते दम-
था वदत्॥ देवाश्च पातु भर्तारं पितरो ये च विसृताः॥८६॥ कुर्वंतु रोगहीनं मे भर्तारं हृदि कल्मषम्॥
चंडिकायै प्रदास्यामि रक्तं मांसं सुखोद्भवम्॥८७॥ सुष्ठ्वन्नं महिषोपेतं भर्तुरारोग्य हेतवे॥ मोदका-
नपि दास्यामि विघ्नेशाय महात्मने॥८८॥ मंदवारे करिष्यामि सदैवाहमुपोषणम्॥ नोपभोक्ष्या-
मि मधुरं नोपभोक्ष्यामि वै घृतम्॥८९॥ तैलाभ्यंगं विहीनाहं सदा स्थास्यामि भूतले॥ जीवत्वयं रो-
गहीनो भर्ता मे शरदां शतम्॥९०॥ एवं सा व्याहरद्देवी वासरे वासरे गते॥ तदा चागान्मुनिः कश्चित्म-
हात्मा देवलाव्हयः॥९१॥ वैशाखमास घर्मार्तः स ययौ तस्य वै गृहे॥ तदा ते भार्यया चोक्तं वैद्योयं
गृहमागतः॥९२॥ तेन ते रोगहानिः स्यात्तस्यातिथ्य करोम्यहम्॥ यद्याज्ञापयसि त्वं मां नोचेन्नैव क-
रोम्यहम्॥९३॥ ज्ञात्वा त्वां धर्म विमुखं भिषग्व्याजे न वंचितः॥ तस्यातिथ्यं तु वै कर्तुं दत्ताज्ञा वै पु-
रा त्वया॥९४॥ तस्य पत्न्यै तदा तुष्टा पूजयामास सा मुनिम्॥ पादावनेजनं कृत्वा तज्जलं मूर्ध्नि ते

वहत् ॥९५॥ पातुं तुभ्यं ददौ तीर्थं त्वामुक्त्वा भेषजांत्विति ॥ पानकं च ददौ तस्मै घर्मार्तय महात्म-
ने ॥९६॥ दिव्यान्नैर्भोजयामास सुगंध व्यजने ददौ ॥ त्वयानुमोदिता सायं घर्मतापं न्यवारयत् ९७
स प्रातरुदिते सूर्ये मुनिर्ग्रामांतरं ययौ ॥ अथ चाल्पेन कालेन सन्निपाता भवत्तव ॥९८॥ त्रिकूट
मूख आधात्सीद्दर्तांगुलिमखंडयत् ॥ कफेन दंतपंक्तिभ्यां मीलिताभ्यां दृढं तदा ॥९९॥ ते वक्त्रेंऽ
गुलि खंडं तत्स्थितमेवांतिको मलम् ॥ खंडयित्वांगुलिं तस्याः पंचत्वं त्वगतः पुरा ॥१००॥ शय्यायां
सुमनोज्ञायां स्मरन् तां पुंश्चलीं हृदि ॥ मृतं विज्ञाय भर्तारं भार्या कांतिमयिं तव ॥१॥ विक्रिणि त्वा
स्ववलयं गृहित्वा चे धनं बहु ॥ चक्रु चितिं तेन साध्वि मध्ये कृत्वा पतिं तदा ॥२॥ समालिंग्य भुजा-
भ्यां तं पादौ चाश्लिष्य पादयोः ॥ मुखे मुखं निजं कृत्वा हृदये हृदयं तथा ॥३॥ गुह्ये कृत्वा तु गुह्यं मेवं
सा राममानसा ॥ दाहयामास कल्याणी भर्तु देहं रुजान्वितम् ॥४॥ आत्मना स तन्वंगी ज्वलिते जा-
तवेदसि ॥ विमुच्य देहं सह सा जगामे- पतिं नमस्कृत्य मुरारि लोकम् ॥५॥ त्वमंतकाले गणिकेच्छ-
याहि- देहं त्यक्त्वा त्यक्तकर्मा दुरात्मा ॥ व्याधं जन्मे प्राप्यते द्योति धर्मे- हिंसासक्तः सर्वदोद्वेगका-
री ॥६॥ दत्ता त्वया पानकमर्पितुं वै- मासेनुज्ञाधवे सा द्विजाय ॥ भिषग्व्याजा तेन जाता सुबुद्धि- धर्मं
कर्तुं पादरक्षेऽर्पिते माम् ॥७॥ धृतं मूर्ध्ना पादशौचावशेषं- जलं मुनेः सर्व पापापहारि ॥ तेनैव ते संग-
तिर्मेवनेऽस्मिन्- जाता श्रोतुं स्वीय पुण्यं मतिश्च ॥८॥ मुखे कृत्वांगुलिं यस्मान्मृतः पूर्वभवांतरे ॥ त-
स्मादत्र वने मांसाहारस्ते भूद्वनेचरः ॥९॥ वेश्या सा भिल्लिनी जाता भार्या या तव वर्तते ॥ शय्यायां मर-

णातेऽत्र शयनं भुवि सर्वदा ॥ ११०॥ इति ते सर्वमाख्यातं पूर्वजन्मनि यत्कृतम् ॥ तत्कर्म पुण्य पापं
च दृष्टं दिव्येन चाक्षुषा ॥११॥ अतः परं भाविवृत्तं श्रुणु तेऽहं वदामि वै ॥ कृणुर्नाम मुनिस्त्वग्रे क-
स्मिंश्चिच्च सरावरे ॥१२॥ करिष्यति तपस्तीव्रं चान्नव्यापारवर्जितः ॥ पश्चात्तपोविरामांते तन्ने-
त्राभ्यां बहिः श्रुतम् ॥१३॥ वीर्यं दृष्ट्वोरगी काचित्स्वयं खलितमंजसा ॥ ग्रहिष्यति ऋतोकाले तस्या-
स्त्वहि जनिष्यसि ॥१४॥ किराताः पालयिष्यंति किरातस्त्वं भविष्यसि ॥ उपानहावर्पितेऽद्य यस्मात्त
त्पुण्यतस्तदा ॥१५॥ भविष्यति संगति स्ते वने सप्तमुनीश्वरैः ॥ तेषां प्रसादाद्वाल्मीकि र्मुनि स्त्वं हि भ-
विष्यसि ॥१६॥ यस्त्व रामकथां दिव्यां सुप्रबंधैः करिष्यसि ॥ वाल्मीकि रुवाच ॥ इति व्याधं समा-
दिश्य धर्मान्वैशाख जानपि ॥१७॥ उपविष्य सविस्तारं प्रतस्थे गौतमीं ययौ ॥ स शंख कुंडलाद्यै-
श्च तद्दतै स्तुष्टमानसः ॥१८॥ व्याधोऽपि शंखवचना तस्मिन्नेव वने चिरम् ॥ वन्यै वैशाखमासी-
यान् धर्मान्प्रीत्याकरोच्छुभान् ॥१९॥ व्याधजन्मात्ययेजातः कृणोः पुत्रस्त्वहं ततः ॥ पन्नगीजठरो-
द्भूत स्त्वरण्ये रघुनंदन ॥१२०॥ अहं पुरा किरातेषु किरातैः सहवर्द्धितः ॥ जन्ममात्र द्विजत्वं मे शूद्रा-
चार रतः सदा ॥२१॥ शूद्रायां बहवः पुत्रा उत्पन्ना मे जितात्मनः ॥ ततश्चोरैश्च संगम्य चोरोहमभव-
न्युनः ॥२२॥ धनुर्बाणधरो नित्यं जीवानामंतकोपमः ॥ एकदा मुनयः सप्त दृष्टा महति कानने ॥२३॥
साक्षान्मया प्रकाशं तोज्वलनार्क समप्रभाः ॥ तानन्वधावन्लोभेन तेषां सर्व परिच्छदान् ॥२४॥ गृहितु
कामस्तत्राहं तिष्ठतां तिष्ठतामिति ॥ अब्रुवन्मुनयोऽपृच्छन्किमायासि द्विजाधम ॥२५॥ अहं तानब्रु-

वं किंचिद्ददातु मुनिसत्तमाः ॥ पुत्रदारादयः संति बहवो मे बुभुक्षिताः ॥२६॥ तेषां संरक्षणार्थाय चरा-
मि गिरिकानने ॥ ततो मामूर्ध्वमग्राः पृच्छ गं कुटुंबकम् ॥२७॥ यो यो मया प्रतिदिनं क्रीयते पाप-
संचयः ॥ यूयं तद्भागिनः किं वा नेति चेति पृथक् पृथक् ॥२८॥ एवं स्थास्यामहे यावदागमिष्यसि नि-
श्चयात् ॥ यत्पापं ब्रह्महत्यायां यत्पापं मद्यपानतः ॥२९॥ तेन पापेन लिंपामो वयं गच्छामहे यदि ॥
यत्पापं हेमचौर्येण गुरुदारागमाच्चयत् ॥१३०॥ तेन पापेन लिंपामो त्वामपृष्ट्वा वनेचर ॥ चेद्व्रजा-
मो वयं सर्वे त्वितस्ते पृष्ठतोऽद्य हि ॥३१॥ सांसर्गजनितं पापं ब्रह्मस्वहरणाच्चयत् ॥ तेन पापेन
लिंपामो यदि गच्छामहे वयम् ॥३२॥ एवं तच्छपथै र्नानाविधैः प्रत्ययमागतः ॥ तथेत्युक्त्वा गृहं
गत्वा मुनिभिर्यदुदीरितम् ॥३३॥ अपृच्छत्पुत्रदारादिन्नै रुक्तोहं रघूत्तम ॥ पापे तवैव तत्सर्वं
वयं तु फलभागिनः ॥३४॥ तच्छ्रुत्वा जातनिर्वेदो विचार्य पुनरागतः ॥ मुनयो यत्र तिष्ठंति करुणा-
-पूर्णमानसाः ॥३५॥ मुनिना दर्शनादेव शुध्दांतःकरणो भव ॥ धनुरादि परित्यज्य दंडवत्पतितोऽ-
स्म्यहम् ॥३६॥ रक्षध्वं मां मुनिः श्रेष्ठाः पतितं निरयार्णवम् ॥ इत्यग्रे पतितं दृष्ट्वा मामूचुर्मुनिसत्त-
माः ॥३७॥ उत्तिष्ठोत्तिष्ठ भद्रं ते सफलः सत्समागमाः ॥ उपदेक्ष्यामहे तुभ्यं किंचित्तेनैव मोक्ष्यसे ३८
परस्परं समालोच्य दुर्वृतोऽयं द्विजाधमः ॥ उपेक्ष्य एव सद्वृत्तै स्तथापि शरणं गताः ॥३९॥ रक्षणीयः
प्रयत्नेन मोक्षमार्गोपदेशतः ॥ इत्युक्त्वा राम ते नाम व्यत्ययस्ताक्षरपूर्वकम् ॥१४०॥ मुनयो मामुपदि-
शुर्मत्कृपापूर्णमानसाः ॥ एकाग्रमनसात्रैव मरेति जप सर्वदा ॥४१॥ आगच्छामः पुनर्यावत्तावदुक्तं

सदा जप ॥ इत्युक्त्वा प्रययुः सर्वे मुनयो दिव्यदर्शनाः॥ ४२॥ अहं यथोपदिष्टं तैस्तथा करवमंजसा॥ जपन्नैकाग्रमनसा बाह्यं विस्मृतवानहम्॥ ४३॥ साक्ष्यर्थं तपसस्तत्र दंडोग्रे स्थापितो मया॥ एवं बहुतिथे काले गते निश्चलरूपिणः॥ ४४॥ सर्वसंगविहीनश्च वल्मीको भून्ममोपरि॥ दंडोग्रेसनगोरम्यो बभूव मत्तपोबलात्॥ ४५॥ ततो युगसहस्रांते ऋषयः पुनरागमन्॥ मामूचुर्निर्गमस्वेति तच्छ्रुत्वा तूर्णमुत्थितः॥ ४६॥ बाल्मीका निर्गतश्चाहं निहारीदिव भास्करः॥ मामप्याहुर्मुनिगणा वाल्मीकि स्त्वं मुनीश्वरः॥ ४७॥ वल्मीकात्संभवो यस्माद्द्वितीयजन्म ते भवत्॥ इत्युक्त्वा ते ययुर्दिव्यगतिं रघुकुलोत्तम ॥ ४८॥ अहं ते रामनाम्नश्च प्रभावादिदृशोभवम्॥ एकादशं भुवचसा यं विधिः श्रुतवान् तव ॥ ४९॥ चरित्रं वेदवाक्यैश्च कैलासे परमेशुभे॥ अनेन विधिना तच्च कथितं नारदाय हि॥ १५०॥ नारदः कथयामास वेदवाक्यैर्ममात्र तत्॥ ततः क्रौंचं हतं दृष्ट्वा व्याधेन तमसातटे॥ ५१॥ शोचतीं सांत्वय क्रौंचीं ममास्यान्निर्गतस्तदा॥ द्वात्रिंशदक्षरैः श्लोकः शोकः श्लोकत्वमागतः॥ ५२॥ ततोऽनेन विधिनापि चरितं ते प्रवर्णितम्॥ मामागत्ये तु संक्षेपादर्पिता मां वरा अपि॥ ५३॥ ततोऽस्य ब्रह्मणो वाक्यात्कृतवान्चरितं तव॥ आनंददायकं रम्यं शतकोटि प्रविस्तरम्॥ ५४॥ एवं त्वया यथा पृष्टं तथा सर्व निवेदितम्॥ एवं वाल्मीकि वाक्यैश्च सर्वजानन्नपि प्रभुः॥ ५५॥ पृष्ट्वा श्रोतुं जनान्सर्वान् श्रावयामास राघवः॥ एतस्मिन्नंतरे रामं वाक्पतिः प्राह सादरम्॥ ५६॥ राम किं चरितं गेयं तवानंदस्वरूपिणः॥ यस्य नामाद्यवर्णैश्च शब्दमात्रोत्र गीयते॥ ५७॥ लौकिका वैदिकावापि अकाराद्यास्तु

षोडश ॥ स्वरा स्तथैव वर्णाश्च चतुस्त्रिंशच्छुभावहाः॥ ५८॥ ककाराद्याः क्षकारांता मंत्ररूपा शुभाव-
हाः॥ एवं वर्णाश्च पंचाशद्ये कीर्त्यंते नरैर्भुवि॥५९॥ ते त्वन्नामाद्य वर्णाश्च सर्वे ज्ञेया रघूत्तम॥ तव
नामाद्य वर्णैश्च व्याप्तं सर्वं चराचरम्॥१६०॥ चराचराणां सर्वेषां यानि नामानि तानि ते॥ तेषु वर्णपर
त्वेन नामान्यद्य वदामि ते॥ ६१॥ संक्षेपाच्चैव पंचाशत्तानि श्रृण्वंतु सज्जन्नाः॥ अनंत आनंदमय श्चेष्टा-
पूर्त फलप्रदः॥ ६२॥ ईश्वरश्च तथोत्कृष्ट श्चोर्ध्वरेता ऋतंभरः॥ ॠमृक्तश्च ऌशश्चैव ॡपकश्चैक ए-
व च॥६३॥ ऐश्वर्यद श्चोजदश्च तथैवौदार्यचंचुरः॥ अंतरात्मा चार्द्धगर्भ स्तथैव करुणाकरः॥६४
खड्गीच गतिदश्चैव घनश्यामस्तथैव च॥ ङःणनश्च मिताशेष दुश्श्रुतश्च तथैव हि॥ ६५॥ छत्री जग-
न्मयश्चैव झषरूपी ञंटेश्वरः॥ टनत्कारिधनुष्ठान बंधर्डमरुसत्करः॥ ६६॥ श्रीरामचंद्राय॥ ढणदृ
नितपापश्च णकर्णश्च तथैव हि॥ तपोरूपस्थबश्चैव दक्षो धन्वीत एव च॥ ६७॥ नष्टोधरण धीरश्च तथै-
व परमेश्वरः॥ तथा फरशुरामश्च तथा बलिवरप्रदः॥ ६८॥ भगवान्मधुघातीच तथा यज्ञफलप्रदः॥ रघु-
नाथश्च लक्ष्मीशो वरिष्ठश्च तथैव हि॥ ६९॥ शरण्यः षड्गुणैश्वर्यसंपन्नश्च तथैव हि॥ सर्वेश्वरो हयग्रीवः
क्षेमी नामानि तेत्विति॥ १७०॥ पंचाशद्वर्ण चिन्हानि चैभिर्वर्णैर्जग त्रयम्॥ व्याप्तं श्रीरामसर्वत्र घ वर्णे-
न घटस्मृतः॥ ७१॥ प वर्णेन पटोज्ञेय स्त्वेवं वर्णात्मकं जगत्॥ एकैकस्य च वर्णस्य भेदैर्नामानि ते पृ-
थक्॥ ७२॥ नाहं समर्थो व्याख्यातुं पंचास्योऽपि न च क्षमः॥ यत्र शेषः सहस्रास्यो वर्णने कुंठित
स्त्वभूत्॥ ७३॥ एवं ते महिमा राम कोऽत्र वर्णयितुं क्षमः॥ तथापि धन्यो वाल्मीकि र्येन ते चरितं कृ-

तम्॥७४॥ शतकोटिमितं राम तवैव कृपया प्रभो॥ रामदास उवाच॥ इत्युक्त्वा स गुरुर्दैवै राघवेणाति पूजितः॥७५॥ पृष्ट्वा रामं ययौ स्वर्गं सत्यलोकं ययौ विधिः॥ वाल्मीकिश्चापि प्रययौ चित्रकूटाश्रमं निजम्॥७६॥ तदारभ्य जनाः सर्वे चक्रु हास्यं मुदैव ते॥ मांगल्य कर्मण्युत्साह कर्माणि जगतीतले॥७७॥ चक्रुः सर्वे पूर्ववच्च नाति हास्यं प्रचक्रिरे॥ स्त्रिभिर्नराः स संतुष्टा क्रीडा हास्यादि चक्रिरे॥१७८॥ इति श्रीशतकोटि रामचरितांतर्गत श्रीमदानंद रामायणे वाल्मीकिये राज्यकांडे उत्तरार्द्धे वाल्मीकेर्जन्मत्रय वर्णनं नाम चतुर्दशः सर्गः॥ शुभं भवतु ॥श्रीसीतारामचंद्रार्पणमस्तु॥

कापुसतळणी

वैशाख वद्य १४ शके १८७४

ख्रिस्ताब्दः २२-५-१९५२

॥श्रीगणेशायनमः॥ रामदासउवाच ॥ रामराज्ये सदानंदः सर्वानासीज्जनान्भुवि॥ नासीत्कुत्रापि
कलहश्चौर्य निंदा भयं तदा॥१॥ राज्यमासीद संपन्नं समृध्द बलवाहनम्॥ पंडितै हृष्टपुष्टश्च रम्य
हाटकभूषणैः॥२॥ संजुष्टमिष्ट पूर्तानां धर्माणां नित्य कर्तृभिः॥ सदा संपन्न शस्यं च सुचिर क्षेत्रसं-
कुलम्॥३॥ सुदेशं सुप्रजं सुस्थं सुतृणं बहु गोधनंम्॥ देवतायतनानां च राजिभिः परिराजितम् ४
सुयूपा यत्र वै ग्रामाः सुवित्तर्द्धि विराजिताः॥ सुपुष्प कृत्रिमोद्यानाः स सदा फलपादपाः॥५॥ सपद्म-
नीक कासारा यत्र राजंती भूमयः॥ स दंभा निम्नगा राजीर्नयत्र जनता क्वचित्॥६॥ कुलान्येव कुलिनानि
न चान्याय धनानि च॥ विभ्रमो यत्र नारीषु न विद्वत्सु चकर्हिचित्॥७॥ नद्यः कुटिलगामिन्यो न य-
त्र विषये प्रजाः॥ तमोयुक्ताः क्षपा यत्र बहुलेषु न मानवाः॥८॥ रजोयुज स्त्रियो यत्र न धर्म बहुला न-
राः॥ धनैरंधो न यत्रास्ति जनो नैव च भोजनम्॥९॥ अनयः स्यंदनं यत्र न च वै राजपुरुषः॥ दंडः
परशु कुद्दाल वाल व्यजन राजिषु॥१०॥ आतपत्रेषु नान्यत्र क्वचित्क्रोधापराधजः॥ अन्यत्राक्षि-
क वृंदभ्यः क्वचिन्नपरिदेवनम्॥११॥ आक्षिका एव दृश्यंते यत्र पाशकपाणयः॥ जाडयवार्ता जलेष्वे
व स्त्रीमध्या एव दुर्बलाः॥१२॥ कठोरहृदया यत्र सीमंतिन्यो न मानवाः॥ औषधेष्वेव यत्रास्ति कु
ष्टयोगो न मानवे॥१३॥ वेधोप्यंतः सुरत्नेषु शूलं मूर्ति करेषु वै॥ कंपः सात्विक भावोत्थो न भयात्क्वा-
पि कस्यचित्॥१४॥ संज्वरः कामजो यत्र दारिद्र्यं कलुषस्य च॥ दुर्लभत्वं पातकस्य सुकृतेन च व-
स्तुनः॥१५॥ ईभा एव प्रमत्ता वै युध्द वीच्योर्जलाशये॥ दानहानि र्गजेष्वेव तमेष्वेव हि कंटकाः १६

जनेष्वेव विहारा वै न कस्यचि दुरस्थली ॥ बाणेषु गुणविश्लेषो बंधोक्तिः पुस्तके दृढा ॥१७॥ स्नेह-त्यागः सहैवासि यत्र पाशुपते जने ॥ दंडवार्ता सदा यत्र कृत संन्यासकर्मणाम् ॥१८॥ मार्गणाश्चापकेष्वे-व भिक्षुका ब्रह्मचारिणः ॥ १९ ॥ प्रायो मधुव्रता एव यत्र चंचलवृत्तयः ॥ इत्यादि गुणवद्देशे रामो राज्यं शशास सः ॥ २० ॥ धर्मेण राजधर्मज्ञः सीतारामः प्रतापवान् ॥ चकार राज्यं निर्द्वंद्वमयोध्याया सुनिश्चल म् ॥ २१ ॥ विधाय राजधानीं तां विस्तृतां परिखान्विताम् ॥ एधां चक्रे महाबुद्धिः प्रजाधर्मेण पालयन् ॥२२॥ ततापसूर्यइवस दुर्हृदां हृदि नेत्रयोः ॥ सोमवत्सुहृदो मासीन्माननेषु स्वकष्वपि ॥२३॥ अखंड-मारवंड वत्कोदंडं कलयन् रणे ॥ पलायमानरालोकि शत्रुसैन्य बलाहकैः ॥२४॥ सधर्म राजवद्राजा धर्माधर्म विवेचकः ॥ अदंडे दंडयन् रामो दंड्यांश्च परिदंडयन् ॥२५॥ पाशीचपाशयाचक्रे वैरी च-क्रं विदूरगः ॥ सोऽभूत्पुण्यजनाधीशो रिपुराक्षसवर्द्धनः ॥२६॥ जगत्प्राण समानश्च जगत्त्रण न तत्परः ॥ राजराजः स एवाभूत्सर्वेषां धनदः स ताम् ॥२७॥ स एव रुद्रमूर्तिश्च प्रेक्षिष्ट रिपु भीष-णे ॥ विश्वेदेवास्ततस्त तु स्तुवंति च भजंति च ॥२८॥ असाध्यः स हि साध्यानां वसुभ्यो वसुना-धिकः ॥ ग्रहाणां विग्रह धरोदस्त्रतोजस्त्र रूपधृक् ॥ २९ ॥ मरुद्गणानगणयं स्तुषितां स्तोषयन्गुणैः ॥ सर्व विद्याधरो यस्तु सर्व विद्याधरेष्वपि ॥३०॥ अगर्वो न गंधर्वान् यश्चक्रे निजगीतिभिः ॥ ररक्षु र्यक्ष रक्षांसि तद्दुर्ग स्वर्ग सोदरम् ॥३१॥ नागा नागांसि चक्रुस्ते तस्य नागे बलीयसः ॥ दनुजा मनुजा कारं कृत्वा तंतु सिषेविरे ॥३२॥ जाता गुह्यचरा यस्य गुह्यकाः परितो नृपम् ॥ संसेविष्यामहे राजन्

सुरास्त्वान्स्व स्व वैभवैः ॥३३॥ वयं यतस्तद्विषये सुरा वासोऽपि दुर्लभः॥ इत्युक्त्वा रामचंद्रं ते
मघवाद्याः सिषेविरे ॥३४॥ अशिक्षयन् क्षितिपतेः रिहयस्य तुरंगमान्॥ आशुगश्चाशुगामित्वं
पावमाने पथि स्थितः ॥३५॥ अगजान् यस्य तु गजान् नगवर्ष्म सुवर्ष्मणः॥ अजस्रदानि नो दृ-
ष्ट्वा भवन्नन्येपि दानिनः॥३६॥ सदोजिरे च बध्द्वारो योध्द्वारश्च रणाजिरे॥ न यस्य शास्त्रै र्वि-
जिता न शस्त्रैः केचितत्क्वचित्॥३७॥ न नेत्र विषये जाता विषये यस्य भूभृतः॥ सदा नष्टपदा
द्वेष्या स्तथा नष्टापदाः प्रजाः ॥३८॥ कलावानेक एवास्ति त्रि दिवेऽपि दिवौकसाम्॥ तस्य क्षो-
णि भृतः क्षोण्यां जनाः सर्वे कला लयाः ॥३९॥ एक एवहि कामोऽस्ति स्वर्गे सोऽप्यंग वर्जिताः॥ सां-
गापांगाश्च सर्वेषां सर्वे कामाय तद्भुवि ॥४०॥ तस्योपवर्तनेऽप्येको न श्रुतो गोत्रभित्क्वचित्॥
स्वर्गे स्वर्गसदामीशो गोत्रभित्परिकीर्तितः॥ ४१॥ क्षयी च तस्य विषये कोऽप्याकर्णि न केनचित्
॥ त्रिविष्टपे क्षपानाथः पक्षे पक्षे क्षयिष्यते॥४२॥ नाके नवग्रहाः संति देशास्तस्या नवग्रहाः॥ हि-
रण्यगर्भ स्वर्लोकेष्वेक एव प्रकाशते ॥४३॥ हिरण्यगर्भाः सर्वेषां तत्पराणामिहालयाः ॥सप्ताश्व
एकः स्वर्लोके नितरां भासतेंऽशुमान्॥ ४४॥ सदंशुका प्रतिगृहं बव्हश्वास्तत्पुरौकसः॥ सदप्स-
रा यथा स्वर्भूतत्पूर्यपि सदप्सराः ॥४५॥ एकैव पद्मा वैकुंठे गीयते विष्णुवल्लभा॥ तत्पौराणां गृहे
ष्वासन् शतपद्मा पृथक् पृथक्॥ ४६॥ अनीतयश्चलध्दामा न राजपुरुषाः क्वचित्॥ गृहे गृहेऽत्र
धनदा ना एको अलकापतिः॥ ४७॥ एवं रामो महान् श्रेष्ठः शौंडिर्य गुणशोभनः॥ सौभाग्यशोऽ

भिरूढ्यः शौर्यौदार्य गुणान्वितः॥ ४८॥ विजितानेक समरः श्री समर्पित मार्गणः॥ सीता रंजीत वामांग उग्रःपर पुरंजयः॥ ४९॥ अनेक गुण संपूर्णः पूर्ण चंद्र निभ द्युतिः॥ सततावभृथक्लिन्न मूर्धजः क्षितिपर्षभः॥५०॥ प्रजापालन संपन्नः कोश प्रीत्याणि भूसुरः॥ पार्वतीकांतचरणयुगुल ध्यान तत्परः॥५१॥ विश्वेश्वर कथाऽलाप परिक्षिप्त दिनक्षपः॥ सीता संक्षालितपद स्तत्क्रीडा परितोषितः॥५२॥ शशास राज्यं धर्मेण बंधु पुत्र समन्वितः॥ रामे शासति साकेतपुर्यां राज्यं सुखेन वै॥५३॥ हृष्ट पुष्टः प्रजाः सर्वाः फलवंतो भवन्नगाः॥ आसन्सदा सुकुसुमे र्विनम्राः सौख्यदा नृणाम्॥ ५४॥ एकपत्नीव्रताः सर्वे पुमांस स्तस्य मंडले॥ नारीषु काचिन्नैवासीदं पतिव्रत धर्मिणि॥ ५५॥ अनधीती न विप्रोभू नशूरो नैव बाहुजः॥ वैश्योऽनभिज्ञ नैवासीदर्थो पार्जन कर्मसु॥ ५६॥ अनन्य वृत्तयः शूद्रा द्विज सुश्रुषणं प्रति॥ तस्य राष्ट्रे भवन्सीता रामचंद्रस्य भूपते॥ ५७॥ अविप्लुत ब्रह्मचर्या स्तद्राष्ट्रे ब्रम्हचारिणः॥ नित्यं गुरुकुलाधीना वेदग्रहण तत्परः॥ ५८॥ अन्येऽ नुलोम जन्मानः प्रतिलोम भवाअपि॥ स्वपारं पर्यंतो द्रष्टुं मनागवर्त्मन तत्त्यजुः॥ ५९॥ अनपत्यो न तद्राष्ट्रे धनं हीनस्तु कोऽपि न॥ अविरुद्ध सेविनो कश्चिदकांड मृतिभाक् नच॥ ६०॥ न शठा नैव वाचाटा वंचका नो न हिंसकाः॥ न पाखंडा न वै भंडा न रंडा नच शौंडिका॥ ६१॥ श्रुति घोष हि सर्वत्र शास्त्रवादः पदे पदे॥ सर्वत्र सुभगालापा मुदा मंगलगीतयः॥ ६२॥ वीणा वेणु प्रवादाश्च मृदंग मधुरस्वनाः॥ सोमपानं विनान्यत्रपान गोष्ठी न कर्मगा॥ ६३॥ मांसाशिनः पुरोडाश नैवान्यत्र कथंचन॥ नदुरोदरिणो यत्रा धर्मिणो न न तस्कराः ६४

पुत्रस्य पित्रोः पदयोः पूजनं देवपूजनम् ॥ उपवासो व्रतं तीर्थं देवताराधनं परम् ॥ ६५॥ नारीणां
भर्तृपदयोरर्चनं तद्वचः श्रुति॥ समर्चयंति सततं मनुजा निजमग्रजम् ॥ ६६॥ समर्चयंति मुदिता
भृत्याः स्वामिपदांबुजम् ॥ हीनवर्णैरग्रवर्णो वर्ण्यते गुणगौरवैः ॥ ६७॥ वरिवस्यंति भूयोऽपि त्रिका-
लं भूमिदेवताः॥ सर्वत्र सर्वे विद्वांसः समर्चंते मनोरथैः ॥ ६८॥ विद्वद्भिश्च तपोनिष्ठा ज्ञानिभिः शिव-
लिंगिनः॥ ६९॥ मंत्रपूतं महार्हं च विधियुक्तं सुसंस्कृतम् ॥ वाडवानां मुखाग्नौ च हूयतेऽहर्निशं हविः
॥ ७०॥ वापिकूप तडागाना मारामाणां पदे पदे ॥ शुचिभिर्द्रव्यसंभारैः कर्तारो यत्र भूरिषः ॥ ७१॥ तद्राष्ट्रे
हृष्टपुष्टाश्च दृश्यंते सर्वजातयः ॥ अनिंद्य सेवासंपन्ना विना मृगयु सैनिकान् ॥ ७२॥ यस्य राज्ये पता-
कासु चंचला श्रीन राष्ट्रके ॥ ऐरावतस्त्वेक एव शुभ्रः स्वर्गे गजो महान् ॥ ७३॥ चतुर्दंतो रामराज्ये तद्व-
न्नागा सहस्रशः ॥ चंद्रसूर्यावुभावेव शोभेते गगनांगणे ॥ ७४॥ रामराज्येत्र नारीणां सीमंथस्था अ-
नेकशः॥ वृषस्त्वेकः स कैलासे गीयते परमःसितः ॥ ७५॥ तद्वद्वृषा रामराज्ये कृषिकर्माणि योजिताः
॥ एणस्त्वेकश्चंद्रलोके कृष्णवर्णो मनोरमः ॥ ७६॥ तद्वदत्र शिशूनां हि क्रीडार्थं तु अनेकशः ॥ अ-
प्सरस्सु वरा स्वर्गे गीयते सा तिलोत्तमाः ॥ ७७॥ गेहे गेहे संति नार्य्यः सर्वास्त्वत्र तिलोत्तमाः ॥ रु-
क्मभूषण भूषाढया गति नूपुर निस्वनाः ॥ ७८॥ सहस्राक्षस्त्वेक एव महान्स्वर्गे प्रगीयते ॥ राम-
राज्ये चामराणि सहस्राक्षीण्यनेकशः ॥ ७९॥ सुधापानं त्वेकमेव स्वर्गे तु परमं वरम् ॥ तद्वन्नाना-
रसानां च पानमत्र गृहे गृहे ॥ ८०॥ सुधापानेन संतुष्टा यथा स्वर्गे सुरोत्तमाः ॥ दयिता धनपानेन त-

थात्र सुखिनो जनाः ॥८१॥ सागरेष्वेव सादृष्टा मर्यादा सर्वदा नरैः॥ रामराज्येऽत्र बालेषु मर्यादा सर्व देक्ष्यते ॥८२॥ विचरंति गजारूढाः श्रूयंते पार्थिवाः पुराः॥ पौरा जानपदाः सर्वे विचरंत्यत्र ते गजैः॥८३॥ पूर्वं श्रुतं शिशूनां हि चुंबनं दिवसे मुहुः॥ रामराज्ये दिने नारी चुंबनानि मुहुर्मुदा ८४ क्रीडां परिमल द्रव्यैः पौराश्चक्रुः सदाऽत्रते॥८५॥ एवं तद्रामराज्यं हि महामंगलसंयुतम् ॥ आसीदनुपयोग्यं हि श्रवणान्मंगलप्रदम्॥८६॥ इति श्रीशतकोटिरामचरितांतर्गत श्रीमदानंदरामायणे वाल्मीकिये राज्यकांडे उत्तरार्द्धे रामराज्यवर्णनं नाम पंचदशः सर्गः॥ शुभंभवतु॥ श्रीसीतारामचंद्रार्पणमस्तु॥

कापुसतळणी

ता॰ २६-५-५२.

॥श्रीगणेशायनमः ॥श्रीरामदासउवाच॥ एकदा राघवः श्रीमान्समाहूय कुशं लवम्॥ लक्ष्मणं
भरतं चापि शत्रुघ्नं रहसि स्थितम्॥१॥ राजनीतिं विस्तरेण शीक्षयामास सादरम्॥ श्रृणु वत्स
कुशाद्य त्वं यूयं सर्वे लवादिकाः॥२॥ श्रृणुथात्र स्वस्थचित्ता राजनीतिं वदाम्यहम्॥कुश त्वं पृथि-
वीपालो भविष्यसि गते मयि॥३॥ वैकुंठं श्रुणु तस्मात्त्वं सावधान मना भव॥अनृतं नैव वक्त-
व्यं नृपेण चिरजीविना॥४॥ नातिकामी न वै क्रोधी राजा स सुखमर्हति॥ परदारा रति स्त्या-
ज्या सर्वथा पार्थिवेन हि॥५॥ सत्यं शौचं दया क्षांतिरार्जवं मधुरं वचः॥ द्विजगो यति सद्भक्तिः
सप्तै ते शुभदा गुणाः॥६॥ निद्रालस्यं मद्यपानं द्यूतं वारांगना रतिः॥ अतिक्रीडाऽति मृगया सप्त
दोषा नृपस्य च॥७॥ पुत्रवत्पालनीयाश्च प्रजा नृपतिना भुवि॥ षष्ठांशः करभारश्च राज्ञा ग्राह्यः
सदैव हि॥८॥ ज्ञेयं चारैः सदावृत्तं पृथिव्याः पार्थिवेन वै॥ परराष्ट्रे सदा दूता नानावेष विरूपि-
ताः॥९॥ पंच पंचाथवा द्वौ द्वौ प्रेषनीया नृपेण हि॥ न विश्वसेत्पारकीय जने दूते नृपोत्तमैः॥१०॥
दंडो भेद स्तथा साम दानं कालोचितं चरेत्॥ स्वकार्यं साधयेद्युक्त्या काले प्राप्ते नृपोत्तमैः॥११॥
मनसा चिंतितं कार्यं कथनीयं न कस्यचित्॥ कृत्वा कार्यं दर्शनीयं जनान्मंत्रिजनानपि॥१२॥ मासे
मासे स्वकोशस्य परामर्षो नृपोत्तमैः॥ ग्रहणीयः सर्वदैव विश्वसेत्सेवकेषु न॥१३॥ वर्षे वर्षे नगर्या-
श्च प्राकारस्य नृपोत्तमैः॥ परिखानां परामर्षः॥ कार्यो मंत्रिजनैः सह॥१४॥ चतुर्मासैश्च शस्त्रा-
णां मार्गणां पार्थिवोत्तमैः॥ परामर्ष सदा कोष्ठागारादीनां प्रकारयेत्॥१५॥ पक्षे पक्षे वारणानां

तुरगाणां तथाष्टभिः॥ दिवसैर्मासमात्रेण वस्त्राणां पार्थिवोत्तमैः॥१६॥ परामर्षः सदाकार्यः पिकादीनां त्रिभिर्दिनैः॥ सीमाचारजनानां च षण्मासैश्च नृपोत्तमैः॥१७॥ परामर्षः सदाकार्य स्तथा जानपदस्य च॥ मासे मासे स्वसैन्यस्य वापीनामयनेन हि॥१८॥ कार्यः पुष्पवाटिकानां मासे मासे नृपोत्तमैः॥ परामर्षः स्वयं गत्वाथवा मंत्रिजनोत्तमैः॥१९॥ वर्षे वर्षे समुद्योगः षण्मासैरथवा त्रिभिः॥ मासे नृपेण स्वे राष्ट्रे कार्यः सैन्येन मंत्रिभिः॥२०॥ देवानां ब्राह्मणानां च गुरुणां यतिनां तथा॥ असंतोषो नवै कार्यः पार्थिवेन कदापि हि॥२१॥ द्रव्यादाय सदा पश्ये त्स्वव्ययं तु निरिक्षयेत्॥ आदायस्य चतुर्थांशे र्व्ययः कार्यो नृपोत्तमैः॥२२॥ तृतियांशे न वा कार्यस्त्वर्धांशेन कदापि न॥ इष्टाः कार्या मंत्रिणश्च नातिकोपं समाचरेत्॥२३॥ नातिमान्या मंत्रिणश्च वर्द्धनीयाः कदापि न॥ न विरोध्याः कदा राज्ञा दुर्गपाला स्तथैव ते॥२४॥ आकाराणां पट्टनानां दुर्गाणां गिरिवासिनाम्॥ अरण्यवासिनां सिंधुउपद्वीप निवासिनाम्॥२५॥ सिंधुतीरस्थितानां च नाना देश निवासिनाम्॥ वर्षांतरस्थितानां च द्विपांतरनिवासिनाम्॥२६॥ द्वीपे द्वीपे पृथक्वर्षवासिनां पार्थिवोत्तमैः॥ परामर्षः सदाकार्यश्चारैः पक्षांतरेण हि॥२७॥ परराष्ट्राद्गुप्तरूपैः काषायांबरधारिभिः॥ अवधूतादि वेषैश्च तथा कार्पटिकोपमैः॥२८॥ वणिग्रूपधरैर्दूतैर्वृत्तं वेद्यं नृपोत्तमैः॥ तत्र तत्र धिपाः सर्वेऽब्देऽब्दे कार्यास्तु नूतनाः॥२९॥ एक एव चिरं राज्ञा न स्थाप्यः पालकः क्वचित्॥ परसैन्यानि वेद्यानि द्रष्टव्यं स्वबलं सदा॥३०॥ परराष्ट्रगतो दूतः स्वीयराष्ट्रे विलोकयत्॥ दृष्टश्चेन्नैव दंडयःस परदूतं न शीक्षयेत्॥३१॥

परदूतो मोचनीयः सन्मानेन नृपोत्तमैः ॥ स सीमारक्षिणो दूताः ······ क्षणी मुहुर्मुहुः ॥३२॥ परदूत
कथं मुक्तः स्वीयराष्ट्रे पुरेऽथवा ॥ अद्यारभ्य सूक्ष्मदृष्ट्या द्रव्यं चेति ···· पार्थिवैः ॥३३॥ अग्रेसरं
पार्श्वगौ च पश्चाद्भागस्य रक्षकम् ॥ सेनापतिं मंत्रिणं च स्वीयं प्रतिनिधिं तथा ॥३४॥ सूतं चामर
हस्तं च दूतं निकटवर्तिनम् ॥ दानमानैस्तोषयेच्च सदा राज्ञा सुबुद्धिना ॥३५॥ देशं कालं बलं को-
शं निजोत्साहं नृपोत्तमैः ॥ आदौ बुद्ध्या निरीक्ष्याथ रिपोश्चापि परीक्षयेत् ॥३६॥ निजमित्रा नृपाः
सर्वे ततथा स्वहृदो नृपाः ॥ सुहृदा सुहृदश्चापि मित्रमित्राः परीक्षयेत् ॥३७॥ निजमित्र बलं दृष्ट्वा मि-
त्रमित्र बलं तथा ॥ बलं स्वसुहृदां चापि स्वसुहृत्सुहृदां बलम् ॥३८॥ आदौ नृपैः परिक्ष्याथ रिपोश्चै-
वं निरीक्ष्ययेत् ॥ के स्वीया पार्थिवा राष्ट्रे पारकीया नृपाश्चके ॥३९॥ सुहृदः स्वनृपाणां च बलं ते-
षां निरीक्षयेत् ॥ द्रष्टव्या रिपवः स्वीया रिपूणां रिपव स्तथा ॥४०॥ दृष्ट्वा रिपूणां रिपूभिः कार्या
राज्ञाहि मैत्रिकि ॥ परस्य शत्रुःपाल्यो न पाल्यश्चेत्तं परीक्षयेत् ॥४१॥ पाल्यशत्रु बलं दृष्ट्वा शत्रु-
मित्र बलं तथा ॥ पाल्यशत्रु सुहृत्सेनां दृष्ट्वा पाल्यं सुरक्षयेत् ॥४२॥ परराष्ट्रे चारनेत्रै र्नद्यो दुर्गाणि
पर्वताः ॥ अरण्यानि दुष्टमार्गाश्चोरमार्गा जलाशयाः ॥ ज्ञातव्याः स्वपुरे पूर्वमुद्योगश्च ततश्चरेत् ॥
॥४३॥ परराष्ट्रेऽति बुद्ध्याहि गंतव्यं पार्थिवैः सुखम् ॥४४॥ यत्राग्रे गमनं स्वीयं केषां वाच्यं
न तत्कदा ॥ पूर्वे गंतुं निजेच्छा चेन्निक्षिपे दुत्तरे ध्वजम् ॥४५॥ उत्तराभिमुखः कार्यः सेनावासो नृ-
पेण हि ॥ अग्रेसरं चोत्तरे हि नृपेणाज्ञाप्य सादरम् ॥४६॥ क्रोशाद्धदंतर्गतं दृष्ट्वा गच्छेत्पूर्वे स्वयं

नृपः॥ एवं ध्वजः कदा याम्ये पश्चिमे वाऽपरादिशि॥४७॥ परराष्ट्रे रोपणीया श्चारैर्वृत्तं तु वेद-
येत्॥ स्वराष्ट्रे गमनं यस्यां दिशि तस्यां नृपोत्तमैः॥४८॥ रोपणीया ध्वजः प्रोच्चो सेनावास स्त-
था चरेत्॥ यंत्राणामायुधानां च वाहनानां बलस्य च॥४९॥ राज्ञा वृद्धिः सदा कार्या कार्यो धान्यादि
संग्रहः॥ राष्ट्रे दुर्गे पुरे स्वीये पत्तने निर्जले वने॥५०॥ जलाशयाः शुभाः कार्या कृत्वा कोशव्यय बहु
॥ प्राकारार्थेऽथ दुर्गार्थे जलार्थेयो व्ययः कृतः॥५१॥ न ज्ञेयः स व्ययो राज्ञा ज्ञेयं रक्षणमात्मन
॥ धर्मार्थेयो व्ययो जातः सोऽग्रे ज्ञेयस्तु संग्रहः॥५२॥ अपदर्थे धनं रक्षे द्दारा रक्षेध्दनैरपि॥ आ-
त्मानां सततं रक्षेद्दारैरपि धनैरपि॥५३॥ पाद मुद्रा मितं द्रव्यं राज्ञा दाये निरीक्षयेत्॥ नावलोक्यं
यथाकालं व्यये तत्कोटिसंमितम्॥५४॥ न सेनारहितं राज्ञा गंतव्यं स्वपुराद्बहिः॥ नैकाकि विच-
रेत् ग्रामे नैकाकि क्वापि संविशेत्॥५५॥ नैकाकि क्वापि वै स्थेयं न पद्भ्यां विचरेद्बहिः॥ नग-
च्छेत्परगेहेषु वारंवारं नृपोत्तमैः॥५६॥ न विश्वसेद्द्वारपालं जलदं रजकं तथा॥ धौतवस्त्राणि
बुध्द्याहि नृपैः सम्यक् परीक्षयेत्॥५७॥ दृष्ट्वा तांबूलविटिका ग्राह्या राज्ञापरार्पिता॥ परदत्तं जलं
ग्राह्यं राज्ञाक्षिभ्यां विलोक्य च॥५८॥ फलानि परदत्तानि परिक्षेत्पार्थिवोत्तमैः॥ दूरस्थितै नृपै भष्यं
न तेषां निकटं चरेत्॥५९॥ सभां राज्ञा प्रगंतव्यं द्विवारं त्वेकदाथवा॥ अर्धयामं सभामध्ये स्थेयं
राज्ञा न वै चिरम्॥६०॥ स्वद्वेष्टा नगराद्राष्ट्राद्बहिः कार्यो नृपोत्तमैः॥ पादौ प्रसार्य सदसि न स्थेयं
पार्थिवेन हि॥६१॥ न बाहु बंधनं जान्वोः कृत्वा स्थेयं नृपोत्तमैः॥ नातिस्मितं कदा कार्यं सभायां

पार्थिवोत्तमैः॥६२॥ सभायां समलैर्वस्त्रैर्न गंतव्यं कदाचन ॥गणिका गणका वैद्या गायका बं-
दिनो नटाः॥६३॥ पंडिता धर्मशास्त्रज्ञा स्तार्किका वैदिका द्विजाः॥ सदा पाल्या नृपेणै ते दानमानैर-
हर्निशम्॥६४॥ न विश्वसेन्नापिकाय तोषयेत्तं धनादिभिः॥ प्रजानां गौरवं कार्यं दंडयेन्न वृथा
प्रजाः॥६५॥ क्लेशयुक्ताः प्रजाः सर्वा नैव कार्याः कदाचन॥ राजद्वारेः स्थिते दूतैः सर्वे ते पार्थिवोत्तमाः
॥६६॥ मुक्तकंचुकबंधाश्च विमुक्त कटिबंधनाः॥ सम्यक् दृष्ट्वा न्यस्तशस्त्राः प्रेषनीया नृपोत्तम
म्॥६७॥ राजाज्ञया नृपं नत्वाऽसने चोपविशे क्रमात्॥ नृपे मंडलिकैः सर्वैः स्थातव्यं पुरतोऽथ-
वा॥६८॥ संमिल्य हस्तौ पादौ च राजन्यस्त विलोचनैः॥ न हसेद्राज पुरतो नजृंभे न क्षितं मुहुः
॥६९॥ तथा नष्ठिवनं कार्यं सर्वैं मांडलिकैर्नृपैः॥ आगमे गमने सर्वे वंदनीयो नृपो मुहुः॥७०॥
नात्युच्चै तैर्वदेद्राज सान्निध्ये पार्थिवेतरैः॥ कंचुकेन विना राज्ञा सभायां नोपसंविशेत्॥७१॥
मृगयायां वारणेंद्रो नैव हन्यो नृपोत्तमैः॥ नांतर्वत्नी मृगी राज्ञा हंतव्या विपिने कदा॥७२॥ न नि-
द्रितो न हंतव्यः पिबन्नीरं वनेचरः॥ तथा स्वं शरणं प्राप्तो विश्वस्तो वा कदाचन॥७३॥ क्रीडास-
क्तो वने प्राणी नैव हन्यो नृपोत्तमैः॥सीमाचारानष्टदिक्षु संस्थाप्य मृगया चरेत्॥७४॥रात्रौ मि-
त्रेणसहित स्तूष्णिमेव नृपोत्तमः॥आत्मानं कंबलेनैव समाधाय बहिश्चरेत्॥७५॥ पुरद्वारस्थि-
तानां च ह्यर्गलादि निरीक्षयेत्॥जनानां भाषितं सर्वं श्रोतव्यं हि शुभाशुभम्॥७६॥एवं स्वयं प्रग-
तव्यमथवा प्रेषयेद्विदतम्॥रात्रौ रात्रौ पुरे बुध्या श्रोतव्यं सकलेरितम्॥७७॥ न कार्यः कलहो गेहे

॥आ॰रा॰॥
राज्यकांड
(उत्तरार्द्धः)

सर्ग १६ वा



गृहकृत्यं सभास्थितैः॥ न वाच्यमनुमात्रं हि न तूष्णिष्ठी वनं चरेत्॥७८॥ न कंडूयेच्छिरो रा-
ज्ञा सभायां स्वकरेण वै॥ श्रुत्वा रिपूणामुत्कर्षं न त्यजेद्धैर्यमात्मनः॥७९॥ पलायनं न संग्रा-
माद्राज्ञा कार्यं कदाचन॥ न रिपूणां निजादर्शे द्रष्टव्या पृष्ठीरुत्तमा॥८०॥ नोडुपे न तरे राजा नदी
मुख्यां कदापि हि॥ सेतुं विना नदी राज्ञा नोत्तीर्या हि कदाचन॥८१॥ नोत्तीर्या नौकया राज्ञा
नदी क्वापि सुतादिभिः॥ कार्या नैव जलक्रीडा नौकाया स्वसुतैः सह॥८२॥ न स्थेयं हट्टमध्ये हि तथा
चैव चतुष्पथे॥ न ताडयेन्निजां पत्नीं तथा पुत्रं न ताडयेत्॥८३॥ स्वमुद्रांकितपत्रेण विना केषां
पुराद्बहिः॥ न निर्गमः प्रकर्तव्य स्तथैवागमनं नृणाम्॥८४॥ कर्तुमाज्ञापनीयं न मुद्रापत्रांकितं
विना॥ नारण्ये --लुठं चोरैः पथिकार्यं नृपोत्तमैः॥८५॥ न कार्यं मुंडनं राज्ञा विना तीर्थं कदाचन॥
पर्वकाले गृहे नैव स्नातव्यं पार्थिवोत्तमैः॥८६॥ न पादेन स्पृशेच्चापं न पादेन शरं स्पृशेत्॥ ना-
ति क्रीडेत्सारिकाभि र्द्विजैर्वादं न वै चरेत्॥८७॥ न तिष्ठे द्वारदेशे वै न स्थातव्यं नृपै र्भुवि॥ राज्ञा मा-
र्गे न वै स्थेयं न खेदं नृपति र्भजेत्॥८८॥ तोया नयनमार्गेऽपि स्त्रीणां स्थेयं नृपेण न॥ धान्यं सम-
र्घं कर्तुं वै दंडयेद्व्यवसायिनम्॥८९॥ दृष्ट्वा किंचिन्महर्घं तु स्वीयराष्ट्रे हि भूभृता॥ न्यूनः कार्यः
करभारः किंचि द्वैश्यसुखाय च॥९०॥ नातिषाढ्यं कदा कार्यं मौदार्यं दर्शयेज्जनान्॥ द्रव्यं गृहि-
त्वा राज्ञा हि मोचनीया न तस्कराः॥९१॥ मुखं दृष्ट्वा न वै कार्यो राज्ञा न्यायः कदापि हि॥ न न्याय
श्चपरैः कार्यः स्वयमेव प्रकारयेत्॥९२॥ आर्तानां सकलं वृत्तं श्रोतव्यं सादरं नृपैः॥ आर्तमाका-

रनीयं हि निकटं कृपया नृपैः ॥९३॥ आत्मानं मानयेन्नैव वैद्यं च गणकं नटम् ॥ पंडितं वैदिकं वीरं गायकं कृतधर्मिणम् ॥९४॥ यज्ञो दानं जपो होमं संध्या ध्यानं शिवार्चनम् ॥ स्नानं पुराणश्रवणं भक्त्या कार्यं नृपोत्तमैः ॥९५॥ न मादकं वस्तु सेव्यं न कृच्छ्रादिकमाचरेत् ॥ न यात्रा स्वपदा कार्या सप्तद्वीपाधिपेन हि ॥९६॥ फलाहारश्च कर्तव्यो राज्ञा ह्येकादशी दिने ॥ निर्जलश्चोपवासश्च न कार्यः पृथिवीभृता ॥९७॥ येन यद्याचितं राज्ञे भूसुरेणार्पयच्च तत् ॥ तस्मै विप्राय राज्ञा हि नृपा भूसुरदैवताः ॥९८॥ उत्साहे बंधनान्मोच्या ये ये क्रोधात्सुरक्षिताः ॥ निजाज्ञा भंगितां दृष्ट्वा ज्ञेयं स्वीयं हृतं शिरः ॥९९॥ स्वीय दूतापमानो यः सः स्वीयेश्चित ये न्नृपैः ॥ स्वीय दूतस्य सन्मानो राज्ञा ज्ञेयः स आत्मनः ॥१००॥ एवं कुश मया प्रोक्ता राजनीतिः सविस्तरा ॥ दिनचर्या मया यद्वत्क्रीयते त्वं यथा कुरु ॥१०१॥ इति श्रीशतकोटि रामचरितांतर्गत श्रीमदानंद रामायणे वाल्मीकिये राज्यकांडे राजनीति शिक्षणं नाम षोडशः सर्गः ॥ शुभं भवतु ॥ श्रीसीतारामचंद्रार्पणमस्तु ॥

कापुसतळणी

ता. २९-५-१९५२

॥श्रीगणेशायनमः॥ श्रीरामदासउवाच॥ अेकदा कुश कन्याया हेमायाश्च स्वयंवरम्॥ अयोध्यायां चकाराथ रामश्चाति महोत्सवैः॥१॥ समाहूता नृपाः सर्वे नानाद्वीपांतरस्थिताः॥समाजग्मुः सुवेषाश्च सभायां तस्थुरासने॥२॥ ययुर्देवाः स गंधर्वा मुनयोऽपि समाययुः॥ ययुर्विद्याधरा नागाः किन्नराद्याःसमाययुः॥३॥तदा सभायामानीता हेमाऽलंकारभूषिता॥ आरुह्य शिबिकायां तु रुक्ममय्या वरानना॥४॥ नवरत्नमयिं मालां बिभ्रंती सा स्वयंवरा॥ ददर्श नृपतीन्सर्वान्नृपपुत्रान्सविस्तरम्॥५॥तत् भ्रूचाप विनिर्मुक्तै स्तत्कटाक्षपतत्रिभिः॥स भिन्नास्ते नृपाः सर्वे के वयं न विदुस्तदा॥६॥ एतस्मिन्नंतरे तत्रावंतिनाथसुतो महान्॥ चित्रांगदः सभायाश्च तां जहार कुशात्मजाम्॥७॥ दृष्ट्वा कार्यांतर व्यग्रान्रामादीन्वेगवत्तरः॥ मोहनास्त्रेण सकलान्वीरान्कृत्वाति मोहितान्॥८॥रथे निवेश्य तां हेमां हेमाभां वेगवत्तरः॥ चित्रांगदो बहिर्गत्वा क्रोशमात्रे स्थिरो भवत्॥९॥ किं तूष्णिं चोरवन्नेया हेमेयं कुशबालिका॥इति निश्चित्य मेधावी तस्थौ चित्रांगदो महान्॥१०॥एतस्मिन्नंतरे पुर्यां हाहाःकारो महानभूत्॥ नीता हेमा चोग्रबाहोः पुत्रेणाति बलीयसा॥११॥ नृपाः सर्वे समुत्तस्थुः सभायाः खिन्नमानसाः॥उपसंहरिते तेन मोहनास्त्रेति संभ्रमात् १२ चित्रांगदेन योद्धुं ते स्वसैन्येनिर्ययुर्नृपाः॥ बहिःसाकेतनगरात्क्रोधादारक्तलोचनाः॥१३॥ तूष्णिमेवोग्रबाहुः स ददर्श पुत्रकौतुकम्॥ एतस्मिन्नंतरे सर्वे तद्रथं पार्थिवोत्तमाः॥१४॥ संवेष्ट्य कोटिशै र्वर्षुरुग्रबाहुज॥ तदा चित्रांगदो वीरो वायव्यास्त्रेण पार्थिवान्॥१५॥गगने भ्रामयामास

वाहनाद्यैः समन्वितान् ॥ ततो रामाज्ञया सप्त लवाद्या निर्ययुः पुरात् ॥ १६॥ उत्सवार्थे समायाता
स्वस्वराज्यात्तु बालकाः ॥ अंगदाद्या निजैः सैन्यैः सलवाः संगरं ययुः ॥१७॥ तदा बभूव तुमलं यु-
द्धं तल्लोमहर्षणम् ॥ चित्रांगदः स्वबाणोघैर्भित्वा शस्त्राणि तानि हि ॥ १८॥ निजबाणै र्यूपकेतुं च-
कार विरथं क्षणात् ॥१९॥ तथा चकार विरथं सुबाहुं पुष्करं तथा ॥ तक्षकं चित्रकेतुं च ह्यंगदं ब-
लवत्तरः ॥२०॥ तद्दृष्ट्वा कौतुकं तस्य ज्ञात्वा तत्तरसः फलम् ॥ लवश्चिच्छेद बाणोघैस्तद्धनुर्दिव्य-
मुत्तमम् ॥२१॥ ततो लव स्वबाणोघैरुग्रबाहुसुतं तदा ॥ चकार व्याकुलं शीघ्रं तद्दृष्ट्वा लवचेष्टित-
म् ॥ २२॥ ऊग्रबाहुर्ययौ योद्धुं लवेन वेगवत्तरः ॥ लवस्तमपि बाणोघैश्चकार विरथं क्षणात् २३
उग्रबाहुस्तदा वीरोऽन्ये रथे चारुरोहसः ॥ ववर्ष निशितै र्बाणै मूर्छयामास तं लवम् ॥२४॥ लवं
विमुर्छितं दृष्ट्वा हाहाःकारो महानभूत् ॥ तदा ययौ कुशो योद्धुमुग्रबाहु नृपेण वै ॥२५॥ कुशमा-
गतमाज्ञाय ह्यंगदाद्या स्तदा पुनः ॥ रथस्था युयुधुस्तेन चोग्रबाहुं नृपेण त ॥२६॥ पुनस्तानंगदा-
दींश्च चकार विरथां नृपः ॥ तदा कुश स्वबाणोघैरुग्रबाहुं नृपं क्षणात् ॥२७॥ चकार विरथं वीरश्चि-
च्छेद स्तस्य कार्मुकम् ॥ उग्रबाहु स्तदा व्यग्रो बभूत स्तथा ॥२८॥ तं धृत्वा स कुश स्तोषा द्वादयामा-
स दुंदुभिः ॥ अथोग्रबाहुं ससुतं निन्ये श्रीरामसन्निधिम् ॥२९॥ रामस्तं मोचयामासमत्वा स
सुहृदं वरम् ॥ तदा रामो विजयिने कंकणं मुनिनार्पितम् ॥३०॥ ददौ कुशाय प्रीत्या स कुंभजन्मन
अग्रतः ॥ कुश स्तदाति शुशुभे वर कंकणमंडितः ॥३१॥ तदा कुशो मुनिं प्राह नत्वा तं कुंभसंभवम्

॥ त्वया लब्धं कुतश्चेदं कंकणं वद मां मुने ॥३२॥ तत्तस्य वचनं श्रुत्वाऽगस्तिः प्राह कुशं मुदा॥
पुरेंद्ररिपवो वत्स बहवः सागरेण हि ॥३३॥ कृताः स्वांतर्निवासाश्च तदाहं नाक पार्थितः॥ कृत्वा
स्वचुलकेऽब्धिं तं पीतवान् लीलयैव हि॥३४॥ ततो लुप्ता द्वीपयो र्हि मर्यादां मध्य वर्तिनिम्॥
दृष्ट्वा पुनर्नाकयेन प्रार्थितो हतशत्रुणा॥३५॥ मुत्रवत्सागरं भीमं सजीवं मुक्तवानह॥ तदा-
ब्धिनार्पितं मह्यं कुशै तत्कंकणं वरम्॥३६॥ नानारत्न विचित्रं च रवितेज विराजितम्॥ तद्रा-
मायार्पितं पूर्वं मया तेन तवार्पितम्॥३७॥ तन्मुनेर्वचनं श्रुत्वा कुश स्तं प्राह वै पुनः॥ लवस्य जी-
वनोपायं वद मामद्य भो मुने ॥३८॥ मुर्च्छितः पतितश्चास्ति रणे रिपुशरै र्हतः॥ कुशस्य वचनं
श्रुत्वाऽगस्तिस्तं प्राह सादरम्॥३९॥ विमुर्च्छिता यदा पूर्वं भरतः पथि पार्थिवैः॥ मुद्गलाश्रम
तो वल्य स्तदानीताः शुभावहाः॥४०॥ सौमित्रिणा तथाद्य त्वं मुद्गलाश्रम तः पुनः॥ महौषधी समा-
नीय जीवयैन लवं जवात्॥४१॥ अथवा त्वं हनुमंतं प्रेषयस्वाश्रमं मुनेः॥ एवं याच्च स मुनिः क-
थयामास तं कुशम्॥४२॥ तावतद्वचनं श्रुत्वा मुनेर्मारुतिना क्षणात्॥ समानीयाश्रमाद्वल्यो मुद्गल-
स्य तपोनिधेः॥४३॥ ताभि स्तं जीवयामासं लवं सैन्य समन्वितम्॥ विष्णुदास उवाच॥ गुरो त-
स्यै वच मुने मुद्गलस्याश्रमे कथ॥४४॥ मृतसंजीवनी वल्यादिका वल्योऽत्र निर्गताः॥ कथ
ताहि समीपस्था विस्मृत्य द्रोणपर्वतम्॥४५॥ प्रेषितोंऽजनीपुत्रः स तेन जांबवता पुरा॥ अमूम-
त्संशयौछिंधि कृपां कृत्वा मुनीश्वर॥४६॥ श्रीरामदास उवाच॥ यदा मातुर्विमोक्षार्थममृतस्य

खगाधिपः ॥ कलशं स्वमुखे धृत्वा नाकलोकात्समानयत् ॥ ४७ ॥ तदा तत्कलशाद्वेगाद्बिंदुस्तत्रा-
प तत्पुरा ॥ तद्धेतो मुद्गलस्यापि मुनेस्तपप्रभावतः ॥ ४८ ॥ आसन्वल्ल्यश्च तस्यैव ह्याश्रमे हि
द्विजोत्तम ॥ नैतावेद शुभावल्लिर्जांबवान् स वनेचरः ॥ ४९ ॥ द्रोणाचलं त्वतस्तेन प्रेषितो वायुनं-
दनः ॥ इति त्वया यथा पृष्टं तथा ते विनिवेदितम् ॥ ५० ॥ इदानिं श्रृणु शिष्य त्वं शुभां तां प्राक्तनीं
कथाम् ॥ ततो लवादिकाः सर्वे ययुस्ते स्वपुरीं मुदा ॥ ५१ ॥ नत्वा मुनिंश्च रामादीन् तस्थुः श्रीराघ-
वाग्रतः ॥ तदा महोत्सवश्चासीत्पुर्यां तल्लवदर्शनात् ॥ ५२ ॥ ततो दृष्ट्वा लवं रामो जीवितं वायुजेन
हि ॥ समालिंग्य दृढं प्रेम्णा परंतोष मवापसः ॥ ५३ ॥ ततो रामो वायुजाय कंकणे रत्नमंडिते ॥ द-
दौ परमसंतुष्ट स्ताभ्यां स शुशुभे कपिः ॥ ५४ ॥ ततो लवाय श्रीरामस्त्वं परं कंकणं वरम् ॥ ददा
वगस्तिना दत्त पूर्वं यद्रत्नमंडितम् ॥ ५५ ॥ लव स्तेनाति शुशुभे वर कंकणमंडितः ॥ लव स्तदा
मुनिं प्राह नत्वा तं कुंभसंभवम् ॥ ५६ ॥ त्वया लब्धं कुतश्चैदं कंकणं वद मां मुने ॥ तत्तस्य वचनं
श्रुत्वाऽगस्तिः प्राह लवं मुदा ॥ ५७ ॥ एकदा दंडकारण्येऽहं स्नातुं हि गतः सरः ॥ तस्मिन्स्नात्वा
नित्यविधिं कृत्वा तत्र स्थितः क्षणम् ॥ ५८ ॥ एतस्मिन्नंतरे तत्र खात्स्वर्गी समुपागतः ॥ दिव्यं
विमानमारूढः शतस्त्रीः परिसेवितः ॥ ५९ ॥ दिव्यमाल्यांबरधरो दिव्यगंधादि चर्चितः ॥ सस्व-
र्गी खात्समायातो यावत्ताव त्सरोवरात् ॥ ६० ॥ शवं विनिर्गतं श्रेष्ठं स्फुरितं हि भयंकरम् ॥ दुर्गंध
सहितं दुष्टं प्राप्तं तत्सरसस्तटे ॥ ६१ ॥ अवरुह्य विमानाग्र्यात्स स्वर्गी तच्छवं ययौ ॥ छित्वा

तच्छवमांसादि भक्षयामास सादरम् ॥ ६२॥ ततः पीत्वा जलं स्वर्गी विमानं चारुरोह सः॥ निम-
ग्नं तच्छवं चापि पुनस्तस्मिन्सरोवरे॥६३॥ स्वर्गिणं गंतुकामं तं दृष्ट्वा तं चातिविस्मितः अब्रुवन्म-
धुरं वाक्यं रे रे दिव्यस्वरूपधृक् ॥ ६४॥ क्षणं तिष्ठोत्तरं देहि कौतुकं ते मये क्षितम् ॥ ईदृशस्ते श-
वाहारः कथं स्वर्गनिवासिनः ॥६५॥ इति तद्वचनं श्रुत्वा सस्वर्गी प्राह मां तदा ॥ सम्यक् पृष्ठं त्वया
ब्रह्मन् श्रृणु सर्व मयोच्यते ॥६६॥ सुदेवाख्यो हि वैदर्भो नृपतिश्चाभवत्पुरा ॥ तत्पुत्रौ श्वेत सुरथौ
श्वेतोऽहं पार्थिवो भवम् ॥६७॥ नैव दानं मया तस्मिन्जन्मन्यत्र कृतं कदा ॥ स्वीय राज्यमदाभ्रांतः
पापकर्म रतः सदा ॥ ६८॥ ततो पुत्रीत्वहं राज्ये कृत्वा तं सुरथानुजम् ॥ वार्द्धक्येत्र वनं प्राप्त स्तप -
स्तीव्रं समाचरम् ॥६९॥ एकदा स्नातु मुद्युक्तो निमग्नोऽहं सरोवरे ॥ ततो मृतो दिवं प्राप्त स्त्वहं
स्वीय तपोबलात् ॥७०॥ तपसश्च फलै स्तत्र ममासन्सर्वसंपदः ॥ अदृष्ट्वा भक्षितुं किंचिन्मया पृष्टः
सुराधिपः ॥७१॥ वर्तते तु विधास्त्वत्र मम भोगाः सुदुर्लभाः ॥ कथं नासीद्भक्षणार्थं कथमेत्र मुखं भ-
वेत् ॥७२॥ इति मद्वचनं श्रुत्वा मामिंद्रः प्राह सस्मितः ॥ नैव दानं त्वया भूमौ कृतं राज्यमदेन हि
॥७३॥ अदत्तं लभ्यते नैव नृप पुण्यैकदेतरैः ॥ अत स्त्वं प्रत्यहं गत्वा विमानेन सरोवरम् ॥७४॥
भक्षयस्वशवं पुष्टं मिष्टान्नैः पोषितं हि यत् ॥ चिरकालं भवेत्तत्ते क्षयं यास्यत्र्च नैव तत् ॥ ७५॥
इतींद्र वचनं श्रुत्वा स पृष्टश्च पुनर्मया ॥ दिव्यान्नानि कथं चाहं प्राप्नुया तद्वदस्व माम् ॥७६॥
इति मद्वचनं श्रुत्वा तदेंद्रः प्राह मां पुनः ॥ अधुना दंडकारण्यं वर्तते हि न मानुषम् ॥७७॥ विंध्य-

वृद्धि निषेधार्थ मगस्तिः सुरयाचितः॥ यदा यास्यति पत्न्या वै मुक्त्वा काशीं हि दंडकम् ॥७८॥
सरस्यस्मिन्कदा स्नात्वा स्थित पश्यति तं मुनिम्॥ तदा तस्मै कंकणस्वं देहि तोये परिप्लुतम् ७९
तत्स्त्व कंकणदानेन दिव्यांधः प्राप्स्यसि नृप॥ इतींद्र वचनं श्रुत्वा तदारभ्य चिरं मुने ॥८०॥
अत्रागस्त्य शवाहारः क्रीयते हि सदा मया ॥ एतावत्कालपर्यंतं नात्र कश्चिन्मये क्षितः ॥८१॥ म-
या दृष्ट स्त्वमेवात्र वेद्मि त्वां कुंभसंभवम्॥ अद्य त्वया तारितोऽहं दानं स्वीकुरु मे त्विदम् ॥८२॥ अ-
गस्तिरुवाच॥ इत्थं स्वर्गी समामुक्त्वा ददौ कंकणमुज्वलम्॥ मह्य सार्द्धं ततः स्वर्ग ययौ स्वर्गी
मुदायुतः॥८३॥ तदारभ्य शवं तोयाद्धहि स्तन्न ययौ कदा॥ दिव्यान्नानि तु संप्राप नाकलोके यथा-
सुखम्॥८४॥ इति यत्कंकणं लब्धं मया लव पुरा वने ॥ अर्पितं राघवायेदं तेन तच्चाद्य तेऽर्पित-
म्॥८५॥ रामदास उवाच ॥ इत्यगस्ति वचः श्रुत्वा लवः पप्रच्छ तं पुनः॥ किमर्थं दंडकाख्यं तद्ब-
भूव विपिनं वद॥८६॥ अगस्तिरुवाच॥ अिक्ष्वाकु वंश संभूतोऽभून्नृपो विंध्यदक्षिणे॥ नाम्ना
दंड इति ख्यातः पापकर्मरतः सदा॥८७॥ एकदा स वनं यातो मृगयार्थं स्वसेनया॥ तत्र दृष्ट्वा मृगं
राजा मृगपृष्ठे प्रदुद्रुवे ॥८८॥ एकाकि हयमारूढो देशाद्देशांतरं ययौ॥ एवं हि गच्छतस्त-
स्य मृगोऽदृश्याभवत्तदा ॥८९॥ ततः सोऽति तृषाक्रांतः प्रययौ वै जलाशयम्॥ तत्र पीत्वा जलं
स्वच्छं स राजा सरसस्तटे ॥९०॥ अज्ञात्वा स्वगुरोश्चेति भृगोराश्रममाययौ॥ तत्र तात विहिनां
तामरजस्कां भृगोः सुताम् ॥९१॥ दृष्ट्वा चंद्राननां राजा सोऽभूत्काम विमोहितः॥ ततस्तां प्रार्थया-

मास रत्यर्थं सा ब्रवीन्नृपम् ॥९२॥ स्ववशा नृप नैवाहं ताताधीनास्मि सांप्रतम् ॥ बहिर्भृगुस्तव गु-
रुर्गतस्त्वां वेद्म्यहं नृपः ॥९३॥ यदि मामेच्छसि त्वं हि तर्हि स्त्वं स्वगुरुं भृगुम ॥ प्रार्थयित्वा भज सु-
खं मां पत्नीं स्वां विधाय च ॥९४॥ इत्युक्तोऽपि तया राजा दंड स्तां कामपीडितः ॥ भुक्त्वा सुखं बला-
देव जगाम नगरीं निजाम् ॥९५॥ ततोऽरजस्का सा बाला दृष्ट्वा तातं समागतम् ॥ शोचंति सकलं वृत्तं
श्रावयामास विव्हला ॥९६॥ तद्वृत्तं स मुनिः श्रुत्वा जलौ कृत्वाजलं क्रुधा ॥ अब्रवीत्स्वसुतां बालां
सांत्वयन् रक्तलोचनः ॥९७॥ दंडेन सह दंडस्य राज्यं वै शतयोजनम् ॥ भव त्वद्य क्षणा दग्धं मद्वा-
क्याच्च समंततः ॥९८॥ हीनोदकं तथा चास्तु तथा नष्टं चराचरम् ॥ इति तच्छापमाकर्ण्य तातं
संप्रार्थ्य बालिका ॥९९॥ प्रार्थयामास शापस्य सावधिं विनयान्विता ॥ ततो भृगु स तामाह यदा
यास्यति कुंजन ॥१००॥ मुनिः काश्यास्त्वमुं देशं तदायं सजलो भवेत् ॥ देशस्तथात्र वासं हि करि-
ष्यंति मुनीश्वराः ॥१॥ अरण्यं दंड हेतोर्हि जातं तस्मात्सदा नराः ॥ अमुं देशं वदिष्यंति दंड-
कारण्यमेव हि ॥२॥ यदा भविष्यत्यग्रेऽत्र रामागमनमुत्तमम् ॥ भविष्यति तदाग्रेऽत्र नाना
क्षेत्राणि दंडके ॥३॥ रामप्रसादात्क्षेत्राणि भविष्यंति त्वतो जनाः ॥ रामक्षेत्रमिति सदा वदिष्यं-
ति हि दंडकम् ॥४॥ मुनि राम प्रसादाच्च देशोयं पूर्ववत्पुनः ॥ भविष्यत्युत्तः पुण्यः स सौख्यद-
श्च मनोरमः ॥५॥ देशेभ्यः सकलेभ्यश्च सुपुण्यं दंडकं भवेत् ॥ दंडके न समो देशो न भूतो न
भविष्यति ॥६॥ इति तां बालिका मुक्त्वा भृगुस्तप्तुं हिमालयम् ॥ ययौ तां मुनये दत्वा विधि-

ना मुनिसंवृतः॥ ७॥ भृगोः शापाच्च दंडेन दग्धं तद्राज्यमुत्तमम्॥ शतयोजनमानं तदभवद्धि समंततः॥८॥ मद्रामागमनाभ्यां च ततःस्वस्थ बभूव तत्॥ पूर्ववद्दंडकारण्यं चराचर समाकुलम्॥ ९॥ इति त्वया यथा पृष्टे तथा लव मयोदिते॥ कंकणस्य दंडकस्य विचित्रे त्वां कथानके ॥११०॥ श्रीरामदासउवाच ॥इत्यगस्ति मुखाच्छ्रुत्वा लव स्तुष्टोभवत्तदा॥ नत्वा मुनिं च श्रीरामसेवायां तत्परोभवत॥ ११॥ अथ रामश्चोत्सवेन तस्मै चित्रांगदाय ताम्॥ हेमां ददौ विवाहेन महामंगलपूर्वकम्॥१२॥ पारिबर्ह ददौ कोटिसंमितं वारणादिकम्॥ महान्महोत्सवश्चासीदयोध्यायां प्रभोर्गृहे॥१३॥ ततो विसर्जयामास चोग्र बाहुं नृपं प्रभुः॥ मुनयः पार्थिवाश्चापि ययुः स्वस्व स्थलं प्रति॥१४॥ इति श्रीशतकोटि रामचरितांतर्गत श्रीमदानंदरामायणे वाल्मीकिये राज्यकांडे उत्तरार्द्धे हेमास्वयंवरं नाम सप्तादशः सर्गः॥ शुभं भवतु॥ ११४॥
श्रीसीतारामचंद्रार्पणमस्तु॥

कापुसतळणी

ता॰ १२-६-५२

॥श्रीगणेशायनमः॥ श्रीरामदास उवाच॥ अथ रामस्त्वयोध्यायां रंजयामास जानकीम्॥ जुगोप
मेदिनीं कृत्स्नां सप्तसागर मेखलाम्॥१॥राममुद्राविना कस्य साकेते शस्त्रधारिणः॥नैवासील्लु-
प्रवेशश्च रामराज्ये कदाचन ॥२॥ नैवासीन्निर्गमश्चापि विनामुद्रां कदा बहिः॥ राममुद्रांकितं प-
त्रं गृहित्वा ते नृपोत्तमाः॥३॥ गमनागमने चक्रुर्भूम्यां कुत्रापि कुंठिताः॥ राममुद्रा स्वरूपं च ते
वदामि श्रृणुष्व तत्॥४॥ तीर्यगूर्ध्वं पंचदश रक्तारेखाः प्रकल्पयेत्॥ पीताः प्रथमिका पंक्तिश्च-
तुर्दिक्षु प्रकारये ॥५॥ वक्षमां न पदान्येव कृष्णानि हि समाचरेत्॥ ततश्चेशदिगारभ्य तृतीया-
यां ततो क्रमात्॥६॥ पंक्ति द्वितिया शुभ्रैव ज्ञातव्याच तथाष्टमि



॥आरंभश्चोत्तरायां हि समाप्ति र्दक्षिणे स्मृता ॥७॥ पश्चिमाभिमुखा
स्थाप्या मुद्राकर्त्त्रात्र सन्मुखा ॥ पूर्वास्येन सदास्थेयं तदा कर्त्ता वि-
निश्चयात॥८॥ प्रथमं हि द्वितीयं च चतुर्थं षष्ठमं तथा॥ तथैकादशमं
चापि सप्तमं नवमाष्टमे ॥९॥ ततश्चतुर्थ्यां पंक्तौ हि चतुर्थं षष्ठ सप्त-
मे ॥ तथैकादशमज्ञेयं पंचमायाः क्रमोऽधुना॥१०॥ प्रथमं हि द्विती-
यं च चतुर्थं षष्ठ सप्तमे॥ नवमैकादशे चापि षष्ठायाश्च क्रमोऽधुना
॥११॥ प्रथमं हि द्वितीयं च चतुर्थं षष्ठमुत्तमम्॥ नवमैकादशे चापि स-
प्तमी सकलाऽसिता॥१२॥ नवम्याः प्रथमं कृष्णं द्वितीयं च चतुर्थकम्॥ षष्ठं हि सप्तमं चापि नवमं

दशमं स्मृतम् ॥१३॥ तथा द्वादशमं चापि दशम्याश्च क्रमोऽधुना ॥ चतुर्थं च तथा षष्ठं सप्तमार्के तथा
सिते ॥१४॥ एकादश्याः प्रथमं च द्वितीयं हि चतुर्थकम् ॥ षष्ठाष्ट नवमान्येव दशमार्के तथा स्मृते १५
द्वादश्याः प्रथमं कृष्णं द्वितीयं हि चतुर्थकम् ॥ षष्ठं च सप्तमं चापि ह्यष्टमं नवमं तथा ॥१६॥ दशमा-
र्के तथा प्रोक्ते कृष्णा कृत्स्ना त्रयोदशी ॥ एवं बुध्द्या पूरयित्वा राजारामेति वै स्फुटम् ॥१७॥ सि-
तवर्ण सम्मनाम मुद्रायां हि निरीक्षयेत् ॥ एवं राममुद्रिकायाः स्वरूपं ते मयोदितम् ॥१८॥ एवं मु-
द्रांकितां रामः शिलां विप्रेभ्य आदरात् ॥ ददौ साद्यापि भूम्यां हि रामनाथपुरेस्ति हि ॥१९॥ वि-
ष्णुदास उवाच ॥ किमर्थं भूसुरेभ्यश्च राघवेण समर्पिता ॥ रामनाथपुरे पूर्वं स्वीय मुद्रांकिता
शिला ॥२०॥ तत्सर्वं विस्तरेणैव कथयस्वाद्य मां गुरो ॥ आश्चर्यं हि त्वया प्रोक्तं श्रोतुमिच्छा
मि त्वन्मुखात् ॥२१॥ रामदास उवाच ॥ एकदा राघवं श्रुत्वा विप्रवांछित दायिनम् ॥ हर्षाद्ब्रम्ह-
पुरस्था ते दाक्षिणात्या द्विजोत्तमाः ॥२२॥ ययुस्ते राघवं द्रष्टुमयोध्यायां सहस्रशः ॥ एतस्मिन्नं-
तरे रामस्त्वयोध्यायां मुदान्वितः ॥२३॥ गंधर्वराजगेहे स भोजनं कर्तुमुद्यतः ॥ स्नात्वा तत्र सुहृ-
द्गेहे सीतया बंधुभिः सुखम् ॥२४॥ पुत्राभ्यां भोजनं कर्तुमासने संस्थितो भवत् ॥ गंधर्वराजः श्रीरामं
पूजयामास सादरम् ॥२५॥ परिवेषितानि पात्राणि सुहृत्स्त्रीभिस्तदाजवात् ॥ दिव्यान्नै र्मधुरै श्चि-
त्रैः पक्वान्नै र्विविधैरपि ॥२६॥ एतस्मिन्नंतरे विप्रा रामनाथपुरस्थिताः ॥ सुहृद्गेहे गतं रामं श्रुत्वा
तत्र ययुर्मुदा ॥२७॥ गंधर्वराजद्वारस्थै र्दूतै श्रीराघवाय हि ॥ भूसुराणामागमनं तदा शीघ्रं निवेदि-

तम् ॥ २८ ॥ तद्दूतवचनं श्रुत्वा राघवश्चाति संभ्रमात् ॥ प्रत्युद्गम्य स्वयं विप्रान्ननाम शिरसा प्र-
भुः ॥ २९ ॥ गंधर्वराज गेहे तान् नीत्वा ददावासनानि हि ॥ स्नातुमाज्ञापयात्सर्वान्भोजनार्थं रघूत्तमः
॥ ३० ॥ तदा समंत्रयामासु विप्राः सर्वे परस्परम् ॥ भोजनात्पूर्वमेवैनं याचनीयं स्ववांछितम् ॥ ३१ ॥
केचिदूचुस्तदा विप्रा निर्बंधस्य रघूत्तमे ॥ नापेक्षास्ति सदैवायं ददाति द्विजवांछितम् ॥ ३२ ॥ व्रतमे-
वस्य रामस्य द्विज वांछित पूरणम् ॥ एवं तान्मंत्रमाणांश्च रामो दृष्ट्वाब्रवीद्वचः ॥ ३३ ॥ ज्ञातं मया-
भिलषितं युष्माकं मुनिपुंगवः ॥ राज्येच्छया समायाताः किमर्थं श्रमिता द्विजाः ॥ ३४ ॥ कथं न प्रेषितः
शिष्यस्तद्वाक्येनैव वै मया ॥ वांछाऽभविष्यद्युष्माकं पूरिता क्षणमात्रतः ॥ ३५ ॥ एवं तान्ब्राह्मणानु-
क्त्वा लक्ष्मणं प्राह राघवः ॥ मया ब्रह्मपुरस्याद्य राज्यं विप्रेभ्य अर्पितम् ॥ ३६ ॥ शिलायां लिखमन्ना-
म्ना दानं दत्तं द्विजलिति ॥ तथेति रामवाक्येन लक्ष्मणश्चाति संभ्रमात् ॥ ३७ ॥ दृषत्कारान्समाहू-
य शिलामानीयतामिति ॥ शीघ्रमाज्ञापयामासु ते जग्मुर्वेगवत्तरः ॥ ३८ ॥ एतस्मिन्नंतरे विप्राः प्रोचु-
स्ते राघवं मुदा ॥ कृत्वाशनं लेखनीया शिला पश्चाद्रघूत्तम ॥ ३९ ॥ किमर्थं क्रीयते राम त्वरा ले-
खनकर्मणि ॥ परिवेषितानि पत्राणि वयं चापि क्षुधार्तिताः ॥ ४० ॥ तत्तेषां वचनं श्रुत्वा फलभारान्वि-
चित्रितान् ॥ पुरस्थ स्थापयामास विप्राणा परमादरात् ॥ ४१ ॥ उवाच मधुरं वाक्यं राघव स्मित-
पूर्वकम् ॥ फलानिमानि भो विप्रा भक्षयध्वं यथासुखम् ॥ ४२ ॥ लेखयित्वा शिलायां हि यदा मु-
द्रां करोम्यहम् ॥ तदाऽशनादिकं कर्म सर्वमन्यत्करोम्यहम् ॥ ४३ ॥ क्षणं चित्तं क्षणं वित्तं क्षणि-

कं च स्वजीवितम्॥ यमोऽति निर्घृणः सोस्ति धर्मः शीघ्रं ततश्चरेत्॥४४॥शतं विहाय भोक्त-
व्यं सहस्रं स्नानमाचरेत्॥ लक्षं त्यक्त्वा तु दातव्यं कोटिं त्यक्त्वा शिवं भजेत्॥४५॥कोटि वि-
घ्नानि गीतायां दशकोटिनि जान्हवीम्॥ शतकोटिनि जायंते दाने विघ्नानि भो सुरः॥४६॥ अतः
कार्या त्वया दाने सर्वदा तु नरोत्तमैः॥ निद्रायाः पूर्वकाले तु निद्राया त्परत स्तथा॥४७॥भोजना-
त्पूर्व कामा तु भोजनात्परत स्तथा॥क्षणे क्षणेति निर्भिन्ना जायतेऽत्र द्विजोत्तमाः॥४८॥तस्मा
त्कार्या त्वरा दाने मतिर्या प्रथमे क्षणे॥ कृताक्षणे ना परे सा स्त्ये तद्वेव मंतं मम॥४९॥ एतस्मिन्नंतरे
तत्र हृषत्कारैः शिलावरा॥ समानीता गंडकीजा नव हस्ता समंततः॥५०॥ तस्यां ते लेखयामा-
सु हृषत्कारा स्फुटाक्षरैः॥ सूर्यवंशोद्भवे नाथ सप्तद्वीपेश्वरेणहि॥५१॥ त्रेतायां दाशरथि नाम राज्ञा
द्विजोत्तमान्॥ स या ब्रह्मपुरस्यैव राज्यदानं कृतं मुदा॥५२॥ यावत्तपति रव भानु र्यावदस्त्यत्र
मे कथा॥ यावत्प्रवर्तते वायु स्तावद्दानं ममास्त्विदम्॥५३॥ सामान्योऽयं धर्मसेतु र्द्विजानाम्- का-
ले काले पालयो भवद्भिः॥सर्वा नेता न्भाविनः पार्थिवेंद्रो- न्भूयो भूयो याचते रामचंद्रः॥५४॥ एवं
विलेख्य श्रीरामः शिलायां निजमुद्रिकाम्॥ रामनामांकितां वायुपुत्रेण स्पर्शयित्तदा॥५५॥आंजनेयस्य
भारेण शिला जाता तदंकिता॥राजारामेति तस्यांते ददृशुश्च स्फुटाक्षरम्॥५६॥ रामनाथेन यद्दत्तं
पुरं दानं द्विजोत्तमान्॥ रामनाथ पुरं चेति तदारभ्य पृथां गतम्॥५७॥ तस्य ब्रह्मपुरमिति नाम प्राथ-
मिकं स्मृतम्॥ रामनाथपुरं चेति तस्यै वाख्या परा स्मृता॥५८॥शिलारमितं द्रव्यं दक्षिणार्थं निधाय

सः॥ तां शिलां पूज्य विप्रेभ्यः श्रीरामः सीतया ददौ ॥५९॥ ततोऽब्रवीद्वायुपुत्रं भोजनानंतरं तया ॥
विमानेन शिला नेया रामनाथपुरं द्विजैः ॥६०॥ कंबुकंठं ततः पत्र लेखयामास राघवः॥ ब्राह्मणानां
त्वया कार्यं साहाय्यं सर्व देति वै॥६१॥ तत स्तुष्टा द्विजाः सर्वे ददु राशीःसहस्रशः॥ चकार भोजनं
राम स्ततस्तैः परिवेष्टितः ॥६२॥ ततः सर्वे विमानेन ययु र्विप्राः पुरं प्रति॥ तान्पृष्ट्वा मारुतिश्चापि
विमानेन ययौ पुनः ॥६३॥ एवं चकार दानानि सप्त द्वीपांतरेषु हि॥ सहस्रशो रामचंद्र स्तेषां संख्या
न विद्यते ॥६४॥ रामनाथपुरस्था स्ते विप्राः कालांतरेण वै ॥ दुष्ट राजभया दग्रे तां शिलां भयवि-
व्हलाः॥६५॥ तटाके प्रक्षिपश्यंति ततः कष्टं भजंति ते॥ मर्तुकामान् द्विजान्दृष्ट्वा तटाकात्मारु-
तिः पुनः॥६६॥ बहिर्निष्काष्यति शिलामग्रे कालांतरेण हि ॥ विष्णुदास उवाच ॥ किं कष्टं भूसुरा-
नग्रे भविष्यंति स्वजीवितम्॥६७॥ यत स्ते त्यक्तुकामाश्च भविष्यंति वदस्व तत्॥ श्रीरामदास
उवाच॥ अग्रे कश्चिद्दुष्ट राजा भविष्य त्यवनीतले॥६८॥ स तान्निर्बंध्य विप्रांश्च तद्राज्य हरणे-
च्छया॥ वदिष्यति कलौ राजा युष्माकं दान मर्पितम्॥६९॥ यदि रामेण तद्दानपत्रं मद्दृष्टिगोचर-
म्॥ करणीयं न चेच्छीघ्रं यावत्कालं पुरोद्भवम् ॥७०॥ युष्माभिर्वसु यन्मुक्तं तत्सर्वं दीयतां मम
॥ नोचेत्सर्वान्वधिष्यामि भूसुराणां यमस्त्वहम्॥७१॥ ततस्ते ब्राह्मणाः सर्वे श्रुत्वेदं नृपतेर्वचः
भयभीता मंत्रयित्वा नृपं प्रोचु स्त्वरान्विताः॥७२॥ मासेनैकेन पत्रं ते दर्शयिष्यामहे वयम्॥ त-
तो मुमोच तान् राजा तेऽपि तूष्णिं पुरं ययुः॥७३॥ तटाकस्य तटं भीत्वा प्रवाहा शतशस्ततः॥

मोचयामासु सर्वत्र नांतं तस्य जलस्य ते ॥७४॥ ददृशुः सकला विप्रास्तत स्ते प्राणसंकटम् ॥ ज्ञात्वात्मनो निराहारा निषेदुः सरसस्तटे ॥७५॥ राघवं परमात्मानं चिंतयामासुरादरात् ॥ एवंमासे त्वतिक्रांते वधं ज्ञात्वा त्मनो नृपात् ॥७६॥ भयात्प्राणान्त्यक्तुकामा आसन्तस्मिन्जलाशये ॥ तदा तेषां स्त्रियः पुत्राश्चक्रुः कोलाहलं महान् ॥७७॥ तान्सर्वान्सांत्वयामासुर्नानानिच्युत्तरैर्द्विजाः ॥ स्वयं स्नात्वा द्विजाः सर्वे ददुर्दानान्यनेकशः ॥७८॥ चक्रुः प्रदक्षिणाः सप्त ‥ तटायोत्तराननाः ॥ ऊचुर्दीर्घस्वरेणैव प्रबद्ध करसंपुटाः ॥७९॥ हे राम जानकींकात त्वद्दानादीदृशी गतिः ॥ जातास्माकं मृतान्नस्त्वं सर्वान्पश्य रघूत्तम ॥८०॥ पुरोद्भवं तु यद्द्रव्यं पूर्वजैर्भुक्तमेव तत् ॥ एतावत्काल पर्यंतमस्माभिश्चाधुना कुतः ॥८१॥ तत्त्देयमसंख्यातमतस्त्यक्षामजीवितम् ॥ इत्युक्त्वा ब्राह्मणाः सर्वे निमील्य नयनानि ते ॥८२॥ चिंतयामासुः स्वीयेष्टा देवतां मरणोत्सुकाः ॥ एतस्मिन्नंतरे तत्र देवागारे हनूमतः ॥८३॥ पाषाणमूर्तेः प्रगटः सो बभूवांजनीसुतः ॥ दीर्घस्वरेण तान्प्राह भूसुरान्संभ्रमाद्धरिः ॥८४॥ मा यूयं जीवितान्यद्य त्यजध्वं ब्राह्मणोत्तमाः ॥ आगतोऽहं राघवस्य दासोऽजनी समुद्भवः ॥८५॥ इति तद्वचनं श्रुत्वा द्विजास्ते विस्मयान्विताः ॥ उन्मील्य नयनान्यग्रे ददृशुर्वायुनंदनम् ॥८६॥ दीर्घबाहुं महाघोरं पिंगकेशं विराजितम् ॥ जरठं पर्वताकारं रामनाम प्रभाषिणम् ॥८७॥ तं दृष्ट्वा ते द्विजाः सर्वे प्रणमुर्हृष्टमानसाः ॥ कथयामास स्तं सर्वं स्वीयं वृत्तं सविस्तरम् ॥८८॥ ततः स मारुतिर्वेगाच्छरशस्तां (सरस) शिलां बहिः ॥ निष्काष्य विप्रवर्यैस्तै शिलां

धृत्वा स्वयं कपिः ॥८९॥ जगाम दुष्टराजानं दर्शयामास तां शिलाम् ॥ राममुद्रांकितं कपिं दृ-
ष्ट्वा राजाति विस्मितः ॥९०॥ तं तदा रोपयामास शूलाग्रे वायुजो नृपम् ॥ तस्मिन्नेव तटाकेहि यत्र
विप्राः स्थिताः पुरा ॥९१॥ नृपं मोचयितुं ये ये राजदूताः समाययुः ॥ तान्सर्वान्मर्दयामास पुच्छे-
नैव स मारुतिः ॥९२॥ द्विजहृत्तापशमना द्धृत्तापशमनं सरः ॥ बभूव नाम्ना तत्पुण्यं तत्र श्रीवायुसू-
नुना ॥९३॥ राज्यदानेन रामस्यौदार्यं लोकान्प्रदर्शितुम ॥ उदार राघवेशाख्यः स शंभुः स्थापितः
शुभः ॥९४॥ उदारराघवश्चेति नाम्ना मूर्तिः प्रतिष्ठिताः ॥ स्नानादिना तत्सरसि नृणां तापत्रयं न-
हि ॥९५॥ ततः प्राह पुनर्विप्रान् हनूमान्तुष्टमानसान् ॥ भूम्यां कृत्वा गुहां श्रेष्ठां तत्रेयं स्थाप्यतां
शिला ॥९६॥ न भयं वोस्तु भो विप्रा युष्माकं सन्निधस्त्वहम् ॥ सर्वदास्मि न भेतव्यं स्मरध्व रघु-
नंदनम् ॥९७॥ इत्युक्त्वा गुप्तरूपोभूत्स्वीयमूर्त्या द्विजाग्रतः ॥ ततस्तुष्टा द्विजाः सर्वे जग्मुः स्व
स्व गृहं प्रति ॥९८॥ तां शिलां स्थापयामासुर्भूम्यामेवाति यत्नतः ॥ तदारभ्य न केनापि तेषां रा-
ज्यं हृतं कदा ॥९९॥ एवं शिष्य मया प्रोक्ता कथा भावि तवाग्रतः ॥ पूर्वमेव ज्ञानदृष्ट्या कौतुकार्थं
सविस्तरा ॥१००॥ अद्यापि तत्र तैर्विप्रैस्तद्राज्यं भुंज्यते सदा ॥ ये ये जाता नृपा भूम्यां रामाज्ञां
मानयंति ते ॥१॥ एवं नानाकौतुकानि राघवेण कृतानि हि ॥ पुत्राभ्यां सीतयाऽयोध्यापुर्यां बंधु-
जनैः सह ॥१०२॥ इति श्रीश० रामच० श्रीमदानंद रामायणे वा० रा० उ० रामनाथपुर राज्य प्रदानं
नामाष्टादशः सर्गः ॥ शुभभवंतु ॥ श्रीसीतारामचंद्रार्पणमस्तु ॥

कापुसतळणी
६-७-१९५२

॥श्रीगणेशायनमः॥ श्रीरामदासउवाच॥ श्रृणु शिष्य वदाम्यद्य रामराज्ञा शुभावहाम्॥ दिनचर्यां राज्यकाले कृतां लोकां हि शिक्षितुम्॥१॥ प्रभाते गायकै र्गीतै र्बोधितो रघुनंदनः॥ नववाद्यनिनादांश्च सुखं सु[illegible] सीतया॥२॥ ततो ध्यात्वा शिवं देवीं गुरुं दशरथं सुरान्॥ पुण्यतीर्थानिमातृंश्च देवतायतनानि च॥३॥ नाना क्षेत्रानरण्यानि पर्वतान्सागरा स्तथा॥ नदाश्चैव नदीः पुण्या स्ततः सीतां ददर्श सः॥४॥ प्रणमंति समुत्थाप्य धृत्वा सीतां करं प्रभुः॥ मंचकादवतीर्याथ दासीभिः परिवेष्टितः॥५॥ बहिः कक्षां शनै र्गत्वा संपाद्यावश्यकं प्रभुः॥ ययौ पुनः स दासीभिः क्रीडाशालां रघूत्तमः॥६॥ कृत्वा शौचविधिं रामो दंतशुद्धिं चकार सः॥ ततः स्नानं कदा गेहे सरय्व्यां वा करोत्प्रभुः॥७॥ आरुह्य शिबिकायां स भूसुरै र्यानसंस्थितैः॥ वेष्टितः सरयूं गत्वा यानं मुक्त्वा तटे प्रभुः॥८॥ पद्भ्यामेव शनै र्गत्वा शरयूं प्रणिपत्य च॥ सरय्व्या पुरतः स्थाप्य नारिकेलं सदक्षिणम्॥९॥ सतांबुलं पुनर्नत्वा स्तुत्वा सम्यक्प्रसाद्य च॥ स्नात्वा यथा विधानेन ब्रह्मघोष पुरस्सरम्॥१०॥ प्रातःसंध्या ततः कृत्वा ब्रह्मयज्ञं विधाय च॥ दत्वा दानान्यनेकानि ययौ गेहं रथेन हि॥११॥ रुक्मबंध वेष्टितेन रौप्य रत्नमयन च॥ सुस्नात सूत तुरगयुक्तेन ध्वनितेन च॥१२॥ हुत्वा होमं विधानेन शिव संपूज्य सादरम्॥ कौसल्यां च सुमित्रां च कैकेयीं च समर्चयत्॥१३॥ कामधेनुं कल्पवृक्षं पारिजातं सुपुष्पकम्॥ चिंतामणिं कौस्तुभं च पूज्य सीतायुतो हरिः॥ मुनिवृक्षं वटं बिल्वमश्वत्थं तुलसीं तथा॥१४॥ शमीं पलाश दूर्वां च राजवृक्षं प्र-

पूजयेत् ॥ भानुं संपूज्य तं नत्वा संपूज्य द्वारदेवताम् ॥१५॥ गोवृषाणां वारणांच रथं शास्त्राणि
भूसुरान् ॥ कोष्ठागाराणि कोशानि पाकशाला प्रपूजयत् ॥१६॥ सिंहासनं तथा छत्रं चामरे व्यजनेऽर्ची-
येत् ॥ संपूज्य मुकुटं रामः पूजयामास मंचकम् ॥१७॥ दीपिकां दर्पणं पूज्य पुस्तकादीन्य पूजये-
त् ॥ पुनः संपूज्य स्वगुरुं पूर्वं विप्रेषु पूजयेत् ॥१८॥ उच्चासनस्थितं नत्वा कथां सुश्राव तन्मु-
खात् ॥ पुत्राभ्यां बंधुभिः पत्न्या पंडितैः परिवेष्टितः ॥१९॥ ततः सं प्रार्थितो रामः सीतया स मुहु-
र्मुहुः ॥ विप्रादिभिश्चोपहारं चकार स्वस्थमानसः ॥२०॥ कामधेनूद्भवैश्चान्नैः कल्पवृक्ष समुद्भवैः
॥ मणिद्वय निर्मितैश्च वन्हौ सीताकृतैरपि ॥२१॥ ततो भुक्त्वा हि तांबूलं बिभ्रद्वासांसि राघवः ॥
बध्वा कटिं दिव्यास्त्रैः शस्त्राण्यानि दधारसः ॥२२॥ एतस्मिन्नंतरे पूर्वं समाहूतौ ययौ भिषक् ॥
गणकोऽपि राघवेण प्रत्युद्गम्याति मानितौ ॥२३॥ निषेदतु राघवाग्रे पूजयामास तौ प्रभुः ॥
ततो भिषक् सुखं स्थित्वा राघवाग्रे तदाज्ञया ॥२४॥ ददर्श दक्षिणकर नाडीं रामस्य सादरम्
॥ रत्नमुद्रा कंकणाद्यै शोभितस्योज्वलस्य च ॥२५॥ करस्यांगुष्ठमूलयो धमनी जीवसाक्षि-
णी ॥ तच्चेष्टया सुखं दुःखं ज्ञायते च भिषग्वरैः ॥२६॥ अतस्तां वैद्यवर्यः स सूक्ष्म बुद्ध्या व्यलो-
कयत् ॥ रामकर्णे विहस्याह रात्रावाचरितं श्रमः ॥२७॥ तद्वैद्य वचनं श्रुत्वाऽकरोद्रामः स्मिता-
ननम् ॥ ततो वैद्याय तांबूलं ददौ रामः सदक्षिणम् ॥२८॥ ततः स गणकः प्राह विस्तीर्य स
स्फुटाक्षरम् ॥ पचांगपट्ट चित्रं च राघवाग्रे स्थितः सुधीः ॥२९॥ विघ्नेश्वरो बह्न हरिश्वराः

सुरा भानुः शशी भूमिसुतो बुधश्च ॥ गुरुश्च शुक्रः शनि राहु केतवः सर्वे ग्रहा मंगलदा भ-
वंतु ते ॥३०॥ लक्ष्मी स्यादचला तिथि श्रवण तो वारात्तथाऽऽयुश्चिरं नक्षत्रं कृत पापसंचय ह-
रं योगोपि योगापहः ॥ सर्वाभिष्ट करं तथैव करणं पंचांगमेतत्स्फुटं श्रोतव्यं प्रतिवासरं द्वि-
जमुखाच्छ्रेयस्करं संग्रहम् ॥३१॥ स्वस्ति श्रीराघवाद्यास्ति तिथिश्च दशमी रिता ॥ भानुवारः स
नक्षत्रं पुष्यारव्यं त्वद्य वर्तते ॥३२॥ ऐंद्र योगो महानद्य बवारव्यं करणं शुभम् ॥ कर्कस्थितोऽद्य
चंद्रोस्ति द्वितीयेस्ते रघूत्तम ॥३३॥ मासोऽयं चैत्रमासोस्ति वसंतारव्यो ऋतुस्त्वयम् ॥ सुरवं कु-
रुष्व राज्यं त्वं चिरं तिष्ठावनीतले ॥३४॥ सर्वेऽपि सुखिनः संतु सर्वे संतु निरापदाः ॥ सर्वे भद्रा-
णि पश्यंतु मा कश्चिद्दुःखमाप्नुयात् ॥३५॥ एवं ज्योतिर्विदा गीतं पचांगं रघुनंदनः ॥ श्रुत्वा तं
दक्षिणां दत्वा स तांबूलां ननामसः ॥३६॥ ततो रामं ययौ वेगान्मालाकरो मनोहरान् ॥ रामाग्रे
वंशपात्रस्थान्पुष्पहाराण्न्यवेदयत् ॥३७॥ राम स्तान्सकलेभ्यश्च दत्वा बिभ्रत्स्वयं ततः ॥ पुत्रा-
भ्यामवतंसाश्च दत्वा बिभ्रत्स्वयं करे ॥३८॥ एतस्मिनंतरे रामं नापिकः प्रययौ जवात् ॥ मुकुरं
दर्शयामास रुक्मबंधन रंजितम् ॥३९॥ तत्रादर्शे ददर्शाथ स्वमुखं रघुनंदनः ॥ चंद्रोपमं स-
स्मितं च कंजलोचन शोभितम् ॥४०॥ ऋजुनासं मांसलं च स्मश्रुयुक्तं सुवर्तुलम् ॥ वरकुंडल
मुक्तानां वरदीप्त्यातिभासुरम् ॥४१॥ प्रोच्च गंडस्थलं सुभ्रुं त्रिवळी भालमंडितम् ॥ रुक्मरत्न स-
मुभ्दूत मुकुटेनाति शोभितम् ॥४२॥ एवं मुख निरीक्ष्याथ तुतोष नितरां प्रभुः ॥ ततो ययौ धूप-

पाणि धूपं स्थाप्य प्रभोः पुरः ॥४३॥ नत्वा रामं दूत मध्ये तस्थिवान्राघवाग्रतः॥ ततो रामः शि-
बिकायां स्थित्वा गेहाद्बहिर्ययौ ॥४४॥ ददर्श मागधादींश्च बहिः कक्षा स्थितान्प्रभुः ॥ ततस्ते
मागधा रामं नत्वा दीर्घस्वरेण वै ॥४५॥ सूर्यवंशभवान्सर्वान्नृपान्स वर्णयन्तदा ॥ ततस्ते बंदि-
नः सर्वे तुष्टुवु रघुनंदनम् ॥४६॥ नाना तत्कृत चारित्रै रावणादि वधादिकैः ॥ ततस्ते च नरा
गानं प्रचक्रुर्मुदिताननाः ॥४७॥ नटा वेश्या ननृतुश्च नानावाद्य पुरःसरम् ॥ अन्ये चक्रु र्विनो-
दांश्च यैव तुष्येत्स राघवः ॥४८॥ ततो निनेदुर्वाद्यानि नवं वाद्यस्वना अपि ॥ तत स्तृतीय
कक्षायां ददर्श नृपनंदनः ॥४९॥ वारणेंद्रान्तुरंगाश्च शिबिकाश्च रथांस्तथा ॥ नानालंकारयु-
क्ताश्च वर वस्त्रैः समन्वितान् ॥५०॥ ततश्चतुर्थ कक्षायां नृपान्पौरान्सुहृज्जनान् ॥ समाग-
तान् दर्शनार्थं ददर्श रघुनंदनः ॥५१॥ ततः पंचम कक्षायां पुष्पकं पुष्पवाटिकाः ॥ दूतान्ददर्श
श्रीरामः शस्त्रहस्तान्सहस्रशः ॥५२॥ ततः स षष्ठ कक्षायामश्वारूढान्सहस्रशः ॥ वीरान्ददर्श
श्रीरामः प्रबद्ध करसंपुटान् ॥५३॥ ततः सप्तम कक्षायां ययौ रामः सभां प्रति ॥ अवतीर्य शिबि-
कायाः शनैः सिंहासनं ययौ ॥५४॥ सव्यं कृत्वा नमस्कृत्य सोपानैः स शनैः प्रभुः ॥ सिंहासन
मारुरोह वर छत्रं सुशोभितम् ॥५५॥ दधार छत्रं सौमित्रिश्चामरं भरतस्तदा ॥ शत्रुघ्नो व्य-
जनं रम्यं पादुके वायुनंदनः ॥५६॥ सुग्रीवो जलपात्रं च वरादर्शं बिभीषणः ॥ दधार हस्ते
ताबूलपात्रं स वालिनंदनः ॥५७॥ वस्त्रकोशं जांबवांश्च दधार वेगवत्तरः ॥ तस्थौ सिं-

हासने रामः स पृष्ट्यं कोपबर्हणः ॥५८॥ तस्थौ पृष्ठे लक्ष्मणश्च भरतः सव्य पार्श्वके । शत्रुघ्नः स वामपार्श्वे पुरतो वायुनंदनः ॥ ५९॥ वायव्यकोणे रामस्य सुग्रीवः संस्थितो भवत् ॥ ईशान्यां राक्षसेंद्रः स आग्नेयामंगदः स्थितः ॥६०॥ नैरऋत्या जांबवश्चापि पौराः सर्वे समंततः ॥ राघवाग्रे नृपाः सर्वे स्थिताः संबद्धपाणयः ॥६१॥ पार्श्वयोस्ते राघवस्य प्रोच्च स्थाने मुनीश्वराः ॥ पुरतो ननृतुः सर्वा वारवेश्याः सहस्रशः ॥६२॥ ततो वीरा स्ततो दूताः सभायां संस्थिताः क्रमान् ॥ निषेदु र्मुनयः सर्वे रामपुत्रौ निषेदतुः ॥६३॥ राममित्रा निषेदु स्ते तथा रामाज्ञया नृपाः ॥ ये ये मुख्या निषेदु स्ते तथा पौराः सुहृज्जनाः ॥ ६४॥ येभ्योऽन्ये ते स्थिता एव न निषेदुः प्रभोः पुरः ॥ तेषां मध्ये रामचंद्रः शुशुभेऽनुपम स्तदा ॥ ६५॥ सेवकाद्या न निषेदुः सुमंत्र एव तस्थिवान् ॥ एवं स्थित्वा सभायां स कृत्वा कार्यान्यनेकशः ॥६६॥ नाना कार्येषु बंधूंश्च पुत्रावाज्ञाप्य राघवः ॥ दृष्ट्वा नाना कौतुकानि पूर्ववद्गृहमाययौ ॥ ६७॥ तदा निनेदु र्वाद्यानि गोमुखादीन्यनेकशः ॥ श्रुत्वा वाद्यनिनादांश्च जानकी संभ्रमात्पुरः ॥ ६८॥ प्रत्युद्गम्य तोयहस्ता तत्प्रतीक्षां चकार सा ॥ रामोऽपि पूर्ववल्लोकान्सप्तकक्षास्वनुक्रमम् ॥ ६९॥ प्रविश्यन्सकलानाज्ञां ददौ तान् तान् सुतोषयत् ॥ ततोऽग्रे बंधुभिर्गेहं पुत्राभ्यां स विवेशसः ॥७०॥ ददर्श जानकीं रामः पीतकौशेयवाससाम् ॥ साऽपि रामं ययौ सीता लज्जयावनताननना ॥७१॥ वक्रनेत्रकटाक्षैश्च मोहयंति रघूत्तमम् ॥ नानालंकार संयुक्ता वर नूपुर निस्वना ॥७२॥ ततो रामो जलं स्पृष्ट्वा धृत्वा सीताकरं मुदा ॥ लक्ष्मणादिन्संवि-

सर्ज सीतागेहं विवेशसः॥७३॥बहिर्दृष्टं श्रुतंवापि यद्यत्कौतुकमुत्तमम्॥ तत्सर्वं जानकीं प्राह तोष-
यामास तां मुहुः॥७४॥ ततः सर्वान्समाहूय भोजनार्थं समुद्यतः॥ स्नानं कृत्वा स माध्यान्हं कर्म चक्रे
रघूत्तमः॥७५॥ तर्पयित्वा पितृश्चापि नैवेद्यान् शंभवे ददौ॥ वैश्वदेवं ततः कृत्वा बलिदानं विहा-
यसः॥७६॥ दत्वा भूतबलिं चापि पितृश्चापि स्वधेति च॥ बहिस्त्यक्त्वाकाकबलिं त्वतिथीं न्पू-
ज्य सादरम्॥७७॥ यतींश्च ब्राह्मणान्पूज्य हेमपात्रेषु राघवः॥ परिवेष्टितेषु जानक्या त्रिपदासु
धृतेषु च॥७८॥ तैः सर्वै भोजनं चक्रे स्नुषाभिर्वीजितो मुदा॥ करशुद्धिं ततः कृत्वा भुक्त्वा तांबूल-
मुत्तमम्॥७९॥ ददौ तेभ्यो दक्षिणाश्च विप्रेभ्यो रघुनायकः॥गत्वा शतपदं रामो निद्राशालां ययौ
शनैः॥८०॥ एतस्मिन्नंतरे सीता भुक्त्वा रामांतिकं ययौ॥ विजयामास श्रीरामं मंचकस्थं पुरस्थि-
ता॥८१॥ चकार निद्रां श्रीरामो मंचके सीतयासह॥ तौ दास्यो विजयामासुर्दिव्यालंकारभूषिताः८२
ततः प्रबुद्धा सा सीता प्रबुद्धोऽभूद्रमापतिः॥ सारीभिः सीतया क्रीडां तथा बुद्धिर्बलेन हि॥८३॥
नाना कृत्रिमसैन्यैः सोऽकरोदन्यैरपि प्रभुः॥ ततो द्राक्षामंडपाधो जलयंत्रादि कौतुकम्॥८४॥दृष्ट्वा
पक्षिकुलान्सर्वान्पंजरस्थान्ददर्श सः॥गत्वा सोपानमार्गेण प्रासादाग्रं पुरीं शुभाम्॥८५॥ वनारामा-
न्वितां दृष्ट्वा हट्टवीथ्यतिरंजितम्॥ शनैर्ययौ प्रभुर्गोष्ठं नानाधेनु ददर्श सः॥८६॥ तां संप्रेश्य गृहं
सीतां स दासी परिवेष्टितः॥ द्वारांतिकं ययौ राम स्तत्र ते लक्ष्मणादयः॥८७॥ चक्रुः प्रणामं श्रीरामं
तै सहैव शनैः शनैः॥ वाजिशालां ययौरामः स ददर्श तुरंगमान्॥८८॥ गजशालामुष्ट्रशालां दृष्ट्वा

रामः शनैः शनैः॥ ददर्श शस्त्रशालां च व्याघ्रशालां प्रभुर्ययौ ॥८९॥ दृष्ट्वाय शिबिकांशाला माहि
षेयिं विलोक्य च ॥ महिषिवृषशालांच रथशालां ददर्शसः ॥९०॥ आरुह्य स्यंदने रामः शनैः सर्वै र्ब-
हिर्ययौ ॥ सप्तकक्षाः समुल्लंघ्य तत्रस्थैः पूर्ववज्जनैः॥९१॥ सर्वैर्युक्तं चाष्टमां तां श्रेष्ठां कक्षां ददर्श
सः ॥ तत्र यंत्राणि श्रीरामः शतघ्नीःशकटः स्थिताः ॥९२॥ तृणकाष्टादि संघाश्च दूतस्थानान्य पश्यत
॥ ततो नवमकक्षायां ददर्श रघुनंदनः ॥९३॥ शस्त्रपाणिन्वारणस्थान्तुरगस्थाननेकशः॥ रक्षंति
हि ये सर्वे स्वीयं गेहं त्वहर्निशम्॥९४॥ एवं स नवकक्षाश्च समुल्लंघ्य रघूत्तमः॥ बहिः स्वसद्मनो दृ-
ष्ट्या परिखाः सजलानव॥९५॥ शनैः पश्यन्नयोध्या तां राजमार्गै र्मुदान्वितः॥ शीघ्रं ययौ पुरद्वारं
ददर्श द्वाररक्षकान्॥९६॥ नवकक्षास्त्वयोध्यायाः समुल्लंघ्य शनैः प्रभुः॥ नवापश्यत परिखास्तोय
वन्ह्यादि पूरिताः॥९७॥ ततो नाना वनारामं कौतुकानि रघूत्तमः॥ पश्यन्स बंधुपुत्रैश्च सरय्न्यां
स्तीरमाययौ ॥९८॥ तत्र स्थित्वासु नौकायां क्रीडां कृत्वा कियत्क्षणम्॥ नद्यास्तटे सभायां स त-
स्थौ सैन्य युतः प्रभुः॥९९॥ तत्रापि वारवेश्यानां पश्यन्नृत्यानि राघवः॥ कियत्कालमतिक्रम्य य-
यौ शीघ्रं ततः पुरीम्॥१००॥ ततः शनैः सभां गत्वा पूर्वोक्तै उपचारकैः॥ लक्ष्मणाद्यै सेवितश्च तस्थौ
सिंहासनोपरि ॥१॥ ततः कृत्वाह्यनेकानि नाना कार्याणि राघवः॥ आज्ञाप्य बंधुपुत्रांश्च पूर्ववत्स्वगृ-
हं ययौ ॥२॥ सायंकाले ततः संध्यां कृत्वा हुत्वा यथाविधि ॥ गंधाद्यैरुपचारैश्च शिवं संपूज्य भक्ति-
तः॥३॥ कृत्वोपहारं विप्रैश्च पुत्राभ्यां बंधुभिःसह॥ शिबिकायां पुनः स्थित्वा देवतायतनेषु च॥४॥

साकेतस्थेषु श्रीरामो गत्वा नत्वा शिवादिकान् ॥ नानाविधान्देवसंघान्फलैः पुष्पैः प्रपूजयेत् ५
देवालयेषु सर्वेषु सुराणां तेषु राघवः ॥ श्रृण्वन्नाना कीर्तनानि वारस्त्री नर्तनान्यपि ॥ ६॥ पश्यन्ना-
ना कौतुकानि परां मुदमवापस ॥ वाहनारूढ देवानामपश्यत्कौतुकानि च ॥७॥ ततो ययौ वाहनेन
हट्टमार्गेण राघवः ॥ रत्नदीपप्रकाशैश्च विवेश निजमंदिरम् ॥८॥ ततो नानाकथाभिश्च वार्ता-
भिः पुत्रबंधुभिः ॥ सार्द्धयामा निशां नित्वा रतिगेहे विवेशसः ॥९॥ ८ एतस्मिन्नंतरे तत्र सीताग्रे
रतिमंदिरे ॥ पुष्पशय्यादि संपाद्य तत्प्रतीक्षां चकार सा ॥११०॥ तावदायांतमालोक्य सहसोत्था-
य जानकी ॥ धृत्वा हस्ते राघवेंद्रं रतिशालां निनायसा ॥११॥ सर्वा विसर्ज्य दासीश्च मुक्ताजाला-
न्यनेकशः ॥ समंततो विमुच्याथ तस्थौ रामः स मंचके ॥१२॥ ततस्तां मैथिलीं धृत्वा मंचके सं-
न्यवेशयत् ॥ रामः क्रीडां विधायाथ रंजयामास जानकीम् ॥१३॥ ततस्तुष्टं रमानाथं जानकी ल-
ज्जिताऽब्रवीत् ॥ रामराजीवपत्राक्ष किंचित्पृच्छामि ते वद ॥१४॥ कुशजन्मानंतरं हि कथं
गर्भो मया न वै ॥ धार्यते कारणं तस्य किमस्ति तद्वदस्व माम् ॥१५॥ तत्सीतावचनं श्रुत्वा
सस्मितः प्राह राघवः ॥ हे सीते कंजनयने सम्यक्पृष्टं त्वया मम ॥१६॥ तत्सर्वं ते वदाम्यद्य
तच्छृणुष्वं सुमध्यमे ॥ किमर्थं बहवः पुत्रास्त्वत्र त्वां वांछसि प्रिये ॥१७॥ सद्वंशे बहवः पुत्रा न यो-
ग्यास्तत्र वै भुवि ॥ कदैकस्य दुराचारात्कुलस्य लांछनं भवेत् ॥१८॥ अतएव ममेच्छा न बहुपु-
त्रेषु मैथिली ॥ मदिच्छया त्वया गर्भो धार्यते न कदाचन ॥१९॥ पुत्रस्त्वेकस्त्वपेक्ष्यो हि यः कुलं

भूषयद्गुणैः ॥ किं जाता बहवः पुत्रा दुष्टास्ते कृमयो यथा ॥१२०॥ द्वावेवास्तां कदाचिच्च यथा
नेत्रे भुजौ यथा ॥ यथा ते रवि चंद्रौच यथाऽहं लक्ष्मणस्तथा ॥२१॥ तवापि जातौ द्वौ पुत्रौ मा ग्रे
स्तु संतति स्त्वतः ॥ ततः प्राह पुनः सीता न जाता दुहिता मम ॥२२॥ एकापि कारणं त्वत्र किम-
स्ति तद्वदस्व माम् ॥ तच्छीता वचनं श्रुत्वा जानकीं प्राह राघवः ॥२३॥ तव कन्या मया कस्मै
देयात्र जगतीतले ॥ मत्सम्मानो नृपः कोऽस्ति सप्तद्वीपपतिर्महान् ॥२४॥ यस्य पत्न्यै त्व-
या कार्यं शिरसा नमनं तदा ॥ को वरोऽस्ति गत्यां हि नृपस्य तनयो महान् ॥२५॥ प्रक्षालनी-
यौ चरणौ विवाहे यस्य वै मया ॥ अतएव न मेच्छा भूत्कन्यायामपि जानकी ॥२६॥ कुशादिनां तु
याः कन्या स्ता स्ते किं नैव बालिकाः ॥ किं यौवन मदात्सीते मोहं प्राप्तासि भूतले ॥२७॥ आत्मां-
नं विस्मृतास्यद्य त्रैलोक्यजननीमिति ॥ यदत्र विश्वे स्त्री रूपं दृश्यतेत तवांशजम् ॥२८॥ पौ-
रुषं दृश्यते यच्च तत्सर्वं च ममांशजम् ॥ अत्र स्त्री पुरुषां ये च ते पुत्र दुहिता स्तव ॥२९॥ यष्ट-
व्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ॥ इति यद्वचनं सीते सामान्यं विधिनो वरम् ॥१३०॥ एकः
स तनयो धन्यः कुलं य स्तारयेन्निजम् ॥ कृमि तुल्याश्च ते पुत्राः शतशो दुष्ट मार्गगाः ॥३१॥ इति
यद्वचनं सीते वरिष्ठं तत्स्मृतं बुधैः ॥ अन्यत्ते कारणं वच्मि यस्माते बहवः सुताः ॥३२॥ मया नै-
वार्पिता स्त्वत्र तच्छृणुष्व शुचिस्मिते ॥ विनोदा ते वदाम्यद्य मान्यं कथय मद्वचः ॥३३॥ बहु पुत्रै-
स्तु नारीणां तारुण्यं स्थास्यते न हि ॥ इति मत्वा ते तारुण्यछेदिनि बहु संततिः ॥३४॥ न मयात्रा-

पिता सीते गुह्यं विद्धिदिति मे प्रिये ॥ यदिच्छास्ति बहुनां ते तनयानां विदेहजे ॥३५॥ तर्हि ते द्वापरे कृष्णरूपेण द्वारकापुरी ॥ दश पुत्रान्प्रदास्यामि तदा तेषां सुखं भज ॥३६॥ कन्यामपि तदैकां तेऽहं दास्यामि नसंशयः ॥ तदा ते बहु पुत्रश्च तारुण्यं स्थास्यते न हि ॥३७॥ अतः स्त्रीणां सहस्त्राणि षोडशैक शतं पुनः ॥ तथा मुख्यास्त्वष्टनारी स्त्वयासह करोम्यहम् ॥३८॥ तदा बहुनां पुत्राणां स्नुषाणां त्वं सुखं भज ॥ अहं चापि बहुस्त्रीणां तदा सौख्यं भजामि वै ॥३९॥ इति राम वचः श्रुत्वा तदा सीता स्मितानना ॥ राघवं हर्षिता प्राह वाग्चातुर्यं कुतः प्रभो ॥१४०॥ एतल्लब्धं त्वया राम येन रंजयसीह माम् ॥ एवं परस्परं चोक्त्वा समालिंग्य परस्परम् ॥४१॥ अर्धरात्र्यां सुखं निद्रां चक्र-तुर्जानकी प्रभु ॥ एवं प्रोक्ता मया शिष्य दिनचर्या रमापतेः ॥१४२॥ इति श्रीशतकोटि रामचरितांतर्गत श्रीमदानंदरामायणे वाल्मीकिये राज्यकांडे उत्तरार्द्धे दिनचर्या व-र्णनं नाम एकोनविंशोध्यायः ॥ शुभभवंतु ॥ श्रीसीतारामचंद्रार्पणमस्तु ॥ सर्गः १९ ॥ श्लोक १४२॥

श्रावणशुक्ल १ शके १८७४

॥श्रीगणेशायनमः॥ श्रीरामदासउवाच ॥ अथैकदा वसिष्ठं हि प्रभाते चाब्रवील्लवः॥ किं-
चित्ते प्रष्टुमिच्छामि तत् त्वं वद मुनीश्वर ॥१॥ सर्वं यद्यपि जानामि वाल्मीकेश्च प्रसादतः ॥
तथापि लोकान्सकलान् ज्ञातुं पृच्छामि तेऽद्य हि॥२॥ यदास्माभिर्निशायां हि सर्वैर्निद्रा विधि-
यते ॥ तदा संश्रूयते कर्णे भ्रश्रवत्कस्य वै ध्वनिः ॥३॥ अमुं मत्संशयं छिंधि परं कौतुहलं गुरो
लवस्येति वचः श्रुत्वा वसिष्ठः स तमब्रवीत् ॥४॥ बहवो ब्रम्हहत्याश्च रावणेन कृताः पुरा ॥ येन
देहेन सोऽद्यापि लंकायां ज्वलते लव ॥५॥ रावणो रामहस्तेन वधान्मुक्तिं गतः क्षणात्॥ रामचिं-
तन पुण्येन वैरबुद्ध्या कृतेन च ॥६॥ आत्मनः सकलं पापं तेन दग्धं पुरैव हि ॥ देहेन न कृ-
तं तस्य देवानां नमनं पुरा॥७॥ संमार्जनादिकं कर्म देवागारेऽपि नो कृतम्॥ न कृता तीर्थ
यात्रा हि तस्य देहे न भक्तितः॥८॥ न देहेन तु निष्कामं तपश्चर्या व्रतं कृतम्॥ न देहः श्रमित
स्तस्य शीतोष्ण सहनादिभिः ॥९॥ एतादृश स्तस्य देहो बहु ब्राह्मणहिंसकः॥ लंकायां ज्वलतेऽ
द्यापि निशायां श्रूयतेऽत्र सः ॥१०॥ ज्वालानां भस्त्रब्दो यः पृष्ठो मां त्वया लव॥ जनशब्दाद्दिने नै-
व श्रूयतेऽत्र जनैः सदा ॥११॥ तस्य चितायामद्यापि वायुपुत्रेण प्रत्यहं ॥ काष्टभारं शतं नीत्वा
लंकायां क्षिपते मुहुः ॥१२॥ यदा तत्पाप शांतिः शा तदा भस्मो भविष्यति॥ अन्य ते कारणं वच्मि
तच्छृणुष्व शिशो लव॥१३॥ देहांते रावणेनापि रामाय याचितो वरः॥ वरेण येन लोकानां स्मर-
णं मे भविष्यति ॥१४॥ स त्वयामेव रोदयस्तच्छ्रुत्वा राघवोऽब्रवीत्॥ त्वद्देहज्वालिनिज्वा-

लाशब्दः सर्वे जना भुवि ॥ १५॥ श्रोष्यंति सप्तद्वीपेषु तेन ते स्मरणं सदा ॥ भविष्यंति हि सर्वे-
षां ब्रह्मांडांतर्निवासिनम् ॥ १६॥ एवं श्रुत्वा दशास्यः स वरं रामे लयं ययौ ॥ एवं यच्च त्वया पृष्टं
तत्सर्वं कथितं मया ॥ १७॥ गुरोरिति वचः श्रुत्वा तं नत्वा लवोऽपि च ॥ स्वगेहं गतसंदेह प्रययौ
शिबिकास्थितः ॥ १८॥ एकदा बंधुभिर्गेहे पुत्राभ्यां सीतयासह ॥ मुनिभिर्गुरुणा रामः संस्थितः
प्राह हर्षितः ॥ १९॥ यथा मयावतारेऽस्मिन्सुखं भुक्तं हि सीतया ॥ श्रीरामचंद्र उवाच ॥ श्रृण्वंतु
मुनयः सर्वे सर्वे श्रुण्वंतु बंधवः ॥ पुत्रौ सीता मंत्रिणश्च सर्वाः श्रुण्वंतु मातरः ॥ २०॥ यथा मया-
वतारेऽस्मिन्सुखं भुक्तं हि सीतया ॥ न तथान्येषु सर्वेषु ह्यवतारेषु वै तदा ॥ २१॥ अवतारास्तु
बहवः शतशोऽत्र मया धृताः ॥ नाना कार्याणि वै कर्तुं तेषां संख्या न विद्यते ॥ २२॥ सप्तावतार
स्ते ष्वेव श्रेष्ठास्त्वत्र मया धृताः ॥ ईदृशं न सुखं तेषु कदा भुक्तं मया भुवि ॥ २३॥ शंखासुरो
महादैत्यः पूर्वं जातो महोदधौ ॥ येन वेदा हृताः सर्वे सत्यलोका कृतायुगो ॥ २४॥ तदर्थं मत्स्य-
रूपेण ह्यवतारो मयाधृतः ॥ तं हत्वा क्षणमात्रेण विष्णुरूपं पुनः धृतम् ॥ २५॥ किं सुखं झष
जात्यां हि तिर्यग्योन्यतिगर्हिता ॥ अतस्तस्मिन्नवतारे न स्थितं हि चिरं मया ॥ २६॥ ततः स-
मुद्रमथने मज्जं तं मंदराचलम् ॥ दृष्ट्वा धृत्वा कूर्मरूपं स्वपृष्ठे पर्वतो धृतः ॥ २७॥ तच्चापि ग-
र्हितं रूपं मत्वा नैव चिरं धृतम् ॥ किं जलचर जात्यां हि सुखं तत्र भवेज्जले ॥ २८॥ ततो दृ-
ष्ट्वा सागरे हि मज्जंति पृथिवीं मया ॥ क्रोडरूपं मया धृत्वा दंष्ट्रायामवनीर्धृता ॥ २९॥ मम

पृथ्वीति संस्पर्द्धी हिरण्याक्षो मया हतः ॥ किं सुखं पशु योन्यां हि गर्हितायां भवेत्तले ॥३०॥
अतस्तस्मिन्नवतारे न लब्धं हि सुखं मया ॥ प्रल्हाद वचनात्स्तंभान्नारसिंहं स्वरूप धृक् ॥३१॥
अवतीर्णस्त्वहं भूम्यां हिरण्यकशिपुः क्षणात् ॥ मया तदा हतः क्रोधा तद्रूप अतिभासुरम् ॥३२॥ य-
न्दयान्निकटं कोऽपि प्रल्हादाच्च विना परः ॥ न मानवः स्थितो भूम्यां तत्र वार्ता सुखस्य का
॥३३॥ तदाति क्रोधरूपेण सिंहयोन्यां तु किं सुखम् ॥ मयानुभूतं विपुलं सुखेच्छा तृप्तिमापन ३४
ततो बलेर्मोहनार्थं खर्वरूपं तु वामनम् ॥ धृत्वा कृत्वा त्रिपाद्यां च्यां वनेः पाताल गः कृतः ॥३५॥ त-
त्र किं मुनिदेहेन वने सौख्यं भवेन्मम ॥ तत्र का सुखवार्तास्ति भूम्यां मे ब्रह्मचारिणः ॥३६॥ अत
स्तदैव सहसा नाकलोकं गतं मया ॥ न यत्रास्ति यथायोग्यं देहमप्यतिसुंदरम् ॥३७॥ पुनर्विप्रो-
द्भवेनैव जामदग्नि स्वरूपिणा ॥ एकविंशति द्वारं हि निःक्षत्री पृथिवी कृता ॥३८॥ सहस्रार्जुन ना-
मा स महावीरो हतस्तदा ॥ तच्चापि क्रोध संरक्तं मुनिरूपं मया धृतम् ॥३९॥ सुखवार्ता मुनीनां
हि कास्त्यत्र वनचारिणाम् ॥ ज्ञात्वेत्थं जन्मना तेन तपश्चर्या मया कृता ॥४०॥ किं सुखं तपस-
स्तत्र वने मे जातमुत्तमम् ॥ एवं षष्ठ धृताः पूर्वमवतारा मया भुवि ॥४१॥ न जाता सुखवार्तापि त-
त्र क्वापि मुनीश्वराः ॥ द्वापारेऽग्रे कृष्ण रूपं गोकुलेऽत्र धरोम्यहम् ॥४२॥ नेदृशं तत्र भोक्ष्यामि सु-
खं श्रृणु त विस्तरात् ॥ मातृ पितृ विहीनश्च तदा स्थास्यामि शैशवे ॥४३॥ कारागृहस्थितिः पित्रो-
र्जन्मादोवेव मे भवेत् ॥ पारकीये नंद गेहे वृद्धिं गच्छामि गोकुले ॥४४॥ गोपवेषस्य किं सौ-

ख्यं गोपृष्ठे भ्रमतो मम ॥ स्त्री गो नागाश्व पक्ष्यादि बहुन्तत्र निहन्म्यहम् ॥ ४५॥ देवपत्नी वरात्कुर्यां परस्त्रीगमनादिकम् ॥ नानाचौर्यादि दुष्कर्म कृत्वामि गोकुला ततः ॥ ४६॥ मधुरायां हनिष्यामि सगजं कंस मातुलम् ॥ तत्र दास्यां रतिं कुर्यां नैष्ठुर्यं गोपिकादिषु ॥ ४७॥ मम्दुक्ता गोपिकाः सर्वा रामो बंधुर्भजिष्यति ॥ अन्यच्च कालयवन भयान्मे हि पराभवः ॥ ४८॥ न पराभवतो दुःखं किंचिदस्ति जगत्रये ॥ ततोऽहं स्वस्थलं त्यक्त्वा तटाके सागरस्यच ॥ ४९॥ स्थास्यामि स्वल्पकालं हि चिरकालं न मे स्थितिः ॥ न स्थलं मध्यदेहि च न राज्यं मे भविष्यति ॥ ५०॥ विना राज्येण किं सौख्यं पराज्ञा वशवर्तिनः ॥ छत्रादि राज्यभोगाश्च तस्मिन्जन्मनि मे नहि ॥ ५१॥ बहु स्त्रीणामेक देह स्तदायं मे भविष्यति ॥ तदा का सां सुखं देयं दुःखं कासां तदा मया ॥ ५२॥ एवं सदा व्यग्र चित्तस्तासां रंजन कर्मणि ॥ तत्र का सुखवार्तास्ति निशायां भ्रमतो मम ॥ ५३॥ घटिकायां षट्त्रिंशप्तं च शत गृहाणि हि ॥ पर्यटन्नप्यष्टविंशत्स्त्रीगेहानि तदा मम ॥ ५४॥ शेषाणि गंतु नैवास्ति कालो भानुरुदेष्यति ॥ त्रिंशत्घटिकामयि रात्रीस्त्वेवं मे सा गमिष्यति ॥ ५५॥ तदा मे भ्रमतो रात्रौ कुतो निद्रा कुतः सुखम् ॥ यदा भवेन्निशावृद्धिः किंचिन्निद्रा तदाप्नुयाम् ॥ ५६॥ यस्येच्छा स्तत्र दुःखं हि भोक्तुं तेन नरेण हि ॥ कर्तव्या बहवः पत्न्यो द्रष्टव्यं तत्फलं ततः ॥ ५७॥ एवं भवेन्न मे सौख्यं द्वापारे कृष्णजन्मनि ॥ भविष्यत्त्यवतारस्य समाप्तिश्चापि शापतः ॥ ५८॥ ततो दैत्यान्यज्ञकर्मसक्तान् दृष्ट्वा पुनस्त्वहम् ॥ कलावग्रे बुद्धरूपं धरिष्याम्यतिमोहनम् ॥ ५९॥

निजवाक्यैर्मतिस्तेषां दैत्याना यज्ञ कर्मतः॥ परिवर्त्य कियत्कालं स्थास्यामि जगती तले॥ ६०॥
तदाऽहं मौनमाश्रित्य मलिनः केशलुंचकः॥ यूकादि जीवधारि च सर्वेषामुपदेशकृत्॥ ६१॥ अहिं-
सन व्रतं सर्वान्दर्शयिष्याम्यहं जनान्॥ तज्जन्मन्यति दुःखं मे केश यूका मलादिना॥ ६२॥ त-
तोऽग्रेऽहं धरिष्यामि कल्किरूपं महत् कलेः॥ अंते दृष्ट्वा जनानां च सर्वत्र वर्णसंकरम्॥ ६३॥ भूत्वा-
त्र विप्रदेहेन खड्गधारी हयस्थितः॥ संहारं क्षणमात्रेण दुष्टानां हि करोम्यहम्॥ ६४॥ सोऽवतारो-
नाति चिरं मम स्थास्यति भूतले॥ न तत्र सुखलेशोऽपि मे भविष्यति भूसुराः॥ ६५॥ प्रवर्तयि-
ष्यति पुनस्ततोऽग्रे तत्कृतायुगम्॥ पूर्ववच्च पुनस्तत्र ह्यवतारान्करोम्यहम्॥ ६६॥ एव नवाव-
तारेषु न भुक्तं हि सुखं मया॥ अतस्त्वस्मिन्नवतारे सुखं भुक्तुं यथेच्छया॥ ६७॥ नानेन
सदृशः कश्चिदवतारोऽवनीतले॥ पूर्वं भूतो ममाग्रेऽपि नभविष्यति वै कदा॥ ६८॥ सप्तद्वीपपति
र्यत्र यत्र सीता शुभा प्रिया॥ यत्रेमौ बालकौ पुत्रौ महावीरौ धनुर्धरौ॥ ६९॥ त्रयस्त्वेते बंधवश्च त्रैलो-
क्यजयिनः शुभाः॥ कामधेन्वादि रत्नानि सप्त यत्र ममांतिके॥ ७०॥ साक्षादयं वेदरूपो वसिष्ठ
स्त्वत्र मे गुरुः॥ आर्यावर्त पुण्यदेशेऽयोध्यायां वसतिर्मम॥ ७१॥ धेनु, चिंतामणि कौस्तुभ
कल्पवृक्ष पारिजात पुष्पकैरावतकुलोद्भवचतुर्दतश्वेतगजाश्चेति सप्तरत्नानि॥ × × × ×॥
राज्यभोगादि भोगानां भोक्ताहं त्वत्र नो परः॥ यत्र सत्यव्रतं मेऽस्ति यत्रैक दयिता व्रतम्॥ ७२॥
यत्रैकेनैव बाणेन मया वाल्यादिका हताः॥ यत्रैकैव हि सीताया मम शय्या न चापरा॥ ७३॥ यत्राप्र-

तिहताऽज्ञा मे त्रैलोक्ये हि मुनीश्वराः॥ यत्र यानं पुष्पकं तु यत्र दूतांजनीसुतः॥७४॥ सुग्रीव रा-
क्षसेंद्रौ च यत्र मित्रौ ममांतिके॥ कोदंड सदृशं चापं यत्र मेऽरिनिषूदनम्॥७५॥ सूर्यवंशे यत्र ज-
न्म तातो दशरथो वरः॥ कौसल्या यत्र जननी यत्राहं स्ववशः सदा॥७६॥ सुमेधा सदृशी यत्र
मे श्वश्रू स्नेह वर्धिनि॥ विदेहः श्वशुरो यत्र विद्यादो यत्र गाधिजः॥७७॥ लक्ष्मणो यत्र मे मंत्री
सरयू यत्र मे नदी॥ पार्श्वगाद्यं गदाद्याश्च चतुर्दंतो गजोमहान्॥७८॥ द्विजेच्छापूरणं यत्र
व्रतं मे कुंठितं सदा॥इदं वैकुंठसदृशं गृहं यत्रातिभासुरम्॥७९॥ चिंतामणिरलंकारो हृद-
ये यदि वर्तते॥ एकादश सहस्राणि वर्षाण्यायुश्चिरं मम॥८०॥ अनम्रं मे शिरश्चेदं केषाम-
प्यवनी भृताम्॥ एवं मया सुखं भुक्तमिहजन्मनि भूसुराः॥८१॥ नाल्पमप्युर्वरीतास्ति सुखे-
च्छा मम भूतले॥ अतएवावतारोऽयं पूर्णरूपान्मया धृतः॥८२॥ भूतभाव्यवतारा ये तेंऽशादे-
व मया धृताः॥ यद्धतं तु वने पूर्वं सीतया बंधुना मया॥८३॥ तच्च जनोपदेशार्थं भूभार हरणाय च
जनोपदेशः कीदृक् स कृतस्तं प्रदाम्यहम॥८४॥ पितुर्वचो माननीयं यद्यप्यति श्रमप्रदम्॥ पुत्रै
रित्युपदेशार्थं तद्वाक्यं पालितं मया॥८५॥ न हंतव्या मया क्रोधाद्दुष्टा किं कैकयीतदा॥ तथा
सा मंथरा चापि मे राज्ये विघ्नकारिणी॥८६॥ किं तदा कुंठिता शक्तिः कैकेयी मंथरा वधे॥ स्त्री ह-
त्या नैव कर्तव्या चेति सर्वान्सुशीक्षितु॥८७॥ सापत्न्यमातावाक्यं तु पालनीयं स्वमातृवत्॥ स्व-
सुखार्थं वधोन्यस्य न कर्तव्यो जनैरिति॥८८॥ उपदेष्टुं मया नैव कैकेयी मंथरा हते॥ न बंधुहिंसा

सा कार्या परराज्यं न कांक्षयेत् ॥८९॥ अहमुपदिशन्नित्यं जनान्बंधु हतो न मे ॥ मृते पितर्यपि
हृतं न तद्राज्यं बलान्मया ॥९०॥ राज्यासक्ता नरा भूम्यां भोगासक्ता भवंतु न ॥ उपदेष्टुं जनानि-
त्यमहं पूर्वं वनं गतः ॥९१॥ मातृ पितृ सुहृत्स्नेहासक्तं न कारयेत् ॥ इत्थं मयोपदिशता त्यक्तः
स्नेहस्तदा द्विजाः ॥९२॥ सुखं दुःखं समंज्ञेयं सुखे हर्षो न मानयेत् ॥ शोकः कार्यो विपत्तौ न चे-
ति लोकान्प्रसीदतु ॥९३॥ राज्यसौख्यं मया त्यक्ता भुक्ताः क्लेशास्तदा वने ॥ कामादिनां रिपू-
णां च दुष्टानां हि वधो भुवि ॥९४॥ जनै कार्यः सदा चेति ह्युपदेष्टुं मया वने ॥ बहवो निहतास्त-
त्र राक्षसा मुनिहिंसकाः ॥९५॥ स्त्रीसंगः सर्वदा त्या---त्वेकाकी च तपश्चरेत् ॥ नासक्तं निज चिं-
---हि स्त्रीषु कार्यं नरैः कदा ॥९६॥ इत्थं मयोपदिशता सीतायाश्च तदा वने ॥ वियोगो दर्शितो लो-
कान्मत्तो भिन्ना न जानकी ॥९७॥ कदापि जायते विप्राः सत्यं चेदंऽब्रवीम्यहम् ॥ आर्तस्य रक्षणं
कार्यं कार्यो दुष्टस्य निग्रहः ॥९८॥ मयोपदिशता चेत्थं जनान्सुग्रीव राक्षसौ ॥ रक्षितौ निहतौ वा-
लि रावणां वितरे हताः ॥९९॥ कीर्तिः कार्या जनेष्वत्र मयोपदिशतात्विति ॥ पाषाणास्तारिता
नीरे किमाकाश गतिर्न मे ॥१००॥ यद्यपि शुध्दं स्वे चित्ते विरुध्दं च जनेषु यत् ॥ त्यक्तव्यं तत्प्रियं
चापि मयोपदिशतात्विति ॥१॥ जनानपापा ज्ञात्वापि लंकायां दिव्य दानतः ॥ लोकापवाद भीत्या
सा पुरा त्यक्तात्र जानकी ॥२॥ स्वयमेवात्र यत् त्यक्तं शुध्दं ज्ञात्वा हि तत्पुनः ॥ अंगिकार्यं जनैर्बु-
ध्द्या मयोपदेशिता त्विति ॥३॥ जनानंगीकृता सीता पुरा त्यक्ता मया शुभा ॥ एकपत्निव्रतादि-

नि राज्यकर्माण्यनेकशः ॥४॥ अश्वमेधादि यज्ञाश्च सदाचारो जयस्तपः॥ स्नानसंध्यादिकं यद्य-न्मयात्र क्रीयते सदा ॥५॥ तत्सर्वं जनशीक्षार्थं मुक्तसंगस्य किंमम॥ कर्मातीतस्य भो विप्राः सदानंद स्वरूपिणः॥६॥ अहं सदानंदमयः सुखात्मा सुखदो नृणाम्॥ अवतार परत्वेन सुखं दुःखं मयाऽकथि॥७॥ यदत्र भवतामग्रे कौतुकार्थं न संशयः॥ उपासकानां तोषार्थमवतार स्त्वयं मया ॥८॥ विशेष गुणवानुक्तः संति सर्वे समा मम्॥ सम्यक् बुध्य विचाराच्च वरिष्ठः सकलेष्वयम् ॥९॥ द्वावतारौ जलचरौ द्वावतारौ वनचरौ ॥ द्वौ तौ च वल्कलधरौ एको वैश्यश्च गोवळः॥११०॥ एकस्तु मलिनाश्चापि परश्च क्षणिकस्तथा॥ एवं भूता भविष्यास्तेऽवतारास्तोषदा न मे॥११॥ अयं सर्व वसिष्ठोऽत्र ह्युपासक जनप्रियः॥ अवतारस्त्वहं वेद्मि सेवनान्मंगलप्रदः॥१२॥ चरित्राण्यति रम्याणि पातकघ्नानि वै मया ॥ कृतान्यस्मिन्नवतारे श्रवणान्मुक्तिदानि हि ॥१३॥ सदा जना भजंत्वत्र ह्यवतार ममुं मम॥ भक्तास्तस्यावतारस्य ते मेऽतीव प्रियः सदा॥१४॥ एवं सर्वमिदं विप्रा आनंदेन मयोदितम्॥ दोषमारोपयंत्यस्मिन्नवतारेऽपि ये जनाः॥१५॥ ते मद्द्वेष्या नरकेषु पतंति सह पूर्वजैः ॥श्रीरामदासउवाच॥ एवमुक्त्वा रामचंद्रः संपूज्य हि मुनीश्वरान्॥१६॥ विसर्ज्य सकलान्सीतां रंजयामास राघवः॥ एवं शिष्य मया प्रोक्तामवतार प्रवर्णनम्॥११७॥ इति श्री शतकोटि रामचरितांतर्गते श्रीमदानंदरामायणे वाल्मीकिये राज्यकांडे उत्तरार्द्धे अवतारवर्णनं नाम विंशत्सर्गः ॥ शुभं भवतु॥ श्रीसीतारामचंद्रार्पणमस्तु ॥

कापुसतळणी
श्रावण शु॥ ९ शके १८७४

॥श्रीगणेशायनमः॥ रामदासउवाच ॥ एकदा जानकीं द्रष्टुं सप्तद्वीपांतर स्त्रियः॥मुनिनां पार्थि-
वानां च सुहृदां व्यवसायिनाम् ॥ १ ॥ सामान्य क्षत्रियाणां च वैश्यानां च सहस्रशः॥ चैत्रस्नान मि-
षेणैव ययुर्वाहन संस्थिताः॥२॥ दृष्ट्वा समागता स्ताश्च जानकी गजगामिनि ॥ प्रत्युद्गम्यानया-
मास स्त्रीशालामतिसंभ्रमात्॥३॥पूजयामास ताः सर्वा नानालंकारभूषणैः॥ ताः सर्वाः पूजया-
मासुः सीतां सिंहासनस्थिताम्॥४॥ दिव्यालंकार वस्त्रौघे नानादेशोद्भवैर्वरैः॥ परिवार्य त-
तः सीतां तस्थुःसर्वाः स्त्रियाश्चताः॥५॥ श्रुत्वा सीतामुखाद्रामचरित्राणि सहस्रशः॥ ता स्तुष्टाः
श्रोतुमुद्युक्ता स्तत्पाणिग्रहणं शुभम्॥६॥ स्मितास्या स्ताःस्त्रियः सर्वा स्तदा प्रोचुर्विदेहजाम्
॥ त्वत्पाणिग्रहणोत्साहं श्रोतुं वांछामवै वयम्॥७॥ तत्सर्व विस्तरेणाद्य वक्तुमर्हसि जान-
कि॥ इति तासां वचः श्रुत्वा लज्जया जानकी तदा॥८॥ स्वां सखीं चोदयामास तुलसीं रुक्म-
भूषिताम्॥ तुलस्युवाच ॥ श्रृणुध्वं सकला नार्यः पाणिग्रहणमुत्तमम्॥ ९ ॥जानक्याः कथया-
म्यद्य महामंगलदायकम्॥ वस्तोषार्थं हि संक्षेपा च्छ्रवणात्पुण्य वर्धनम् ॥ १०॥ साकेताद्रघु-
नंदनेन स मुनिर्भ्रात्रा युतेनाश्रमं स्वं गत्वा विनिहत्य राक्षसदलं तेनैव यज्ञं निजम्॥ संपाद्याथ
रथस्थितश्च मिथिलामार्गे हरेरंघ्रिणः संस्पर्शाद्धतकल्मषां समकराच्छदार्यां मुने र्गाधिजः॥११॥ग-
त्वा गाधिजसंयुतश्च मिथिलां भ्रात्रा सभासंस्थितश्चाधःपतितं निरीक्ष्य च रीपुं स्वीयं मुनेराज्ञया॥
तन्नत्वा गिरिजेश्वरस्य च धनुः कृत्वा त्रिखंडं क्षणे सीताहस्तविसर्जितां निजबले मालां दधौराघवः

॥१२॥ बंधूनां च निजं विधाय मिथिलापुर्यां विवाहान्शुभान् पितृभ्यां सहभार्यया रघुपतिराज्ञाति संपूजितः॥ त्यक्त्वा तां मिथिलां ययौ निजपुरीं मार्गे कृधा तिष्ठतो दुर्दर्प जमदग्निजस्य धनुषा सोऽपाहरल्लीलया ॥१३॥ एवं नार्यश्च सीताया विवाहः कथितो मया॥ युष्माभिः कौतुकात्पृष्ठो यः सर्वमंगलप्रदः॥१४॥ श्रीरामदासउवाच ॥ एवं स्त्रियश्च ताः श्रुत्वा परमां मुदमाप्नुयुः॥ ततस्ताः पूजयामासुः पुनः सीतां मुदान्विताः॥१५॥सीतया पूजिताः सर्वास्तां नत्वाऽऽमंत्र्य जानकीम्॥ चैत्रस्नानं समाप्याथ जग्मुः स्व स्व स्थलं प्रति॥१६॥ अथैकदा गुरोरास्याद्रामाग्रे संस्थितो लवः॥ श्रृण्वन्पुराणं पप्रच्छ श्रोतुं सर्वान्जनान्गुरुम्॥१७॥ गुरो ते प्रष्टुमिच्छामि तत् त्वं वद मुनीश्वर॥ पुस्तकेषु च सर्वत्र पत्रे पत्रे पृथक्पृथक्॥१८॥ एकत्र लिख्यते श्रीति रामेत्यैकत्र लिख्यते॥ किमर्थं मानवैस्तच्च तत्सर्वं कथयस्व माम्॥१९॥ इति तद्वचनं श्रुत्वा गुरुस्तं वाक्यमब्रवीत्॥ सम्यक् पृष्टं त्वया वत्स लोकसंदेहहृत्परम्॥२०॥ श्रीरामचरितात्पूर्वं व्यासेन मुनिना पृथक्॥ अष्टादश पुराणानि तथोपपुराणानि च॥२१॥ कृतान्यन्यैश्च मुनिभिः षट्शास्त्रादिन्यनेकशः॥ श्रीरामचरितादेव श्लोकमात्रमपीहयत्॥२२॥ सर्वमस्तीति शब्दोद्धुमादावेकत्र श्रीति च॥ विलिख्यैकत्र रामेति तन्मध्ये परिलिख्यते॥२३॥ अनया संज्ञया सर्वे ज्ञास्यं त्वग्रे जना भुवि॥ श्रीराममध्ये लिखितं श्रीरामचरितादिदम्॥२४॥ कृतमस्ति पृथक् भिन्नं पुरा व्यासादिभिस्त्विति॥ एतस्मिन्नंतरे बाळसूचनार्थं विलिख्यते॥२५॥ पत्रे पत्रे श्रीरामेति सर्वत्र जगतीतले॥ अन्यते कारणं वच्मि

तच्छृणुष्व शिशो लव ॥२६॥ अशुद्धं लिखितं यच्चाज्ञानिने भ्रांति तोऽपि हि ॥ पत्रं तच्चाति शुद्धं हि भवतिति मनिषया ॥२७॥ श्रीरामेति च सर्वत्र पत्रे पत्रे विलिख्यते ॥ यदंकितं श्रीरामेति नाम्ना पत्रं तु लेखकैः ॥२८॥ ज्ञेयं तदतिशुद्धं हि गतदोषस्तु लेखकः ॥ भवत्यत्र जगत्यां हि सत्यं लव वदाम्यहम् ॥२९॥ इति श्रुत्वा गुरोर्वाक्यं वसिष्ठं प्रणिपत्य च ॥ लवः स गतसंदेह स्तूष्णिमासी मुदान्वितः ॥३०॥ एकदा रघुनाथस्तु मंचकोपरि संस्थितः ॥ मुखा तांबूलस्वरसं प्रथमं दोषकारकम् ॥३१॥ त्यक्तु कामो न ददर्श पात्रं निष्ठिवनस्य सः ॥ तस्यांतिक स्थिता दासी नाम्ना वै सुगुणेति च ॥३२॥ ता दृशं राममालोक्य पात्रं दूरं विलोक्य च ॥ कृत्वा पात्रं स्वहस्ताभ्यामंजलामेव तद्रसम् ॥३३॥ रामेण मुक्तमास्याच्च जग्राह वेगवत्तरा ॥ ततः सा प्राशनं रामोच्छिष्टं दासी चकार तत् ॥३४॥ महाप्रसादं तं मत्वा दैवाल्लब्धं विचिंत्य च ॥ तदाति तुष्टः श्रीरामस्तस्यै तत्कर्मणाब्रवीत् ॥३५॥ वरयस्व वरं दासी यत्ते मनसि वर्तते ॥ तद्रामवचनं श्रुत्वा दासी प्राह रघूत्तमम् ॥३६॥ एकपत्निव्रतं तेऽस्ति सांप्रतं त्विहजन्मनि ॥ जन्मांतरे त्वया संगं वांछामि रघुनायकम् ॥३७॥ तत्तस्या वचनं श्रुत्वा राघवो वाक्यमब्रवीत् ॥ यदाऽग्रे कृष्णरूपेण गोकुलेऽवतराम्यहम् ॥३८॥ तदा राधेति नाम्नी त्वं गोपपत्नी भविष्यसि ॥ तदा मया चिरं क्रीडा त्वं भोक्ष्यसि न संशयः ॥३९॥ तदा मयाति प्रीता त्वं गोपिकासु भविष्यसि ॥ इति दासी रामचंद्राद्वरं लब्ध्वा तुतोष सा ४० अन्यच्छृणु विष्णुदास रामचंद्रकथानकम् ॥ यत्प्रोच्यते मयात्वग्रे महत्कौतुक कारकम् ॥४१॥

एकदा राघवः श्रीमान्सभायामासनोपरि ॥ संस्थितो बंधुभिः पुत्र मंत्रिभिः पुरवासिभिः॥ ४२॥ एत-
स्मिन्नंतरे कश्चिद्ब्रह्मचारी समाययौ ॥ युवा दंडधरः श्रेष्ठः कमंडलुधरः शुचिः ॥ ४३॥ एण कृष्णा-
जिन धरः काषायवसनो व्रती ॥ तं दृष्ट्वा राघवः श्रीमानवतीर्य वरासनात्॥ ४४॥ प्रत्युद्गम्याथ तं
नत्वाऽऽसने समुपवेश्य च ॥ पूजयामास विधिना धेनुमग्रे निवेद्य च॥ ४५॥ ततः संपूजितं वि-
प्रं राघवो वाक्यमब्रवीत् ॥ अद्य धन्योस्म्यहं विप्र यतस्ते दर्शनं मम ॥ ४६॥ जातमाज्ञाप्य तां किंचि-
द्यदर्थं भवतागतः ॥ तद्राघव वचः श्रुत्वा ब्रह्मचारी वचोऽब्रवीत्॥ ४७॥ वाल्मीकिना प्रेषिताहं य-
स्मात्तच्छृणु राघव॥ यष्टु कामो महायज्ञं स वाल्मीकिर्महामुनिः ॥ ४८॥ त्वामाकारयितुं मां त्वन्नि-
कटं वेगवत्तरः ॥ प्रेषितवानतस्त्वं हि सीतया बंधुभिः सह॥ ४९॥ प्रस्थानं कुरु राजेंद्र मुहुर्तस्त्व-
स्त्वद्य वर्तते॥ एवं वदति श्रीरामं भूसुरे सदसीस्थिते ॥ ५०॥ समाययौ ब्रह्मचारी द्वितियो गाधि-
जाश्रमात्॥ तं दृष्ट्वा पूर्ववद्रामः प्रत्युद्गम्य द्विजोत्तमम्॥ ५१॥ आसनेऽन्ये चोपवेश्य पूजयामास
सादरम्॥ ततस्तत्पुरतः स्थित्वा तं पप्रच्छ रघूत्तमः॥ ५२॥ यदर्थं श्रमितोसि त्वं तन्मामज्ञाप्यतां
मुने ॥ तद्रामवचनं श्रुत्वा ब्रह्मचारी वचोऽब्रवीत्॥ ५३॥ राम त्वां गाधिजेनाहं प्रेषितोऽस्मि ज-
वेन हि॥ यष्टु कामो महायज्ञं विश्वामित्रोऽस्ति राघव॥ ५४॥ त्वं तेनाकारितश्चासि प्रस्थानं कुरु
सत्वर ॥ ब्रह्मचारिणोस्तद्वाक्यमुभयोः स रघूत्तमः ॥ ५५॥ श्रुत्वा विहस्य प्रोवाच द्विजोभ्यां वै
तथेति च ॥ तदाश्चर्यजाः प्रापुः प्रोचुस्ते तु परस्परम्॥ ५६॥ कथमद्योभयोः साकं रामो गच्छति

तन्मखौ ॥ केचिदूचु राघवाय किमशक्यं तवात्र हि ॥५७॥ यथा स्त्रीणां वने पूर्वं तथाऽस्माकं
हि दर्शनम् ॥ समागच्छं ता लंकाया: पुरा भरतदर्शने ॥५८॥ भिन्नरूपेण रामेण सर्वेषामर्पितं
पृथक् ॥ तद्वदत्रापि द्विविधा भूत्वा गच्छति तन्मखौ ॥५९॥ किमाश्चर्यमिदं चाद्य किमशक्यं प-
रात्मने ॥ एवं वदत्सु पौरासु लक्ष्मणं प्राह राघवः ॥ ६०॥ अद्यैवाहं गमिष्यामि भोजनानंतरं बहिः ॥
वासोगेहानि नेयानि बहिःसेनां प्रचोदय ॥६१॥ आज्ञापनीयं वाद्यानां ध्वनिं कर्तुं हि सेवकः ॥
तद्रामवचनं श्रुत्वा तथेत्युक्त्वा स लक्ष्मणः ॥६२॥ कारयामास वाद्यानां ध्वनिन्दूतैश्च संभ्रमात्
॥ सैन्यं प्रचोदयामास बहिर्वासो गृहाण्यपि ॥६३॥ नेतुमाज्ञापयामास दूतान् ते निन्युरादरात् ॥
ततो रामोऽपि विप्राभ्यां गृहं गत्वा विदेहजाम् ॥६४॥ सर्वं वृत्तं निवेद्याथ कृत्वा विप्रैर्हि भो-
जनम् ॥ सीतायै करणीपृष्ठे बंधुनारोहयत्प्रभुः ॥६५॥ पुष्पके पौरनारीश्च करणीषूर्मिला-
दिकाः ॥ समारोहयच्छ्रीरामः स्वयं तस्थौ गजोपरि ॥६६॥ लक्ष्मणाद्या गजेष्वेव ते समारु-
रुहुस्तदा ॥ निनेदुश्चाथ वाद्यानि ननृतुर्वारयोषितः ॥६७॥ तुष्टुवुर्मागधाद्याश्च प्रजगुः सु-
स्वरं नटाः ॥ एवं समाययौ रामस्तदा वासोगृहाणि सः ॥६८॥ तां रात्रीं समतिक्रम्य प्रभाते रघु-
नंदनः ॥ स्नात्वा नित्यविधिं कृत्वा गजारूढो भवत्पुनः ॥६९॥ क्रोशद्वयं ततो गत्वाऽग्रे द्वौ मा-
र्गौ निरीक्ष्य च ॥ ससैन्ये द्वे निजे देहे चकार रघुनंदनः ॥७०॥ तदा द्वयोर्मार्गयोश्च ससैन्यौ
सीतया युतौ ॥ पुत्राभ्यां बंधुभिर्युक्तौ द्वौ रामौ सकला जनाः ॥७१॥ ददृशुः पुष्पके द्वौऽथ जातौ

द्वौ ब्रह्मचारिणौ ॥वाल्मीकीय ब्रह्मचारी त्वेकःस स्वगुरुं ययौ ॥७२॥ विश्वामित्राध्वरं चान्यः श्रीरा-
मेण मुदा ययौ ॥गाधिजेयो ब्रह्मचारी त्वेकःस स्वगुरुं ययौ॥७३॥ वाल्मीकेरध्वरं चान्यः श्रीरा-
मेण ययौ तदा॥ एवं ते सारमेयां ताः सर्वे देहद्वयानि हि ॥७४॥ निजानि ददृशु स्तत्र विस्म-
याविष्ट मानसाः॥ एवं तौ रघुवीरौ हि तयोर्मुन्यो स्तदाश्रमे॥७५॥ससैन्यौ सीतया युक्तौ बंधु
पुत्र समन्वितौ ॥जग्मतु र्वै मुनिभ्यां हि प्रत्युद्गम्याति पूजितौ॥ ७६॥ तयोर्यागौ विधायाथ परिपू-
र्णौ पुनः पुरीम्॥समाजग्मतुः श्रीरामौ ससैन्यौ पूर्ववन्मुदा॥ ७७॥ यत्र द्वे निजदेहे वै कृतेतर र-
घूत्तमौ ॥समागत्य पुनश्चैक निजं देहं चकार सः॥७८॥वाल्मीकिये ब्रह्मचारे विश्वामित्र द्वि-
जस्य च ॥ भिन्न देहे त्वेकरूपं भवत स्तौ तदा द्विजौ ॥ ७९॥सैन्यं च पुष्पकं चापि बभूवै-
कं तु पूर्ववत्॥ ततः श्रीरामचंद्रः स विवेश नगरीं निजाम्॥८०॥ तदा निनेदु र्वाद्यानि ननृ-
तुर्वारयोषितः॥पौरनार्यो विमानस्था ववर्षुः पुष्पवृष्टिभिः ॥८१॥ तुष्टुवु र्मागधाद्याश्च प्रज-
गु स्ते नटादयः॥एवं नानाकौतुकानि पश्यन्मार्गे शनैः शनैः॥८२॥ ययौ निजगृहं रामः सभायां
संविवेशह ॥सीताऽपि निजगेहं सा विवेश ह्युर्मिलादिभिः ॥८३॥ एवं भूसुर रामेण कौतुकानि
महंति च ॥ अमानुषीणियान्यत्र कृतानि च सहस्रशः ॥८४॥ वाल्मीकिना विस्तरेण वर्णितानि
हि कृत्स्नशः॥ सारसारं मया तेभ्यः संगृह्याथ कथानकः ॥८५॥ तवाग्रे कथ्यते शिष्य संक्षेपे-
णाज्ञया प्रभोः॥ त्वं धन्योसि यदर्थं श्रीरामेणाज्ञापितस्त्वहम्॥८६॥वक्तुं स्वचरितं पुण्यं रम्य-

मानंददायकम् ॥ वाल्मीकिश्चापि धन्यः स भावि संवादमावयोः ॥८७॥ यः पूर्वं विरचितवा-
न्स्वीयकार्येऽत्र भूतवत् ॥ तथा रामस्य चरितं पूर्वं रामावतारतः ॥८८॥ येन संवर्णितं कृत्स्नं
गोप्यं यच्चाकृतं रहः ॥ न वाल्मीकोपमः कश्चित्कविर्भूतो भविष्यति ॥८९॥ इति श्रीशतकोटि
रामचरितांतर्गत श्रीमदानंदरामायणे वाल्मीकिये राज्यकांडे उत्तरार्धे दासीवरदानं तथा
रामेण देहद्वयकरणं नाम एकविंशोऽध्यायः ॥ शुभमभवंतु ॥ श्रीसीतारामचंद्रार्पणमस्तु ॥

कापुसतळणी, मंगलवार
श्रावणकृष्ण ७ शके १८७४

॥श्रीगणेशाय नमः॥ श्रीरामदास उवाच ॥ इदानीं रामचंद्रस्य लीलाकौतुकमुत्तमम्॥ अन्यद्रम्यं वर्ण्यते हि मया
तच्छुणु सादरम् ॥१॥ एकदा राघवः तस्थौ सभायामासनोपरि ॥ बंधुभिर्मंत्रिवर्गैश्च पौरैर्जानपदैः सह ॥२॥ पुत्रा-
भ्यां च सुहृद्भिश्च मित्रैर्मंत्रिजनैः सह ॥ एतस्मिन्नंतरे भूरिकीर्तिना सुहृदाचरैः ॥३॥ द्राक्षाफलादिभिः पूर्णास्तथा
पुष्पैः सुपूरिताः ॥ करंडिकाः प्रेषिताश्च राघवार्थं सहस्रशः ॥४॥ ताः सर्वा राघवो दृष्ट्वा प्रेषयामास जानकीम्॥ युक्ता स-
खिभिः सीतायीः क्रीडाशालास्थिता मुदा ॥५॥ दृष्ट्वा करंडिकाः सर्वा स्वेकामुद्घाटयत्तदा ॥ यस्यां ता रामसान्य-
व दृष्ट्वा रम्याणि जानकी ॥६॥ करेणादाय पद्मंच राघवायार्पितं विना ॥ सा तत्सुगंध जग्राह वारंवारं मुदान्विताः॥७॥
करंडिकां पूर्ववच्च समाच्छाद्य विदेहजा ॥ स्थापयामास गेहेषु सर्वास्ताश्च करंडिकाः ॥८॥ तद्वृत्तं रामचंद्रोऽपि
सर्वं ज्ञात्वा सभास्थितः॥ चित्ते वीचारयामास वारंवारं मुदान्वितः ॥९॥ सीतयेदं कृतं कर्म योग्यं भुवि स्मृ-
तं नहि ॥ यन्मया पतिना भुक्तं पद्ममास्वादितं तया ॥१०॥ अग्रेऽप्येवं स्त्रियः सर्वाः करिष्यत्यत्र वै भुवि॥
सीतादर्शित मार्गेण तस्माच्छीक्षां करोम्यहम्॥ ११॥ एवं मनसि निश्चित्त्य ततः स रघुनंदनः ॥ तूष्णिमेव गृहं
गत्वा पूर्ववज्जानकीं मुदा ॥१२॥ रंजयामास विविधैर्नाना क्रीडादि कौतुकैः ॥ सीतापि पेटिकाः सर्वा राघवाग्रे
सहस्रशः ॥१३॥ आनीय दर्शयामास फलपुष्पादि पूरिताः ॥ रामो दृष्ट्वाताः सर्वा समुद्घाट्य पृथक् पृथक् ॥१४॥
प्रेषयामास बंधूना गेहेषु दश पंच च ॥ फलादिनां पेटिकाश्च नानाचित्र विचित्रता ॥१५॥ मातृनां सकलानां च
गृहेष्वपि तथा पुनः॥ पुत्रयोः सुहृदां चापि मित्राणां च गुरोस्तथा॥१६॥ पौराणां चापि गेहेषु सेवकानां गृहेष्वपि
दासीभ्यश्च शुभा दत्वा पेटिका सप्तपंच च ॥१७॥ सीतायै शतशो दत्वा मुदा ताभ्यो रघूत्तमः॥ फलानि दश पं-

चाष्ट स्वयं भुक्त्वा ततः परम् ॥१८॥पद्मादीनि सुपुष्पाणि विभज्य पूर्ववत्पुनः ॥ सीतायै शतशो दत्वा स्वय-
मंगीचकार सः ॥१९॥ अज्ञातद्रव तद्वृत्तं गोपयामास चेतसि ॥ अथैकदा जनकजा हरिदिन्यामुपोषणम् २०
कृत्वाऽपरे दिने स्नात्वा गत्वा वृंदावनांतिकम् ॥ तुलसी पूजयित्वा तां सा चकार प्रदक्षिणाः ॥२१॥एतस्मिन्नं-
तरे सीता निराहार श्रमान्विता ॥त्यक्त्वा प्रदक्षिणामार्गं किंचिदेव चचाल सा ॥२२॥चलितायाश्च सीता-
याः पल्लवेन हि वाससाः॥ पत्रमेकं तुलस्याश्च पपात भुवि वै तदा ॥२३॥तत्पत्रं जानकीं दृष्ट्वा द्वादश्यां तृ-
टितं शुभम् ॥ ज्ञात्वाऽधर्मः कृतश्चेति भयभीता भवत्तदा ॥२४॥ततः सा तत्करेणैव गृहित्वा पत्रमुत्तम-
म् ॥ नत्वा वृंदावने सीता चिक्षेप परमादरात् ॥२५॥ ततः प्रदक्षिणा कृत्वा प्रार्थयित्वा मुहुर्मुहुः ॥ तुलसीं
सा ययौ गेहं रंजयामास राघवम् ॥२६॥एतस्मिन्नंतरे तत्र नारदश्च समाययौ ॥ वीणावाद्यस्वनेनैव कुर्व-
न्कीर्तनमुत्तमम् ॥२७॥ पालय मां दिनमिति राघवेति ततः पुनः ॥ पालय मां दिनमिति मनुं च दशाक्षर-
म् ॥२८॥ कीर्तयामास स मुनिर्वारंवारं मुदान्वितः ॥ कलकंठ स्वरेणैव महापातकनाशनम् ॥२९॥ पाल-
य मां दीनं राघव पालय मां दीनमिति मनुः ॥××॥ तं मुनिं राघवो दृष्ट्वा प्रत्युद्गम्याथ भक्तितः ॥ नत्वाऽऽस-
ने संन्यवेश्य पूजयामास सादरम् ॥३०॥ततः प्रक्षाल्य तत्पादौ सीताया रघुनंदनः ॥धेनुं निवेद्य गंधाद्यैः
पूज्य तं मुनिपुंगवम् ॥३१॥ हेमपात्रं भोजनार्थं मुनेरग्रे निवेश्य च ॥ परिवेषणार्थं श्रीराम स्त्वरयामास
जानकीम् ॥३२॥सीताऽपि कामधेनुत्थ वरान्नानि विगृह्य सा ॥ हेमपात्रे ययो वेगात्पात्रेषु परिवेषणम्
॥३३॥ कर्तुं कंकण मंजीर किंकिणी नूपुरस्वना ॥ तां दृष्ट्वा नारदः सीतां प्राह श्रीराघवं तदा ॥ ३४ ॥

राम राजीवपत्राक्ष नाहं सीतासमर्पितैः ॥ दिव्यान्नैरशनं चाद्य करिष्यामि रघूत्तम ॥ ३५॥ तन्मुनेर्वचनं श्रुत्वा सीताऽऽसीच्चकिता स्तदा॥ अज्ञातद्रव रामोऽपि संभ्रमेन मुनिं तदा ॥ ३६॥ पप्रच्छ कारणं व्यग्रः सर्व कर्ता स्वयं प्रभुः ॥ किं कारणं वद मुने किमर्थमनयार्पितैः ॥ ३७॥ अन्नैस्त्वं भोजनं नाद्य करोषि मुनिपुंगवः ॥ इति रामवचः श्रुत्वा नारदो वाक्यमब्रवीत् ॥ ३८॥ सीतयाद्य कृतं पापं तत्किं त्वं वेत्सि न प्रभो ॥ यदि त्वं नैव जानासि तर्हि श्रुणु वदामि ते ॥ ३९॥ द्वादश्यां तुलसीपत्रमनयाद्य निकृंतितम् ॥ यद्यसत्यं तर्हि पश्य गत्वा वृंदावने प्रभो ॥ ४०॥ संक्रमेषु चतुर्दश्योर्द्वादश्योः पात पर्वसु॥ तुलसीं न हरेत्सिंध्यो भृग्वंगारापराण्हके ॥ ४१॥ नष्टे सूर्ये दुग्रहणे प्रसूति मरणे तथा ॥ तुलसीं ये निकृंतंति ते छिंदंति हरे शिरः ॥ ४२॥ द्वादश्यां तुलसीपत्रं धात्रि पत्रं तु कार्तिके ॥ यो लुनाति नरो गच्छे निरत्यानति गर्हितान् ॥ ४३॥ अकाले तुलसीपत्रं छेदयंत्यः स्त्रियः पुमान् ॥ पत्रमेकं ब्रह्महत्या सममाहुर्मनीषिणः ॥ ४४॥ एवं तु वचनं सर्वैं मुनिभिर्हि प्रकीर्त्यते ॥ पुरुषाणामयं दोष स्तत्र स्त्रीणां कथात्र का ॥ ४५॥ एतन्निमित्त श्रीरामः सीतया परिवेषितैः ॥ वरान्नै र्भोजनं नाद्य करिष्यामि व्रतस्थितः ॥ ४६॥ तन्मुनेर्वचनं श्रुत्वा राघवः प्राह तं पुनः ॥ मुने त्वमेव सीतां मे पूतां कर्तुमिहार्हसि ॥ ४७॥ वद दानं व्रतं वापि येन पूता भवेत्क्षणात् ॥ त्वामहं प्रार्थयाम्यद्य स्वीयं पल्लवमुत्तमम् ॥ ४८॥ प्रसार्य शिरसा चापि नमस्कृत्य पुनः पुनः ॥ तद्रामवचनं श्रुत्वा नारदो वाक्यमब्रवीत् ॥ ४९॥ ब्रह्महत्यादि पापानां निष्कृत्यर्थं मुनीश्वरैः ॥ प्रायश्चित्तानि चोक्तानि संति नानाविधानि च ॥ ५०॥ द्वादश्यां तुलसीपत्र छेदनाद्य प्रशांतये ॥ प्रायश्चित्तं

मया नैव दृष्टं राघवसत्तम ॥५१॥ उपायस्त्वेक एवात्र वर्तते रघुनंदन ॥ पातिव्रत्यबलात्सीता पत्रं तत्तुलसीं पुनः
योजयिष्यति मेऽग्रेऽद्य तर्हि पूता भविष्यति ॥५३॥ तन्मुनेर्वचनं श्रुत्वा रामः सीतां व्यलोकयत् ॥ तदा सीताऽ
ब्रवीद्वाक्यं ........ ब्रह्मसुतोत्तमम् ॥५४॥ अद्याहं योजयिष्यामि पत्रं तत्तुलसीं पुनः ॥ पातिव्रत्यबलेनैव
तवाग्रे पश्य कौतुकम् ॥५५॥ इत्युक्त्वा जानकी देवि तत्पात्रमन्नपूरितम् ॥ पाकस्थाने पुनर्नीत्वा स्थापयामास
वेगतः ॥५६॥ ततो वृंदावनं सीता ययौ नूपुरनिस्वना ॥ नारदो रामचंद्राद्या ययुर्वृंदावनं प्रति ॥५७॥ तदा ता
ऊर्मिलाद्याश्च चंपिकाद्या स्त्रियो ययुः ॥ लक्ष्मणाद्या बंधवश्च कुशश्चाथ लवस्तथा ॥५८॥ तेषां मध्यगता सीता त-
दा वृंदावनस्थिता ॥ नत्वा तां तुलसीं भक्त्या प्राह वाक्यं सखीयुता ॥५९॥ भो भो तुलसी मद्वाक्यं श्रुणुष्वाद्य सु-
शोभने ॥ पातिव्रत्यबलं पूर्णं मयि यद्यस्ति पावनम् ॥६०॥ तर्ह्यस्य तव पत्रस्य त्वया संधिर्भविष्यति ॥ एवमुक्त्वा
जानकी सा यावत्पश्यति वै पुरः ॥६१॥ तावत्पत्रं तुलस्या तत्संधि नैव गतं तदा ॥ तदा विषण्णा सा सीता बभूव
चकितापि च ॥६२॥ तदा देवा सगंधर्वा यक्षा नागाः स किन्नराः ॥ गुह्यकाः ऋषयः सर्वे तद्द्रष्टुं कौतुकं ययुः
॥६३॥ ततः सीतां विषण्णा तां दृष्ट्वा स नारदो मुनिः ॥ एकांते जानकीं ।नीत्वा बोधयामास सादरम् ॥६४॥ श्रृ-
ण्वत्र कारणं सीते सर्वं त्वां प्रवदाम्यहम् ॥ पतिव्रताभिर्नारीभिर्विना स्वपतिना मुदा ॥६५॥ पुष्पादीनां सुंगधोऽ
पि नावग्राह्यः कदाचन ॥ सोऽत्रावगाहितः पूर्वं मुदा ता[illegible]रस्य च ॥६६॥ तद्बुध्या रामचंद्रेण मायायं र-
चिताद्य हि ॥ तदिच्छया तुलस्याश्च तत्पत्रं पतितो भुवि ॥६७॥ त्वद्धस्त्रपल्लवाग्रेण शिक्षां कर्तुं तवात्र हि ॥
रामस्यांतर्गतं ज्ञात्वा दोषारोप कृतस्त्वयि ॥६८॥ मया सीते क्षमस्वाद्य मा क्रोधं भज मां प्रति ॥ नारीणा

प
मुद्देशार्थं तेन त्वामद्य शीक्षितम्॥ ६९॥ नोचे त्वद्दर्शित पथा स्त्रियः सर्वाः पतिं विना॥ एवमेवाचरिष्यंति नानाभोगा न्मदान्विताः॥७०॥ इदानीं श्रृणु मद्वाक्यं येन श्रीराघवाग्रतः॥ पत्रस्य च तुलस्याद्य दृढा संधिर्भविष्यति॥७१॥ वृंदावने पुनर्गत्वा त्वं ब्रूहि यन्मयोच्यते॥ विना पद्मसुगंधावग्रहणाद्यदि रक्षितम्॥७२॥ पातिव्रत्यं मयास्त्यत्र तर्ह्यै तत्तुलसीदलम्॥ तुलस्या संधि माप्नोतु नोचनाप्नोति वै त्विदम्॥७३॥* अतस्त्वया हि तुलसीं विषादं भज मारमे॥ इत्युक्त्वा सीतया शीघ्रं तुलसीं नारदो ययौ॥७५॥ सीताऽपि तुलसीं नत्वा श्रृण्वत्सु सकलेष्वपि॥ समूहेषु मुनिनां च देवादिना वचोऽब्रवीत्॥७६॥ विना पद्मसुगंधावग्रहणाद्यदि रक्षितम्॥ पातिव्रत्यं मयास्त्यत्र तर्ह्यै तत्तुलसीदलम्॥७७॥ तुलस्या संधिमाप्नोतु नोचेन्नाप्नोतु वै त्विदम्॥ एवं वदति जानक्यावाक्ये पत्रं क्षणं न तत्॥७८॥ प्राप्तं संधिं पूर्ववच्च पश्यत्सु सकलेष्वपि॥ तदा निनेदु र्वाद्यानि देवानां राघवस्य च॥७९॥ देवनार्यो विमानाग्र्य संस्थिता पुष्पवृष्टिभिः॥ ववर्षु र्जानकी रामं विप्राः प्रोचु र्यजस्वनान्॥८०॥ तदा सीता समालिंग्य राघवो मुदिताननः॥ अहं तुष्टमनाः श्रीमान्रसनाहारभूषितः॥८१॥ हे सीते कंजनयने मुनिनामपि मोहिनी॥ नेदं मया शीक्षितं ते सर्व स्त्रीणां सुशीक्षितम्॥८२॥ धर्मसंस्थापनार्थाय साधूनां पालनाय च॥ दुष्टानां च विनाशाय मयेदं रूपमाश्रितम्॥८३॥ पातिव्रत्यं सदा स्त्रीभिः पालनीयं धीयेति च॥ मया ते शीक्षितं सीते मा विषादं भज प्रिये॥८४॥ इत्याश्वास्य मुहुः सीतां कृत्वा तामतिहर्षिताम्॥ विसर्जयित्वा श्रीरामः सुरादिन्स प्रपूजये॥८५॥ ततः सर्वा नारदादीन् जानकी परिवेषणम्॥ वेगाच्चकार मुदितां स्वेद बिंद्वंकिताननाः॥८६॥ ततः सर्वे नारदाद्याश्चक्रु र्भोजन

---

*॥अनेन वचनेनाद्य तत्पत्रं संधिमाप्नुयात्॥ तुलस्या क्षणमात्रेण पूर्ववच्च भविष्यति॥७४॥

मुत्तमम् ॥ ततो भुक्त्वाथ तांबूलं रामं तुष्टाव नारदः ॥८७॥ नारद उवाच ॥ श्रीरामं मुनिविश्रामं जनसद्धा-
मं हृदयारामं सीतारंजन सत्यसनातन राजाराम वनश्यामम् ॥ नारीसंस्तुत कालिंदि नत निद्रा प्रार्थि-
त भूपालं रामं त्वां शिरसा सततं प्रणमामि छेदित सत्तालम् ॥८८॥ नाना राक्षस हर्तारं शरधर्तारं व्यजनं
धारं वालिमर्दन सागर बंधन नाना कौतुक कर्तारम् ॥ पौरानंदद नारीतोषद कस्तुरीयुत सद्भालं रामं त्वां
शिरसा सततं प्रणमामि छेदित सत्तालम् ॥८९॥ श्रीकांतं जगतीकांतं स्तुत सद्भक्तं बहुसद्भक्तं सद्भ-
क्तहृदयेप्सित पूरक पद्माक्ष नृपजाकांतं ॥ पृथ्विजापति विश्वामित्र विद्यादर्शित सच्छीलं रामं त्वां
शिरसा सततं प्रणमामि॰ ॥९०॥ सीतारंजित विश्वेशं वरपृथ्वीशं सुरलोकेशं ग्राहोब्दारण रावणमर्दन तद्भ्रा-
तृकृत लंकेशम् ॥ किष्किंधाकृत सुग्रीव प्लवग वृंदाधिप स सप्तालं रामं त्वां शिरसा सततं प्रणमामि छेदित
सत्तालम् ॥९१॥ श्रीनाथं जगतांनाथं गतिनाथं नृपजानाथं भूदेवासुर निर्जर पन्नग गंधर्वादिक सन्नाथम्
॥ कोदंड धृत तूणिरान्वित संग्रामकृत भूपालं रामं त्वां शिरसा सततं प्रणमामि॰ ॥९२॥ रामेशं जगतामीशं
जन बुध्दीशं नत लोकेशं वाल्मीकि कृत संस्तव हर्षित सीतालालित वागीशम् ॥ पृथ्वीसंहृत भूभारं नत-
योगींद्रं जगतीपालं रामं॰ ॥९३॥ चिद्रूपं जितसद्रूपं हृतरावणलंकागर्वं सप्तद्वीपज वर्षज कामिनि राजि-
त पृथ्वीपम् ॥ नानापार्थिव नानोपायन सम्यक् तोषित सद्रूपं रामं॰ ॥९४॥ संसेव्यं मुनिभिर्गेयं कविभिः
स्तव्यं हृदि संधार्यं नाना पंडित तर्क पुराणज वाक्यादि सत्काव्यम् ॥ साकेतस्थित कौसल्यासुत गंधाद्यं-
कित सद्भालं रामं॰ ॥९५॥ भूपालं घनसन्नीलं नृपसत्बालं कलिसंकालं सीताजानीवरोत्पल लोचन

मंत्री मोचित सत्कालम् ॥ श्रीसीताकृत पद्मास्वादन सम्यक् शीक्षित तत्कालं रामं० ॥९६॥ हे राज-
न्नवभि श्लोकै र्भुवि पापघ्नं नवकं रम्यं मे बुध्या कृतमुत्तम नूतनमेतद्राघव मर्त्यानांम् ॥ स्त्री पौत्रा-
दिक सुक्षेमप्रदमस्मत्सद्धर रतश्चालं रामं० ॥९७॥ श्रीरामदासउवाच ॥ एवं स्तुत्वा रमानाथं राघवं
भक्तवत्सलम् ॥ प्रणम्याज्ञां प्रभोः प्राप्य प्रययो नारदो मुदा ॥९८॥ अमरा मुनयः सर्वे जग्मु स्ते
स्वस्थलानि हि ॥ एवं श्रीरामचंद्रेण नररूप धरेण च ॥९९॥ कौतुकानि विचित्राणि कृतानि जगती-
तले ॥ कस्तान्यत्र क्षमो वक्तुं विस्तारेण द्विजोत्तम ॥१००॥ तेषु यद्यद्राघवेण स्मारितं त्विह वै मम ॥
तत्तत्प्रकथ्यते शिष्य तवाग्रे राघवाज्ञया ॥१०१॥ इति श्रीशतकोटि रामचरितांतर्गत श्रीमदानंद -
रामायणे वाल्मीकिये राज्यकांडे उत्तरार्द्धे सीतया तुलसीपत्रसंधि र्नाम द्वाविंशोऽध्यायः ॥×॥

कापुसतळणी

भाद्रपद शु॥ ३ शनिवार शके १८७४

॥१६॥ राजसेवां परित्यज्य जग्मुस्ते स्वगृहाणि हि ॥ ततः सर्वे स्वगृहेष्वानंद रामायणस्य च ॥१७॥ केचि-त्पारायणं चक्रुः केचि तच्छ्रवणं मुदा ॥ केचि तत्पठनं वापि केचिच्चक्रुश्च कीर्तनम् ॥१८॥ केचिच्चक्रुश्च व्याख्यानं मेवं तन्निष्ठमानसाः ॥ बभुवुः सकला दूताः कोटिशो जगतितले ॥१९॥ तदा केन धनं लब्धं के-नलब्धं महद्धनम् ॥ केन राज्यपदं लब्धं केन लब्ध गृहं वरम् ॥२०॥ केन ग्रामाधिकारश्च केन लब्धा कृषिर्वरा ॥ केन वृत्तिः शुभा लब्धा केन स्वर्गो मनोपमः ॥२१॥ केन लब्धं तु पातालं कै र्लोकाः विविधाः शु-भाः ॥ लब्धाः कश्चित्सूर्यपदं लब्धं तच्च मनोहरम् ॥२२॥ केचिदिंद्रपदं प्रापुः केचिदग्निपुरं गताः ॥ के-चित् ते धर्मराजस्य लोकं वा निर्ऋतेरपि ॥२३॥ वरुणस्याथ वायोश्च कुबेरस्येश्वरस्य च ॥ लोकान्जग्मु-स्तदा दूता स्तदद्भूतमिवा भवत् ॥२४॥ केचिज्जग्मुश्चंद्रलोकं केचिद्ध्रुवपदं गताः ॥ केचित् ते ब्रह्मलोकं च वैकुंठं चापि केन च ॥२५॥ एवं यथा यस्य पुण्यं दूतस्यान्य नरस्य वा ॥ आनंदरामचरित पाठश्रव-ण संभवम् ॥२६॥ तथा तस्य गति र्जाता सद्य एवावनीतले ॥ तदा कोऽपि न कस्यासी द्दूतो देशांतरेष्व-पि ॥२७॥ त्यक्त सेवां समस्ताश्च राघवस्यापि ते गताः ॥ रामं पृष्ट्वा गताः केचिदपृष्ट्वेव गताः परे ॥२८॥ एवं सर्वत्र देशेषु दूताभावो भवत्तदा ॥ एकदा राघवं द्रष्टुं गंतुं सर्वे नृपोत्तमाः ॥२९॥ सैन्या-न्याकारयामासुः स्वीयानि तु पृथग्पृथक् ॥ तदा कुत्रापि सैन्यानि ददृशु र्न नृपोत्तमाः ॥३०॥ आः किमे-तदिति प्रोक्ता स्वसुहृद्भिः सुतादिभिः ॥ ययुस्ते राघवं द्रष्टुं विस्मयाविष्ट मानसाः ॥३१॥ तानागतान्नृपान् ज्ञात्वा तान्पुरो गंतुमादरात् ॥ आकारत्स्व सैन्यानि न तदा प्रापः स लक्ष्मणः ॥३२॥ ततो निवेदयामास

तद्वृत्तं राघवाय सः ॥ तच्छ्रुत्वा राघवोऽप्यासीद्विस्मयाविष्टमानसः ॥३३॥ सुहृज्जनैर्युतं बंधुं लक्ष्मणं प्रेष्य पार्थिवान् ॥ स्वपुरीमानयामास ते नेमु रघुनायकम् ॥३४॥ ततस्तस्थुः सभायां हि सेनावृत्तं न्यवेदयन् ॥ रामोऽपि कथयामास स्वसेनावृत्तमादरात् ॥३५॥ तदा विहस्य श्रीरामः समाहूय निजं गुरुम् ॥ पृष्टवान्मम सैन्यानि नृपाणां चापि वै गुरो ॥३६॥ किं जातानि क्व वै संति तद्वदस्व सविस्तरम् ॥ तद्रामवचनं श्रुत्वा क्षणं ध्यात्वा स वै गुरुः ॥३७॥ तदा प्राह सभामध्ये विहस्य रघुनंदनम् ॥ राम राम महाबाहो सर्वं वेत्सि त्वमेव हि ॥३८॥ यदि पृच्छसि मां राम तर्हि सर्वं वदाम्यहम् ॥ शतकोटिमितं राम चरितं तव पावनम् ॥३९॥ वाल्मीकिना कृतं पूर्वं तन्मध्ये रघुनंदन ॥ आनंदरामचरितं नवकांडसमन्वितम् ॥४०॥ तस्य पाठश्रवणाद्यैः सर्वे सैन्येषु ये नराः ॥ ते गतास्त्वत्पदं केचि केचिल्लोकांतरादिषु ॥४१॥ न संति भुवि सैन्यानि सत्यं राम वचो मम ॥ नवकांडमितं तच्च रम्यमानंददायकम् ॥४२॥ तस्यै तच्छ्रवणाद्विद्धि फलं रघुकुलोद्वह ॥ येन ते हीन जातिस्था दूताश्च मुक्तिगामिनः ॥४३॥ सारकांड श्रवादेव संसारान्मुच्यते नरः ॥ यात्राकांडेन यात्राणां लभ्यते मानवैः फलम् ॥४४॥ यागकांडेन यज्ञानां लभ्यते फलमुत्तमम् ॥ विलासकांडश्रवणादप्सरोऽपि विमोहते ॥४५॥ जन्मकांडेन प्राप्नोति नरः पुत्रादि संततिम् ॥ विवाहकांड श्रवणाद्रम्या स्त्री लभ्यते भुवि ॥४६॥ राज्यकांडेन राज्यं हि मानवैर्भुवि लभ्यते ॥ कांड मनोहरं श्रुत्वा लभ्यते मनसेप्सितम् ॥४७॥ पूर्णकांडश्रवादेव ते पूर्णस्य पदं भवेत् ॥ सर्वं तन्मानवैः श्रुत्वाऽऽनंदरामायणं भवेत् ॥४८॥ सच्चिदानंद रूपे ते लीनो भवति मानवः ॥ एवं राम

त्वया पृष्टवा तत्सर्वं कथितं मया ॥४९॥ यदग्रेऽत्र करोषि त्वं तत्कुरुष्व रघूत्तम ॥ इति रामं व
सिष्ठस्तु यावत्प्राह नृपाग्रतः ॥५०॥ तावद्भूम्यां हि किं जातं तच्छृणुष्व सविस्तरम् ॥ गतिं श्रुत्वा तु
दूतानां नानादेशेषु ये नराः ॥५१॥ तेऽपि सर्वे तदानंदरामायण श्रवादिभिः ॥ नाना विमान संस्था
स्ते ययुः स्वच्छोकमुत्तमम् ॥५२॥ शून्यं दृष्ट्वा निजं लोकं यमो विधिसमन्वितः ॥ कैलासे शंकरं न-
त्वा सर्वं वृत्तं न्यवेदयत् ॥५३॥ शिवः श्रुत्वा विहस्याथ यमेन केन दुर्गया ॥ ययौ स वृषभारूढः
साकेतं वेष्टितोऽमरैः ॥५४॥ शिवमागतमाज्ञाय प्रत्युद्गम्य रघूद्वहः ॥ सिंहासनेऽऽसनं देव्या नि
वेश्य पूजनं व्यधात् ॥५५॥ ससीतो ब्रह्मणश्चापि सुराणां च यमस्य च ॥ एतस्मिन्नंतरे ब्रह्मा
राघवं प्राह वै तदा ॥५६॥ राम राजीवपत्राक्ष यमं पश्य निरुद्यमम् ॥ शून्या संयमिनी जाताऽऽ-
नंदरामायण श्रवात् ॥५७॥ शून्यो जातोऽस्ति भूलोकः स्वेऽवकाशो न दृश्यते ॥ सर्वेषां तत्र वै वस्तुम-
ग्रे किंचिद्विचारय ॥५८॥ इति तस्य वचः श्रुत्वा समाहूय रघूत्तमः ॥ शत्रुघ्नं प्रेष्य वाल्मीकिं तस्मै
वृत्तं न्यवेदयत् ॥५९॥ सोऽपि श्रुत्वा विहस्याथ राघवं वाक्यमब्रवीत् ॥ येन मत्कविता नाशो न
भविष्यति वै भुवि ॥६०॥ तथा सुखं तु सर्वेषां येन तत्कुरु राघव ॥ तथेति राघवश्चोक्त्वा तदा वच-
नमब्रवीत् ॥६१॥ सप्तजन्मार्जितं पुण्यं ममार्चन समुद्भवम् ॥ यस्य स्यात्तस्य चानंदरामायणकथारु-
चिः ॥६२॥ भविष्यति न सर्वेषां भवत्वत्र कदाचन ॥ इति रामवचः श्रुत्वा सर्वे तुष्ट मना स्तदा ॥६३॥
ययुः स्व स्व पदं देवाः स्व स्व देशं नृपा ययुः ॥ तदारभ्य विष्णुदास शतकोटि मिते शुभे ॥६४॥

रामायणे शिवेनोक्तमानंदाख्यमिदं शुभम्॥ रामायणं क्वचित्कुत्र कश्चिद्वेत्स्यति मानवः॥६५॥ न भूम्यां सकला लोका वेत्स्यंति द्वापरे कलौ॥सप्तजन्मार्जितं पुण्यमेषां वेत्स्यंति ते नराः॥६६॥ तद्राम-वचनात्भूम्यां बभूव पूर्ववत्तदा॥ नाभूत्कस्य कदा मेधाऽऽनंदरामायणं प्रति॥६७॥ सहस्त्रेषु नरः कश्चित्सप्तजन्मसु पुण्यवान्॥ आनंदरामचरितं वेद सोऽत्र न चापरः॥६८॥ इति श्रीशतको-टि रामचरितांतर्गत श्रीमदानंद रामायणे वाल्मीकिये राज्यकांडे उत्तरार्द्धे आनंद रामायण महिमावर्णनं नाम त्रयोविंश सर्गः॥ शुभंभवतु॥ श्रीसीतारामचंद्रार्पणमस्तु॥

कापुसतळणी

अनंतचतुर्दशी शके १८७४

॥श्रीरामदास उवाच॥ एकदा संस्थितो राम सभायां सेवकोऽब्रवीत्॥ राज राज महाराज रविवंशै-
कमंडन॥१॥ सुमंत्रस्तेऽति वृद्धः स मंत्रि नाकं गतः प्रभो॥ तं पत्न्य स्तेन वा गंतुं त्वामाज्ञां प्रुच्छति
राघव॥२॥ तद्दूतवचनं श्रुत्वा चकितः खिन्नमानसः॥ शीघ्रं सुमंत्र गेहे स ययौ यानेन राघवः॥३॥
सुमंत्र जन्मपट्टे तस्यायुः संख्या ददर्शसः॥ जन्मकालात्सहस्त्राणि नव नवशतानि च॥४॥ नव
नवति वर्षाणि मासात्वेकादशैव हि॥ एकविंशद्दिनाश्चातिक्रांताः शेष दिना नव॥५॥ ज्ञात्वेत्थं
रामचंद्रः स तदा प्राह गुरुं प्रति॥ कृतायुगे तु लक्षायुः सहस्त्रं द्वापरे स्मृते॥६॥ शतवर्षं कलौ
प्रोक्तं सहस्त्राणि दशैव च॥ त्रेताया कथितं चायुस्तन्मद्राज्ये मृषा कृतम्॥७॥ यमेन मामवज्ञाय म-
द्दंडं लब्धुमिच्छता॥ दिनानि नवशेषाणि संति मे मंत्रिणः कथम्॥८॥ यमेन नीतस्त्वद्यैव यमं ब-
ध्वानयाम्यहम्॥ सुमंत्र जीवयाम्यद्य पश्य मे त्वं पराक्रमम्॥९॥ इत्युक्त्वा गरुडारूढः कोदंडं
कलयन् करे॥ वेगेन रघुनाथः स ययौ संयमिनीपुरीम्॥१०॥ तावन्मार्गे सुमंत्रं तं पाशबद्धं
यमानुगैः॥ गच्छं तं राघवो दृष्ट्वा तान्सर्वान्ताडयन्मुहुः॥११॥ सुमंत्रं मोचयामास लिंगरूपधरं प्र-
भुः॥ तदा ते राघवं प्रोचु श्चापराधं तवाद्य किम्॥१२॥ अस्माभिश्च दृशो दंडो यतोऽस्माकं कृतस्त्वया॥ त-
दा तान्राघवः प्राह दिनान्यायुर्नवास्य हि॥१३॥ वर्तते शेषभूतं वै कथमद्यैव नीयते॥ भविष्यंति
दिनान्यग्रे यदा नव यमानुगाः॥१४॥ तदा नेयः सुखेनायं न निषेधं करोम्यहम्॥ इति राम वचः
श्रुत्वा तमूचुस्ते यमानुगाः॥१५॥ अपूर्वमभवज्जन्म सुमंत्रस्यास्य राघवः॥ मातुर्योन्या बहि —

॥आ॰ रा॰॥
राज्यकांड
(उत्तरार्द्धः)



श्वास्य मुखं हस्तौ विनिर्गतौ ॥१६॥ पूर्वं ततोऽस्य दशमे दिवसे दैवयोगतः॥ उदरादि त्वधोऽङ्गानि पादांतानि शनैः शनैः॥१७॥ विनिर्गतानि श्रीराम सुमंत्रैः रक्षितो बुधैः॥ यस्माज्जन्मन्ययं तस्मात्सुमंत्राख्यास्य सार्पिता॥१८॥ अतः पूर्वं दिनारभ्य संख्ययाऽऽयुः प्रपूरितम्॥ अस्य त्वं त दिनारभ्य संख्यया दिवसा नव॥१९॥ शेष भूताश्च भवता कीर्त्यंते ये रघूत्तम॥अतोऽस्माकं नापराधः संदिग्धं जन्म चास्य हि॥२०॥ वृथाऽयं नीयते राम वृथा शीक्षाऽपि नः कृता॥ इति तेषां वचः श्रुत्वा रामः प्राह यमानुगान्॥२१॥ अस्य सोंऽत र्दिनो ज्ञेयः प्रथमो हि यमानुगाः॥ यस्मिन्दिने सु प्रसुतिरभवच्चास्य मातृका॥२२॥ उत्साह दिवसो ज्ञेयः स एव जातकं तथा॥ तस्मिन्नेव दिनेऽस्यात्र कृतं पित्रा द्विजोत्तमैः॥२३॥ ज्योतिर्विदा जन्मपट्टे स एव लिखितो दिनः॥ अतः शेष दिनाः सत्य ज्ञेयास्तस्यायुषो नव॥२४॥ अतो युष्माभि र्गंतव्यं नेयोऽयं दशमे दिने॥ पुनरागत्य सान्निध्यान्मे निषेधं करोमि न॥२५॥ इति रामवचः श्रुत्वा तूष्णिमेव यमानुगाः॥ साश्रु नेत्राश्च छिन्नांगा यमराजं शनै र्ययुः॥२६॥ रामोऽपि परिवर्त्याथ ययौ स्वनगरीं प्रति॥ स्त्रीभि र्नीराजितो मार्गे विवेश मंत्रिणो गृहम्॥२७॥ तावत्सर्वान्प्रमुदिता सुमंत्रेणसमन्वितान्॥ ददर्श रामचंद्रः स ताव दृष्ट्वा रघूत्तमम्॥२८॥ प्रणनाम सुमंत्रः स पूजयामास राघवम्॥ ततो रामो ययौ गेहं सर्वैः प्रमुदिताननः॥२९॥ दिनानि नव शेषायु र्ज्ञात्वा दानादिकं विधिम्॥ चकार प्रत्यहं भक्त्या सुमंत्रो राघवाज्ञया॥३०॥ अथ ते यमदूताश्च साश्रु नेत्रा यमाग्रतः॥ उष्णीषाणि करैः क्रोधा दास्फाल्य भुवि

चाब्रुवन् ॥३१॥ कथं करोष्यधीकारं तवाज्ञाकारिणस्त्विमाम् ॥ दृष्ट्वावस्थां न लज्जा ते जायते हृ-
दये मम ॥३२॥ ताडयास्माकं राघवेण सुमंत्रो मोचितः पथि ॥ दिनानि नव शेषायुः पूर्त्यर्थमधुनाव-
यम् ॥३३॥ देहत्यागं जले कूर्मो न जीविष्याम भो यम ॥ तद्दूतवचनं श्रुत्वा प्रजज्वाल यमस्तदा ॥३४॥
प्राह दूतानद्य रामं बध्वा दंडं करोम्यहम् ॥ चोदनीयानि सैन्यानि चेंद्र पाचारयाम्यहम् ॥३५॥ इ-
त्युक्त्वा त्वरितो गत्वा वृत्तमिंद्रं न्यवेदयत् ॥ पुनरिंद्रं यम प्राह साहाय्यं क्रियतां मम ॥३६॥ तत्त-
स्य वचनं श्रुत्वा देवेंद्रो यममब्रवीत् ॥ किं भ्रांतोसि यमाद्य त्वं विष्णुना योद्धुमिच्छसि ॥३७॥
गच्छ तूष्णि संयमिनिं रामस्य किं करिष्यसि ॥ ततश्चिर्हि पुरा दत्तौ मया तौ सुरपादपौ ॥३८॥
एवं तद्वचनं श्रुत्वा वन्हिलोकं ययौ यमः ॥ अग्निना भाषितस्त्वेवं नैऋतिं वरुणं तथा ॥३९॥ वायुं
कुबेरं विश्वेशं रविं चंद्रं बुधं गुरुम् ॥ शुक्रं शनीश्वरं राहुं केतुं भूमिसुतं ध्रुवम् ॥४०॥ प्रार्थयामा-
स युद्धाय साहाय्यं क्रीयतामिति ॥ उत्तराणींद्रवत्सर्वे ददुर्भर्तं यमं हि ते ॥४१॥ ततो गत्वा
विधिं चापि पातालांतरवासिनः ॥ सप्तद्विपवासिनश्च यमः संप्रार्थयन्नृपान् ॥४२॥ तेऽप्यूचुर्न क-
रिष्यामः साहाय्यं राघवाग्रतः ॥ ततः क्रोधसमाविष्टः स्वसैन्येन समन्वितः ॥४३॥ रामेण संगरं
कर्तुमयोध्यां स यमो ययौ ॥ स्वगणैः सहयोगेन महामहिषसंस्थितः ॥४४॥ अयोध्यां वेष्टयामा-
स नवद्वार विराजिताम् ॥ नव प्राकारसहितां शतघ्नीयं तत्र संयुतम् ॥४५॥ नवाभिः परिखोऽ
भिश्च समंतात्परिवेष्टितम् ॥ दृढ रत्न कपाटयां रत्नभिति विराजिताम् ॥४६॥ सरयू वेष्टितां

रम्यां रविकोटि समप्रभाम्॥ नानाप्रासाद वृक्षोच्च पताका ध्वज शोभिताम्॥४७॥ यमेन वेष्टितां दृष्ट्वा पुरीं रामो महामनाः॥ लवमाज्ञापयामास गच्छ योद्धुं यमेन हि॥४८॥ लव स्तदा रथारूढो दुंदुभिना महास्वनैः॥ अयोध्याया बहिर्गत्वा चकार संगरं महत्॥४९॥ तदा लव शराघात छिन्न-देहा यमानुगाः॥ निपेतुः क्षणमात्रेण कोटिशो रणभूमिषु॥५०॥ तान्सर्वा निहतां दृष्ट्वा यमो महि-षसंस्थितः॥ चकारमतुलं युद्धं लवेन क्रोधभासुरः॥५१॥ स्वबाणौघे र्यमः शीघ्रं रथं सूतं बलं धनुम्॥ कवचं मुकुटं चापि चिच्छेद स लवस्य च॥५२॥ तदा लवश्चाति क्रुद्धः स्यंदनेऽन्ये स्थितः पुनः॥ चकार संगरं घोरं यमेनाति भयंकरम्॥५३॥ तदाऽमरा विमानस्था ददृशु र्युद्ध कौतुकम्॥ ततो लव स्वबाणौघै र्महिषं मुर्च्छितं भुवि॥५४॥ कृत्वा तं ताडयामास शतबाणै र्यमं जवात्॥ ततो यमोऽप्यति क्रुद्धो ममदंडं मुमोच तम्॥५५॥ तं दंडं मोचितं दृष्ट्वा ब्रह्मास्त्रं संदधे लवः॥ ब्रह्मास्त्रमागतं दृष्ट्वा यमदंडो न्यवर्तत॥५६॥ तदा यमोऽति विकलः पलायन परोभवत्॥ ब्रह्मास्त्रं तत्पृष्ठे तद्ययौ कालानल प्रभम्॥५७॥ तदा दृष्ट्वा रविः शीघ्रं स्वीयां भिन्नां प्रकम्प्य च॥ रथे मूर्तिं ययौ वेगात्प्रार्थयामास तं लवम्॥५८॥ रे रे बाल यमं त्राहि चोपसंहारयाद्य हि॥ त्वयोपसृष्टं ब्रह्मास्त्रं त्वमेवास्त्र विदां वर॥५९॥ त्वं मद्वंश समुद्भूत स्त्वयं मे तनयो मम॥ कथं स्वपूर्वजं त्वद्य त्वं यमं हंतुमिच्छसि॥६०॥ चेद्येको मूर्खतां यातः सर्वे मूर्खा भवंति न॥ शत्रुं रणात्परिभ्रष्टं वीरा स्तं रक्षयांति हि॥६१॥ इत्यादि नाना वचनैः

प्रार्थितो रविणा यदा ॥ तदा लवोपसंहारं चकारास्त्रस्य ब्रह्मणः ॥ ६२॥ ततो लवं पुरस्कृत्य यमेन त-
पनः पुरीम् ॥ विवेश रघुनाथस्य दर्शनार्थं मुदान्वितः ॥६३॥ तदा खे देववाद्यानि नेदुः कुसुमवृष्टि-
भिः ॥ लवं वर्षु रमरा ननृतुश्चाप्सरोगणाः ॥६४॥ पौरनार्यो लवं मार्गे ववर्षुः पुष्पवृष्टिभिः ॥ गो-
पुराट्टालसंस्थाश्च ददृशुस्तं मुहुर्मुहुः ॥६५॥ नेदुर्नाना सुवाद्यानि ननृतुर्वारयोषितः ॥ तुष्टु-
वुर्मागधाद्याश्च जगुर्गंधर्वकिन्नराः ॥६६॥ एवं नानासमुत्साहैः स्त्रीभिर्नीराजितः पथि ॥ ययौ
स बिजयी बालः प्रणनाम रघूत्तमम् ॥६७॥ रविमागतमाज्ञाय प्रत्युद्गम्य रघूत्तमः ॥ नत्वा रविं करे धृ-
त्वा सभायां संविवेश सः ॥६८॥ ततः सिंहासने भानुं न्यवेश्य स्वीयपूर्वजम् ॥ पूजयामास श्रीरामः षो-
डशैरुपचारकैः ॥६९॥ तदाऽब्रवीद्रविं रामः सभायां पुरतः स्थितः ॥ पूर्वज स्त्वं क्षमस्वाद्य यल्लवेनाप-
राधितम् ॥७०॥ तद्रामवचनं श्रुत्वा रामं प्राह रविस्तदा ॥ त्वन्नाभिकमलाद्ब्रह्मा समुद्भूतो रघूत्तमः
॥७१॥ मरिच्याद्या विधेः पुत्रा मरिचेः कश्यपः स्मृतः ॥ कश्यपाच्च ममोत्पत्तिः पौत्रपौत्रस्त्वहं तव
॥७२॥ क्षमस्व ममपुत्रेण यद्य मे नापराधितम् ॥ एवं संप्रार्थ्य श्रीरामं चासने संन्यवेशयत्
॥७३॥ यमेन कारयामास रघुनाथाय वंदनम् ॥ तदा समाययुर्देवा नेमुः सर्वे रघूत्तमम् ॥७४॥
रामोऽपि सकलान्देवान्पूजयामास सादरम् ॥ ततो रामाज्ञया चेंद्रः सुधावृष्ट्या रणे मृतान् ७५
शीघ्रमुत्थापयामास सर्वान्वीरान्सवाहनैः ॥ ततो रामो यमं प्राह यावद्राज्यं करोम्यहम् ७६
तावत्वया तु पूर्णायु नरो नेयो नचेत्तरः ॥ तद्रामवचनं श्रुत्वा तथेत्याह यम स्तदा ॥७७॥ ततः

प्राप्ते सुदशमे दिने स्त्रीभिर्विगाह्य सः ॥ सुमंत्रो राघवं नत्वा तदग्रे जीवितं जहौ ॥७८॥ तस्य
ता दयिताश्चापि जीवितानि तदा जहुः ॥ ततः स दिव्यदेहाभिः स्वस्त्रीभिर्दिव्यदेहधृक् ॥७९॥
सुमंत्रः पूजितः सर्वैर्विमानसंस्थितो बभौ ॥ रामाग्रे मरणादेव सुरैः सर्वत्र वेष्टितः ॥८०॥ त-
तः पृष्ट्वा रविं रामं यमेन स्वस्थलं ययौ ॥ ययौ सुमंत्रः स्वस्त्रीभिर्वैकुंठं निर्जरादिवम् ॥८१॥ रामः
सुमंत्रपुत्रेण तत्क्रियादि सुमंतुना कारयित्वा यथाशास्त्रं तत्पदे तं न्यवेशयत् ॥८२॥ ततो रामो
लक्ष्मणेन पृथिव्यां घोषयन्मुहुः ॥ गजन्यस्तां दुंदुभिस्तां पताकाध्वजशोभिताम् ॥८३॥ तथे-
ति लक्ष्मणश्चापि दूतानाज्ञापयत्तदा ॥ दूतास्तेऽथ गजारूढाः सप्तद्वीपांतरेषु हि ॥८४॥ रामा-
ज्ञा श्रावयामासुर्जनान्दुंदुभिनिस्वनैः ॥ अपूर्णायुर्मृतः कश्चिन्नेतव्यो राघवं प्रति ॥८५॥ पौरा-
णिका स्थापनीया गेहे ग्रामेऽथवा पृथक् ॥ नित्यनैमित्तिकं कर्म न त्याज्यं वै कदाचन ॥८६॥ ना-
वमान्या भूसुराश्च द्वेषः कार्यो न कस्यचित् ॥ हव्यं कव्यं सदा देयं दंडनीयाश्च तस्कराः ॥८७॥ शास-
नीय दुराचार तत्परा ये जना भुवि ॥ वंदनीया सदा माता वंदनीयः सदा पिता ॥८८॥ पूजनीयाः
सदा देवाः कार्या धर्मा निरंतरम् ॥ चैत्रस्नानं सदा कार्यमयोध्यामथापि वा ॥८९॥ रामतीर्थेषु स-
र्वत्र कार्या धर्मा विशेषतः ॥ द्वारकायां सदा गत्वा कार्यं वैशाखमज्जनम् ॥९०॥ ऊर्ज्ये काश्यां पं-
चनदे स्नातव्यं विधिपूर्वकम् ॥ गत्वा प्रयागं प्रत्यब्दं कर्तव्यं माघमज्जनम् ॥९१॥ चातुर्मास्यव्रता-
दिनि कर्तव्याणि व्रतानि हि ॥ प्रत्यंगणेषु तुलसी पूजनीया हि सर्वदा ॥९२॥ न निराकरणीयो-

त्र त्वतीथिश्च कदाचन ॥ न विप्र यांच्या कर्तव्या मृषा क्वापि कदाचन ॥९३॥ सर्वस्वमपि दातव्यं
भूसुराय स्पृहान्विते ॥ गेहे ग्रामे कलहो नैव कार्यः कदाचन ॥९४॥ सदा गुरुर्वंदनीयः कर्तव्यं
श्रवणं सदा ॥ प्रातःस्नानं सदा कार्यं होतव्य विधिनाग्नयः ॥९५॥ कार्यो जपः शंकरस्य ध्येया
नित्य महेश्वरः॥ एकांते हि तपः कार्यं द्वाभ्यामध्ययनं तथा ॥९६॥ त्रीभि र्गीतानि कार्याणि चतुर्भि-
र्विचरेत्पथि ॥ परदारा रतिस्त्याज्या नावलोक्यान्य कामिनि ॥९७॥ परलक्ष्म्या स्पृहा कार्या न. न-
रैश्च कदाचन ॥ तीर्थं विना पुण्यकाले न स्नातव्यं गृहेषु हि ॥९८॥ न द्वेष्या गणका वैद्या स्ते पो-
ष्याश्च परे परे ॥ न वेश्यागमनं कार्यं न दासीं स्पृह सुहृदि ॥९९॥ नित्यकर्म यथाकाले कर्तव्यं
सर्वदा नरैः ॥ नावमान्या हि गुरवः परनिंदा न कारयेत् ॥१००॥ जलाशया वने कार्या रोपणीया
नगाः पथि ॥ धर्मशालाः पृथक्कार्या न नग्नामीक्षयेद्बुधम् ॥१॥ अन्नसत्राणि कार्याणि पुरे मार्गे वने
तथा ॥ प्रकुर्वंतु वने रक्षां मार्गगानां वनेचराः ॥२॥ भयमास्तु वने क्वापि निशायां मार्गगामिनाम् ॥ वै-
श्येभ्यस्तु करो ग्राह्यो नेतरेषां कदाचन ॥३॥ पादयोःपादुके धृत्वा तीर्थं देवं गुरुं प्रति ॥ गोष्ठं वृंदाव-
नं होमंशाला गच्छेन्न सर्वदा ॥४॥ पारायणानि ग्रंथानां वेदानां च सदा नरैः ॥ कर्तव्या न तु निष्का-
मं मासकामानि कारयेत् ॥५॥ यतयो वंदनीयाश्च भोजनीया गृहे गृहे ॥ यतिनेक मंडल वः कौपीनाः पा-
दुका स्तथा ॥६॥ वंशदंडाः सदा देयाः सदा तोष्याः सुभाषणैः ॥ न खेद द्वद्युं स्वीयां दिने निद्रां न कार-
येत ॥७॥ हरिदिन्यां न भोक्तव्यंमुपोष्याच चतुर्दशी ॥ कृष्णपक्ष भवा तस्यां रात्रौ कार्यं शिवार्चनम् ८

नाना महोत्सवाद्यैश्च यथाविधि पुरःसरम्॥ अष्टमि कृष्णपक्षस्य सदोपोष्या शुभा तिथिः ॥९॥ देवाल-
येषु कर्तव्या बलयो भक्तिपूर्वकः॥ नानापक्वान्न नैवेद्या देवेभ्यश्च समर्पयेत्॥११०॥ धेनुदानं वाजी-
दानं गजदानं प्रकारयेत्॥ भूसुरेभ्यः प्रदेयानि गृहदानानि सादरम्॥११॥ गेहे गेहे सदा कार्यं धेनु
विप्र प्रपूजनम्॥ वसंते चंदना देयाः छत्राणि व्यजनानि च ॥१२॥ पानकं जल कुंभाश्च कार्यं पादावने जल-
म्॥ दधि तक्रं हि जंबीरं देयं विप्रेभ्य आदरात्॥१३॥ कार्तिके दिपदानानि रात्रौ जागरणानि च ॥ तुल-
सी सेवनं धात्री छायामाश्रित्य भोजनम्॥१४॥ गीत नृत्यादि करणं विष्णोरग्रे निरंतरम्॥ त्रिपुरारेः
समीपे हि पौर्णिम्यां कार्तिके नरैः॥१५॥ करणीयो महादाहो घृताक्त वर्तिकादिभिः॥ माघे देयानि
काष्टानि कंबलाश्चित्रिता स्तथा ॥१६॥ चैत्रे तांबूलदानं च तथा रंभाफलानि हि ॥ उर्वारुकानि दे-
यानि चंदनं दधि तक्रकम्॥१७॥ आदर्शदानं कस्तूरीदानं जातिफलस्य च॥ एला कर्पूरदानानि
मधुमासी प्रकारयेत्॥१८॥ पदाग्रजं न स्पृशेच्च न पादो घर्षयेत्पदा॥ द्वाभ्यां कराभ्यां कंडूतिर्म-
स्तकस्य न कारयेत्॥१९॥ दातव्यः करभारो हि विना विप्रैर्नृपाय हि ॥ नोपेक्षणीयो राज्ञश्च जने-
र्दंडः कदाचन ॥१२०॥ माननीयाश्च श्वशुराः पोष्याः पाल्याः सदैव हि॥ सुहृद स्तोषनीयाश्च मित्रे कोपो
न कारयेत्॥२१॥ न कर्तव्यो रिपूणां च विश्वासश्च कदाचन ॥ कार्पण्यता नैव कार्या दानकर्मेषु सर्व-
दा ॥२२॥ न द्यूतेन कदा कार्या क्रीडा दारिद्र्यसूचिनि ॥ न श्रोतव्या कदा वार्ता मद्यानां न करोत्तमैः २३
तीर्थयात्राः सदाकार्याः कृच्छ्रकादि समाचरेत्॥ कार्यं लिंगार्चनं नित्यं कोटि लिंगानि श्रावणे ॥२४॥

कर्तव्याणि नरैर्भक्त्या सदैवापि प्रकारयेत् ॥ लघुरुद्रान्महारुद्रानतिरुद्रान्समाचरेत् ॥ २५ ॥ दाना-
नि पुस्तकानां च कर्तव्यानि निरंतरम् ॥ कीर्तनान तु कार्याणि देवागारेषु वा गृहे ॥ २६ ॥ साधूनां पूजनं
कार्यं नमस्कार्यः सदा रविः ॥ ग्रामे ग्रामे वायुपुत्र प्रतिमाः सर्वदा पृथक् ॥ २७ ॥ सिंदूराक्ताश्च तैलाक्ताः
पूजनीया निरंतरम् ॥ चतुर्थ्यां गणराजस्य पूजनानि प्रकारयेत् ॥ २८ ॥ अर्पयेद्गणराजाय मोदकान् पू-
र्णपूरितान् ॥ पंचखाद्यानि सिंदूर दूर्वादिन्यर्पयेत्सदा ॥ २९ ॥ सदाऽऽत्मचर्चा कर्तव्या स्तोत्र पाठाः
प्रकारयेत् ॥ गीतायाः पठनं कार्यं वेदानध्यापयेत्सदा ॥ १३० ॥ सदैव शांति सूक्तानि पुण्यसूक्तान्यनेक-
शः ॥ पुण्यं पुरुषसूक्तं च श्रीसूक्तादिनि वै पठेत् ॥ ३१ ॥ सदा धर्मे मतिः कार्या कार्यो धर्मस्य संग्रहः ॥ दु-
ष्ट बुद्धिः सदा त्याज्या पातकं परिमार्जयेत् ॥ ३२ ॥ ज्ञातव्यं चपलं चायुः क्रूरो ज्ञेयो यमो महान् ॥
दारुणा नरकीपीडा स्मर्तव्या हृदि सर्वदा ॥ ३३ ॥ गत स्तातो मृता माता गतश्च प्रपितामहः ॥ पि-
तामहा गतश्चेति गमनं स्वं निरीक्षयेत् ॥ ३४ ॥ गतं यथात्र बालत्वं तारुण्यं च गतं तथा ॥ तथा ग-
च्छंति वार्द्धक्यं स्मरध्वं यमशासनम् ॥ ३५ ॥ गता दंता गता नेत्रा श्लथा जाता त्वगत्र वै ॥ कृष्ण
केशाः सिता जाता मृत्युर्ज्ञेयः पुरः स्थितः ॥ ३६ ॥ दाने विलंबमाकार्यः कार्यं चित्तं सुनिर्मलम् ॥ तु-
षवच्च धनं देयं मा कार्पण्यात्प्ररक्षयेत् ॥ ३७ ॥ एवं श्रीरामदूतास्ते सप्तद्विपांतरस्थितान् ॥ श्रा-
वयित्वा राघवाज्ञां महादुंदुभि निस्वनैः ॥ ३८ ॥ अयोध्यां स्वां ययुः सर्वे रामं वृत्तं न्यवेदयत् ॥
संश्राविता तवास्माभिश्चाज्ञा सर्वान् जनान्मुहुः ॥ ३९ ॥ सप्तद्वीपेषु सर्वत्र दुंदुभिनां महास्वनैः ॥

तत्तेषां वचनं श्रुत्वा रामस्तुष्टोभवत्तदा ।।१४०।। एवं रामेण भूम्यां हि चरित्राणि महंति च ॥ आच-रितान्यनेकानि कस्तान्यत्र वदिष्यति ॥४१॥ एवं शिष्य मया प्रोक्तं राज्यकांड मनोरमम् ॥ चतुर्विंश-त्सु सर्गैश्च महामंगलकारकम् ॥४२॥ राज्यकांड नृपा येऽत्र पठंति भक्तितत्पराः ॥ न ते राज्यात्प-रिभ्रष्टा भवंति हि कदाचन ॥४३॥ राज्यकांडं महापुण्यं महामांगल्य दायकम् ॥ ये श्रृण्वंति नरा भूम्यां ते मांगल्यं भजंति हि ॥४४॥ एकैक वर्द्धितैः सर्गैरेकैकेन क्षयेन च ॥ सप्तचत्वारिंशद्दिनै-रनुष्ठानं सुसिद्धिदम् ॥४५॥ आधिपत्यं नराः कृत्वा राज्यकांडं पठंति ये ॥ आधिपत्यात्परिभ्रष्टा न भवंति कदाचन ॥४६॥ राज्यकांडं पठित्वा तु रणे वादे जयो भवेत् ॥ शरणं शत्रवः शीघ्रं या-स्यंते तच्छ्रवादिना ॥४७॥ आनंदरामायणमध्यसंस्थं - ये राज्यकांडं मनुजा पठंति ॥ राज्यात्-च्युतां राज्यपदं लभंति - भवंति भ्रष्टा न तु ते पदस्थाः ॥४८॥ आनंदरामायण मे तदुत्तमं - तत्रापि कांडेषु विचित्रमुत्तमम् ॥ श्रीराज्यकांडं परमं सुसौख्यदं - सदाऽति भक्त्या श्रवणीयमादरात् ॥४९॥ राज्यस्थितै र्वा व्यवसाय तत्परैः सदैव मे तच्छ्रवणीय मादरात् ॥ उत्साह काले व्रतबंधमंगले - विवाहका-ले पठनीयमुत्तमम् ॥१५०॥ श्रीराज्यकांडं श्रुति सौख्यकारकं पुण्येषु कालेषु पठंति ये नराः ॥ लभंति सौख्यान्यति मंगलानि ते गच्छंति विष्णोर्वरयानगाः पदम् ॥ ५१॥ पुण्यं पवित्रं परमं विचित्रं श्रीरामचंद्रस्य कथानकं सदा ॥ भक्त्या मुनिनामपि मंगलप्रदं - श्रोतव्य मे तत्पठनीयमादरात् ॥१५२॥ इति श्रीशतकोटिरामचरितांतर्गत श्रीमदानंदरामायणे वाल्मीकिये राज्यकांडे उत्तरार्द्धे

रामदास विष्णुदास संवादे यमशीक्षाकरणं सुमंत्र वैकुंठारोहणं नाम चतुर्विंशः सर्गः ॥शुभं भवतु ॥
श्रीसीतारामचंद्रार्पणमस्तु ॥

पत्रसंख्या ९९ श्लोक संख्या १३८७

कापुसतळणी

भाद्रपद वद्य १४ बूधवार शके १८७४ रा. अं. जवळेकर.

॥ श्रीगणेशायनमः ॥ श्रीसीतारामचंद्राभ्यां नमः ॥ विष्णुदास उवाच ॥ गुरो ते प्रष्टुमिच्छामि यत्तत्त्वं व-
क्तुमर्हसि ॥ वेदवाक्यं पुरा प्रोक्तं नारदेन महात्मना ॥१॥ रामायणं वाल्मीकिये संक्षेपा च्चेति ते कथि
॥ तावदेवार्थमादाय श्लोकरूपं वदस्व माम् ॥२॥ श्रीरामदासउवाच ॥ सम्यक् पृष्टं त्वया वत्स
सावधान मनाः शृणु ॥ यत्पृष्टं च त्वया सर्वं तद्वदामि तवाग्रतः ॥३॥ नारदाद्वेदवाक्यैश्च यथा वा-
ल्मीकिना श्रुतम ॥ तावदेवार्थमादाय तेन वाल्मीकिना पुरा ॥४॥ शतश्लोकमितं रामचरितं पात-
कापहम् ॥ शतकोटिमितायां स्व कवितायां मनोरमम् ॥५॥ आदावेवोक्तमेवास्ति तत्तवाग्रे वदा-
म्यहम् ॥ शतश्लोकमितं रम्यं लघुरामायणाह्वयम् ॥६॥ कूजंतं रामरामेति मधुरं मधुराक्षरम्
॥ आरुह्य कविताशाखां वंदे वाल्मीकि कोकिलम् ॥७॥ वाल्मीकेर्मुनि सिंहस्य कविता वनचारिणः
॥ शृण्वन्रामकथानादं कोन याति परां गतिम् ॥८॥ यः पिबन्सततं रामचरितामृतसागरम् ॥ अतृप्त
स्तं मुनिं वंदे प्राचेतसमकल्मषम् ॥९॥ गोष्पदीकृत वारीशं मशकीकृत राक्षसम् ॥ रामायण महामा-
ला रत्नं वंदेऽनिलात्मजम् ॥१०॥ अंजनीनंदनं वीरं जानकीशोकनाशनम् ॥ कपीशमक्षहंतारं वंदे
लंका भयंकरम् ॥११॥ उल्लंघ्य सिंधुः सलिलं सलीलं- यःशोकवन्हिं जनकात्मजायाः ॥ आदाय ते-
नैव ददाह लंकां- नमामि तं प्रांजलिमांजनेयम् ॥१२॥ मनोजवं मारुततुल्य वेगं- जितेंद्रियं बुद्धिम-
तां वरिष्ठम् ॥ वातात्मजं वानरयूथ मुख्यं- श्रीरामदूतं मनसा स्मरामि ॥१३॥ रामाय रामभद्राय
रामचंद्राय वेधसे ॥ रघुनाथाय नाथाय सीतायाः पतये नमः ॥१४॥ जितं भगवता तेन हरि-

णा लोकधारिणा ॥ अजेन विश्वरूपेण निर्गुण न गुणात्मने ॥१५॥ इति मंगलाचरणम् ॥ तप-
स्वाध्याय निरतं तपस्वी वाग्विदां वरम् ॥ नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुंगवः ॥१६॥ को त्व-
स्मिन्सांप्रतं लोके गुणवान् कश्च वीर्यवान् ॥ धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः ॥१७॥ चारि-
त्रेण च को युक्तः सर्वभूतेषु को हितः ॥ विद्वान् कः कः समर्थश्च कश्चैकः प्रियदर्शनः ॥१८॥ आत्म-
वान् को जितक्रोधो द्युतिमान् कोऽनुसूयकः ॥ कस्य बिभ्यंति देवाश्च जात रोषस्य संयुगे ॥१९॥ ए-
तदिच्छाम्यहं श्रोतुं परं कौतुहलं हि मे ॥ महर्षे त्वं समर्थोऽसि ज्ञातुमेवं विधं नरम् ॥२०॥ श्रु-
त्वा चैतत्त्रिकालज्ञो वाल्मीकेर्नारदो वचः ॥ श्रूयतामित्युपामंत्र्य प्रहृष्टो वाक्यमब्रवीत् ॥२१॥ बहवो दु-
र्लभाश्चैव ये त्वया कीर्तिता गुणाः ॥ मुने वक्ष्याम्यहं बुद्ध्वा तैर्युक्तः श्रूयतां नरः ॥२२॥ इक्ष्वाकु वंश
प्रवरो रामो नाम जनैः श्रुतः ॥ नियतात्मा महावीर्यो द्युतिमान धृतिमान्वशी ॥ २३ ॥ बुद्धिमान्नितिमा-
न्वाग्मी श्रीमान्शत्रुनिबर्हणः ॥ विपुलांसो महाबाहुः कंबुग्रीवो महाहनुः ॥२४॥ महारस्को महेश्वा-
सो गूढजत्रूररिंदमः ॥ आजानुबाहुः सुशिराः सुललाटः सुविक्रमः ॥२५॥ समः समविभक्तांगः स्नि-
ग्धवर्णः प्रतापवान् ॥ ~~२६~~ ॥ पिनवक्षा विशालाक्षो लक्ष्मीवान् शुभलक्षणः ॥२६॥ धर्मज्ञः सत्यसंधश्च प्र-
जानां च हिते रतः ॥ यशस्वी ज्ञानसंपन्नः शुचिर्वश्य समाधिमान् ॥२७॥ प्रजापति समः श्रीमान् धाता
रिपु निषूदनः ॥ रक्षिता जीवलोकस्य धर्मस्य परिरक्षिता ॥२८॥ रक्षिता स्वस्य धर्मस्य स्वजनस्य च
रक्षिता ॥ वेद वेदांग तत्वज्ञो धनुर्वेद च निष्ठितः ॥२९॥ सर्व शास्त्रार्थ तत्वज्ञः स्मृतिमान्प्रतिभानवान्

सर्वलोकप्रियः साधुरदिनात्मा विचक्षणः॥३०॥ सर्वदाभिगतः सद्भिः समुद्र इव सिंधुभिः॥ आर्यः सर्व समश्चैव सदैव प्रियदर्शनः॥३१॥ स च सर्व गुणोपेत कौसल्यानंदवर्द्धनः॥ समुद्र इव गांभिर्ये धैर्येण हिमवानि च॥३२॥ विष्णुना सदृशो वीर्ये सोमवत्प्रियदर्शनः॥ कालाग्निसदृशः क्रोधे क्षमया पृथिवीसम॥३३॥ धनदेन समस्त्यागे सत्ये धर्म इवापरः॥ तमेवं गुणसंपन्नं रामं सत्यपराक्रमम्॥३४॥ ज्येष्ठं ज्येष्ठगुणैर्युक्तं प्रियं दशरथः सुतम्॥ प्रकृतिनां हिते युक्तं प्रकृतिं प्रियकाम्यया॥३५॥ यौवराज्येन संयुक्तुमत्सत्प्रित्या महीपतिः॥ तस्याभिषेकः संभारान् दृष्ट्वा भार्या च कैकयी॥३६॥ पूर्वदत्त वरा देवी वरमेनमयाचत॥ विवासं वन रामस्य भरतस्याभिषेचनम्॥३७॥ स सत्य वचनाद्राजा धर्मपारो न संयुतः॥ विवासयामा ससुतं रामं दशरथप्रियम्॥३८॥ स जगाम वनं वीरः प्रतिज्ञामनुपालयन्॥ पितुर्वचन निर्देशात्कैकेय्याः प्रियकारणात्॥३९॥ तं व्रजतं प्रियो भ्राता लक्ष्मणोनु जगामह॥ स्नेहाद्विनयसंपन्नः सुमित्राऽऽनंदवर्द्धनः॥४०॥ भ्रातरं दयितो भ्रातुः सौभ्रात्रमनुदर्शनः॥ रामस्य दयिता भार्या नित्यं प्राणसमाहिता॥४१॥ जनकस्य कुले जाता देवमायेव निर्मिता॥ सर्व लक्षणसंपन्ना नारीणामुत्तमा वधुः॥४२॥ सीताऽप्यनुगता रामं शशिनं रोहिणी यथा॥ पौरैरनुगतो दूर पित्रा दशरथेन च॥४३॥ श्रृंगबेर पुरे सूतं गंगाकुले व्यसर्जयत्॥ गुहमासाद्य धर्मात्मा निषादाधिपति प्रियम्॥४४॥ गुहेन सहितो रामो लक्ष्मणेन च सीतया॥ ते वन वनं गत्वा नदीस्तीर्वा बहूदकाः॥४५॥ चित्रकूटमनुप्राप्य भरद्वाजस्य शासनात्॥ रम्यमावसथं कृत्वा रम्यमाणा वने त्रयः॥४६॥ देवगंधर्वसंकाशा

स्तत्र तेऽन्य वसंन्सुखम् ॥ चित्रकूट गते रामे पुत्रशोकातुर स्तदा ॥ ४७॥ राजा दशरथः स्वर्गं जगाम
विलपन्सुतम् ॥ गते तु तस्मिन् भरतो वसिष्ठप्रमुखै द्विजैः ॥ ४८ ॥ नियुज्यमानो राज्याय नैच्छाद्रा-
ज्यं महाबलः॥ स जगाम वनं वीरो रामपाद प्रसादकः॥ ४९॥ गत्वा तु सुमहात्मानं रामं सत्य पराक्रमम्
अयाचद्भ्रातरं राममार्यभाव पुरस्कृतः ॥५०॥ त्वमेव राजा धर्मज्ञ इति रामं वचोऽब्रवीत् ॥ रामोऽपि
परमोदारः सुमुखः सुमहायशाः ॥ ५१॥ नचेच्छत्पितुरादेशाद्राज्यं रामो महाबलः॥ पादुके चास्य रा-
ज्याय न्यासं दत्वा पुनःपुनः ॥५२॥ निवर्तयामास ततो भरतं भरताग्रजः॥ सकाम मनवाप्यैव राम-
पादावुपस्पृशन् ॥ ५३॥ नंदिग्रामे करोद्राज्यं रामागमन कांक्षया ॥ गते तु भरतः श्रीमान्सत्यसंधो जि-
तेंद्रियः॥ ५४॥ रामस्तु पुनरालक्ष्य नागरस्य जनस्य च ॥ तत्रागमनमेकाग्रो दंडकान्प्रविवेशह ५५
प्रविश्यतु महारण्यं रामो राजीवलोचनः॥ विराधं राक्षसं हत्वा शरभंगं ददर्शह॥ ५६॥ सुतीक्ष्णं चा-
प्यगस्त्यं च अगस्त्यभ्रातरं तथा ॥ अगस्त्यवचनाच्चैव जग्राहेंद्रं शरासनम् ॥ ५७॥ खड्गं च प-
रमप्रीत स्तूणौ चाक्षय्य सायकौ ॥ वसतस्तस्य रामस्य वने वनचरैः सह॥५८॥ ऋषयोभ्यागम-
न्सर्वे वधायासुर रक्षसां ॥ स तेषां प्रतिसुश्राव राक्षसानां वधाय न॥ ५९॥ प्रतिश्वातश्च रामेण
वधः संयति रक्षसाम् ॥ ऋषिणामग्नि ल्पानां दंडकारण्यवासिनाम् ॥६०॥ तेन तत्रैव वस ता ज-
नस्थान निवासिनि ॥ विरूपिता शूर्पनखी राक्षसी कामरूपिणी॥ ६१॥ ततः शूर्पनखा वाक्यादुद्यु-
क्तान् सर्व राक्षसान् खरः त्रिशिर सं चैव दूषणं चैव राक्षसम् ॥६२॥ निजघान रणे राम स्तेषां चैव पदा-

नुगान् ॥ वने तस्मिन्निवसता जनस्थाननिवासिनाम् ॥ ६३ ॥ रक्षसान्निहता न्यासन्सहस्राणि चतुर्दश ॥ ततो ज्ञातिवधं श्रुत्वा रावणः क्रोधमुर्च्छितः ॥ ६४ ॥ साहायं वरयामास मारीचं नाम राक्षसम् ॥ वायमाणः सुबहुशो मारीचेण स रावणः ॥ ६५ ॥ न विरोधो बलवता क्षमो रावण तेन ते ॥ अनादृत्य तु तद्वाक्यं रावणः कालचोदितः ॥ ६६ ॥ जगाम स मारीच स्तस्याश्रम पदं तदा ॥ तेन मायाविना दूरमपवाह्य नृपात्मजौ ॥ ६७ ॥ जहर भार्यां रामस्य गृध्रं हत्वा जटायुषम् ॥ गृध्रं च निहतं दृष्ट्वा हृतां श्रुत्वा च मैथिलीम् ॥ ६८ ॥ राघवः शोकसंतप्तो विललाप कुलाद्रियः ॥ ततस्तेनैव शोकेन गृध्रं दग्ध्वा जटायुषम ॥ ६९ ॥ मार्गमाणो वने सीतां राक्षसं स ददर्शह ॥ कबंधं नामरूपेण विकृतं घोरदर्शनम् ॥ ७० ॥ तं निहत्य महाबाहुर्ददाह स्वर्गतश्च सः ॥ स चास्य कथयामास शबरीं धर्मचारिणीम् ॥ ७१ ॥ श्रामणीं धर्म निपुणामभिगच्छेति राघवम् ॥ सोऽभ्यगच्छन्महातेजा शबरीं शत्रुसूदनः ॥ ७२ ॥ शबर्या पूजितः सम्यक् रामो दशरथात्मजः ॥ पंपातीरे हनुमतां संगतो वाणरेणह ॥ ७३ ॥ हनुमद्वचनाच्चैव सुग्रीवेण समागतः ॥ सुग्रीवाय च तत्सर्वं रामोशं स महाबलः ॥ ७४ ॥ आदि तस्तद्यथावृत्तं सीतायाश्च विशेषतः ॥ सुग्रीवश्चापि तत्सर्वं श्रुत्वा रामस्य वानरः ॥ ७५ ॥ चकार सख्यं रामेण प्रीतश्चैवाग्नि साक्षिकम् ॥ ततो वानरराजेन वैरानुकथनं प्रति ॥ ७६ ॥ रामायावेदितं सर्वं प्रणयाद्दुःखितेन च ॥ प्रतिज्ञातं च रामेण तदा वालीवधं प्रति ॥ ७७ ॥ वालीनश्च बलं तत्र कथयामास वानरः ॥ सुग्रीवः शंकितश्चासीन्नित्य वीर्येण राघवे ॥ ७८ ॥ राघवप्रत्ययार्थं तु दुंदुभेः कायमुत्तमम् ॥ दर्शयामास सुग्रीवो महापर्वतसन्निभम् ७९

उत्स्मयित्वा महाबाहुः प्रेक्ष्य चास्थि महाबलः ॥ पादांगुष्ठेन चिक्षेप संपूर्ण दशयोजनम् ॥ ८० ॥ बिभेद च पुनस्ताला सप्तैकेन महेषुणा ॥ गिरीं रसातलं चैव जनयन्प्रत्ययं तदा ॥ ८१ ॥ ततः प्रीतमनास्तेन विश्वस्तः स महीपतिम् ॥ किष्किंधां रामसहितो जगाम च गुहां प्रति ॥ ८२ ॥ ततो गर्जद्धरिवरः सुग्रीवो हेमपिंगलः ॥ तेन नादेन महता निर्जगाम स हरीश्वरः ॥ ८३ ॥ अनुमान्य तदा तारां सुग्रीवेण समागतः ॥ निजघान च तत्रैनं शरेणैकेन राघवः ॥ ८४ ॥ ततः सुग्रीववचनाद्धत्वा वालिनमाहवे ॥ सुग्रीवमेव तद्राज्ये राघवः प्रत्यपादयत् ॥ ८५ ॥ स च सर्वान्समानीय वानरान्वानरर्षभः ॥ दिशः प्रस्थापयामास दिदृक्षुर्जनकात्मजाम् ॥ ८६ ॥ ततो गृध्रस्य वचनात्संपातेर्हनुमान् बली ॥ शतयोजनविस्तीर्णं पुप्लुवे लवणार्णवम् ॥ ८७ ॥ तत्र लंकां समासाद्य पुरीं रावणपालिताम् ॥ ददर्श सीतां ध्यायंतीमशोकवनिकागतम् ॥ ८८ ॥ निवेदयित्वाभिज्ञानं प्रवृत्तिं च निवेद्य च ॥ समाश्वास्य च वैदेहीं मर्दयामास तोरणम् ॥ ८९ ॥ पंच सेनाग्रगान्हत्वा सप्त मंत्रिसुतानपि ॥ शूरमक्षं विनिष्पिष्य ग्रहणं समुपागमत् ॥ ९० ॥ अस्त्रेणोन्मुक्तमात्मानं ज्ञात्वा पैतामहाद्वरात् ॥ मर्दयन्राक्षसान्वीरो मंत्रिणस्तान्यदृच्छया ॥ ९१ ॥ ततो दग्ध्वा पुरीं लंकां ऋते सीतां च मैथिलीम् ॥ रामाय प्रियमाख्यातुं पुनरायान्महाकपिः ॥ ९२ ॥ सोऽभिगम्य महात्मानं कृत्वा रामं प्रदक्षिणम् ॥ न्यवेदयदमेयात्मा दृष्टा सीतेति तत्वतः ॥ ९३ ॥ ततः सुग्रीवसहितो गत्वा तीरं महोदधेः ॥ समुद्रं क्षोभयामास शरैरादित्यसन्निभैः ॥ ९४ ॥ दर्शयामास चात्मानं समुद्रः सरितां पतिः ॥ समुद्रवचनाच्चैव नल सेतुमकारयत् ॥ ९५ ॥ तेन गत्वा पुरीं लं-

कां हत्वा रावणमाहवे ॥ रामः सीतामनुप्राप्य परां व्रीडामुपागमत् ॥९६॥ तामुवाच ततो रामः परुषं जनसंसदि ॥ अमृष्यमाणा सा सीता विवेश ज्वलनं सती ॥९७॥ ततोऽग्निवचनात्सीतां ज्ञात्वा विगतकल्मषाम् ॥ कर्मणा तेन महता त्रैलोक्यं सचराचरम् ॥९८॥ स देवर्षिगणं तुष्टं राघवस्य महात्मनः ॥ बभौ रामः संप्रहृष्टः पूजितः सर्वदेवतैः ॥९९॥ अभिषिच्य तु लंकायां राक्षसेंद्रं बिभीषणम् ॥ कृतकृत्यस्तदा रामो विज्वरः प्रमुमोदह ॥१००॥ देवताभ्यो वरं प्राप्य समुत्थाप्यं च वानरान् ॥ अयोध्या प्रस्थितो रामः पुष्पकेण सुहृद्वृतः ॥१॥ भरद्वाजाश्रमं गत्वा राम् सत्यपराक्रमः ॥ भरतस्यांतिकं रामो हनुमंतं व्यसर्जयत् ॥२॥ पुनराख्यायिकं जल्पन्सुग्रीवसहितस्तदा ॥ पुष्पकं तत्समारुह्य नंदिग्रामं ययौ तदा ॥३॥ नंदिग्रामे जटां हित्वा भ्रातृभिः सहितो नघः ॥ रामः सीतामनुप्राप्य राज्यं पुनरवाप्तवान् ॥४॥ प्रहृष्ट मुदितो लोकस्तुष्टः पुष्ट सुधार्मिकः ॥ निरामयो ह्यरोगश्च दुर्भिक्ष भयवर्जितः ॥५॥ न पुत्रमरणं केचिद्द्रक्ष्यंति पुरुषाः क्वचित् ॥ नार्यश्चाविधवा नित्यं भविष्यति पतिव्रताः ॥६॥ नचाग्निजं भयं किंचिन्नाप्सु मज्जंति जंतवः ॥ न वातजं भयं किंचिन्नापि ज्वरकृतं तथा ॥७॥ न चापि क्षुद्भयं तत्र न तस्करभयं तथा ॥ नगराणि च राष्ट्राणि धनधान्ययुतानि च ॥८॥ नित्यं प्रमुदिताः सर्वे यथा कृतयुगे तथा ॥ अश्वमेध शतैरिष्ट्वा तथा बहुसुवर्णकैः ॥९॥ गवां कोट्ययुतं दत्वा ब्रह्मलोकं गमिष्यति ॥ असंख्येय धनं दत्वा ब्राह्मणेभ्यो महायशाः ॥१०॥ राजवंशान् शतगुणान्स्थापयिष्यति राघवः ॥ चातुर्वर्ण्यं च लोकेऽस्मिन्स्वे स्वे धर्मे नियोक्ष्यति ॥१११॥ दशवर्ष

सहस्राणि दशवर्ष शतानि च ॥ रामो राज्यमुपासित्वा ब्रह्मलोकं प्रयास्यति ॥१२॥ इदं पवित्रं पाप-
घ्नं पुण्यं वेदैश्च संमितम्॥ यः पठेद्रामचरितं सर्वपापैः प्रमुच्यते ॥१३॥ एतदाख्यानमायुष्यं पठन्
रामायणं नरः॥ सपुत्रपौत्रः सगणः प्रेत्य स्वर्गे महीयते ॥१४॥ पठन् द्विजो वागृषभत्वमीयात्-त्स्या-
त्क्षत्रियो भूमिपतित्वमीयात्॥ वणिक् जनः पुण्यपतित्वमीयात्- जनस्य शूद्रोऽपि महत्वमीयात्
॥११५॥ एवं शिष्य नारदेन मुनिना यच्च धीमता ॥ वाल्मीकये वेदवाक्यैर्यावन्मात्रं निवेदितम् १६
तावदेवार्थमादाय श्लोकबध्दं मनोरमम्॥ वाल्मीकिना कृतं पूर्वं लघुरामायणाभिधम्॥१७॥ शतश्लोक
मितं स्वीय कवितायां च तन्मया ॥ तवाग्रे कथितं सर्वं श्रवणात्पुण्यवर्द्धनः ॥१८॥ ब्रह्मदत्तवरेणैव सर्वं
ज्ञात्वा स वै मुनि ॥ शतकोटिमितां रामक्रीडा श्लोकैर्बबंध सः ॥११९॥ **इति श्रीशतकोटि रामच-**
**-रितांतर्गत श्रीमदानंदरामायणे वाल्मीकिये मनोहरकांडे रामदास विष्णुदास सं-**
**वांदे लघुरामायणं नाम प्रथमः सर्गः ॥ शुभंभवतु ॥ श्रीसीतारामचंद्रार्पणमस्तु ॥**

कापुसतळणी

ता. २३-१०-५२

॥श्रीगणेशायनमः॥ श्रीरामदास उवाच ॥ अथैकदा सभामध्ये पौरा जानपदादयः ॥ ज्ञात्वा रामं परात्मानं पप्रच्छुर्विनयान्विताः ॥१॥ राम राम महाराज किंचिदुपदिस्व नः ॥ विषयासक्त चित्तानां येन ज्ञातं भविष्यति ॥२॥ इति तेषां वचः श्रुत्वा राघवः सस्मितोऽब्रवीत् ॥ निरंतरं ह्युपदेशो युष्माभि श्रूयते न किम् ॥३॥ प्रहरे प्रहरे रात्रौ मद्दूतैः क्रीयते सदा॥ अस्तु तच्च गतं पूर्वं त्विदानीं सकलैर्जनैः ॥४॥ अद्य मद्दूतवचनं निशायां बुद्धिपूर्वकम् ॥ श्रुत्वा विचार्य च पश्चान्मां प्रष्टव्यं यत्तु रोचते ॥५॥ तथेति रामवचनात्सर्वे गत्वा निजं निजम् ॥ गेहं ते स्वस्थ चित्ताश्च स्वस्त्रीभिर्मंचकादिषु ॥६॥ दूतवाक्ये दत्तकर्णा रात्रौ तस्थुर्न निद्रिताः ॥ तावत्ते रामदूताश्च सार्द्धे यामे सदीपिका ॥७॥ धृतशस्त्रा दंडहस्तां नानावाहनसंस्थिताः॥ गजेषु दुंदुभिन् धृत्वा तथा वाद्यान्यनेकशः ॥८॥ धृत्वा पृथग्पृथक् नाना यानेषु मंजुळानि हि ॥ राजमार्गेषु सर्वत्र दीर्घशब्दानुदीरयन् ॥९॥ हे जनाः श्रूयतां सर्वे किं मोहेन विनिद्रिताः ॥ नीयं निद्रा समीची ना कदानर्थी भविष्यति ॥१०॥ स्वस्थ चित्ता स्त्वद्य सर्वे भूत्वा नः श्रूयतां वचः ॥ नवद्वाराण्ययोध्यायामेकं तु लघु वर्तते ॥११॥ रामराज्ये भयं नेति कारणाद्द्वाररक्षकैः ॥ दीयंते वा न दीयंते कीयं तदत्तवत्विति ॥१२॥ नार्गळा श्रृंखलादिनी संति द्वारेषु भो जनाः ॥ कृष्णवर्णो महान्चोरो याम्याशायां स्थितस्त्विति ॥१३॥ श्रूयते न कदा दृष्टः केनापि भुवि सांप्रतम् ॥ एवं सत्यपि नोपेक्षा रोग शत्रोः प्रकाशयेत् ॥१४॥ गुप्तरूपा स्तस्य दूताः साकेते विचरंति हि ॥ न ज्ञायंते कदास्माभि र्नागरा इव संस्थिताः ॥१५॥ आगतश्चेत्परो दूतस्त्वेको दुर्गे त-

दा क्षणात् ॥ भेदं कृत्वा तु सर्वत्र दुर्गपालो निहन्यते ॥१६॥ इत्थं श्रुतं तदास्माभिस्त्वतस्त्वस्यां
सहस्रशः ॥ वर्तते परदूताश्च नानावेषधरा जनाः ॥१७॥ जीवत्वयं चिरं राजा एवं सत्यपि नो भयम्
॥ अयोध्यायां जायते हि तद्बलं को वदिष्यति ॥१८॥ एभिर्दूतैस्तस्य राज्ञ आत्मारामस्य चात्र हि॥
करणीयं प्रभोः किं हि सच्चिदानंदरूपिणः ॥१९॥ तेषां भयं तु युष्माकं दुर्बलानां सदाऽस्ति हि ॥अ-
जापुत्रो दुर्बलोत्र बल्यर्थं दीयते जनैः ॥२०॥ दत्ता बलिस्तु सिंहस्य कदा केन श्रुतोत्र न ॥ अतो यूयं
हीनबलाः किं निशायां विनिद्रिताः ॥२१॥ कदा कृत्वात्र ते भेदं चोरमत्रानयंति हि ॥ स कालो ज्ञायते
नैव तस्मान्निद्रा शुभा नहि ॥२२॥ स्वस्थचित्तास्त्यक्तु निद्रास्त्वस्यां पुर्यामहर्निशम् ॥ यूयं भूत्वा स-
दा खड्ग शिरोधार्यः स्वसन्निधौ ॥२३॥ कवचानि शरीरेषु सदा धार्याणि भो जनाः ॥ धैर्यं धृत्वा न भेत-
व्यं याजानाति निरंतरम् ॥२४॥ अयोध्यायां न तस्यास्ति चोरादपि कदा भयम् ॥ नैतद्विस्मरणीयं
हि सदास्माकं वचः शुभम् ॥२५॥ सावधानं सावधानं सावधानं सदा जनाः ॥ भवध्वं तत्र साकेतपुरि-
स्था हि निरंतरम् ॥२६॥ इत्युक्त्वा ते राजदूताः कृत्वा दुंदुभि निस्वनान् ॥ वादयामासुर्वाद्यानि मं-
जुलानि महंति च ॥२७॥ एवं सर्वत्र पुर्यां ते विचेरू रामसेवकाः ॥ एवं निशायां तै दूतैस्त्रिवारं
किंचिदंरात् ॥२८॥ पौराद्या बोधिताः प्रापुर्ज्ञानं तस्य विचारतः ॥ ततः प्रभाते ते सर्वे पौराजानपदा-
दयः॥२९॥ सभायां राघवं नत्वा तुष्टाः प्रोचुः पुरःस्थिताः ॥ राम राजीवपत्राक्ष त्वद्दूत वचनानि हि
॥३०॥ श्रूयतेत्र सदास्माभिर्न विचारस्तदा कृतः ॥ अद्यास्माभिर्निशायां हि त्वद्दूतवचनं शुभम् ॥३१॥

श्रुत्वा कृतो विचारो हि हृदि बुद्ध्या तवाज्ञया ॥ लब्धं ज्ञानं प्रभोऽस्माभिस्त्वज्ज्ञानं तद्भुतं हि नः
॥३२॥ नेदानीमुपदेशं वै त्वत्तो वांच्छाम राघवः ॥ इति तेषां वचः श्रुत्वा तान्रामः प्राह सस्मितः ३३
कथं लब्धं हि तज्ज्ञानं किं श्रुतं किं विचिंतितम्॥ तन्मेऽग्रे कथनीयं हि विस्तरेण यथाक्रमम्
इति राम वचः श्रुत्वा जनाः प्रोचुर्मुदान्विताः ॥ श्रृणु राम महाबाहो यल्लब्धं ज्ञानमुच्यते ॥३५॥ मोह
एव निशा ज्ञेया निद्रा भ्रांतिस्तु कथ्यते ॥ नेयं भ्रांतिः समीचीनानर्थो मृत्युर्ग्रसिष्यति ॥३६॥ अ-
योध्येयं स्वीय देहस्तत्र छिद्राणि वै नव ॥ लघु तन्मस्तके ज्ञेयं दंताद्या द्वाररक्षकाः ॥३७॥ पक्ष्मौ-
ष्ठादिनि द्वारेषु कपाटानि रितानि हि॥ पंचप्राणाश्च ते दूताः पुर्यां नित्यमटंति ते ॥३८॥ आत्मा ज्ञे-
यस्त्वत्र राजा जीवश्चेंद्रिय देवताः॥ ज्ञेयाश्च देहनगरे पौरा स्तत्र रघूत्तमः ॥३९॥ कालो ज्ञेया महा-
चोरो त्रिदोषाद्यागदाश्चये ॥ कालस्य सेवका स्ते हि नागरा इव संस्थिताः ॥ ४०॥ दुर्बला स्तेत्र जी-
वाद्या स्तेषामेवास्ति तेद्भयम्॥ किं मोहे पतिता भ्रांताः कालमत्रानयंति ते ॥४१॥ न ज्ञायत मृत्युका-
ल स्तस्माद्भ्रांतिः शुभात्र न ॥ ज्ञाननेव महाखड्गो वैराग्यं तीक्ष्णतात्वसेः ॥ ४२॥ सच्छीलं कवचं ज्ञेयं
धैर्यं भक्तिर्दृढात्वयि ॥ आत्मज्ञानेन जागर्ति न तस्यास्ति भयं कदा॥४३॥ सावधानं ज्ञाननिष्ठं
भवनीयं सदात्र हि ॥ वाद्यानि वचनान्येव साधूनां बोधदानि वै ॥४४॥ सदा धृतानि हृदये तानि
बुद्ध्यावलोकयेत्॥ मोहक्षयः प्रभातोयमिदानित्वत्पुरः स्थिताः ॥४५॥ त्वमेयात्मा सभेयं ते निवास
स्थानमीरितम्॥ तवाग्रे ये स्थिताः सर्वे वयं ते मुक्तिमागताः॥४६॥ किमिदानीं ते प्रष्टव्यं चोप-

दिश्यं त्वयाद्य किम् ॥ तव कीर्तनमात्रेण नरा मुक्तिं लभंति हि ॥ ४७॥ वयं त्वदंतिकाः सर्वे मु-
क्ता एव न संशयः ॥ इति तेषां वचः श्रुत्वा सस्मितः प्राह तान्प्रभुः॥४८॥ सम्यग्बुध्या परिज्ञा-
तं सुखं स्थेयं सदा जनाः ॥ नान्यथा स्वमतिः कार्यात्मनो रामं त्वनन्यथ ॥ ४९॥ इत्युक्त्वा सक-
लान् रामो ययौ सीतागृहं मुदा ॥ पौराद्या गतमोहास्ते चात्मानं मेनिरे परम् ॥५०॥ एवं रामेण भो
शिष्य दूतवाक्यैः सुबोधिताः ॥ पौराः सर्वे यथा तच्च मया ते विनिवेदितम् ॥५१॥ एकदा कैकेयी
राममेकांते प्रणिपत्य सा॥ अब्रवीन्मधुरं वाक्यं विनयात्पुरतः स्थिता ॥५२॥ रामराजीवपत्राक्ष मया
यदपराधितम् ॥ पुरा ज्ञानात्त्वया तच्च क्षंतव्यं वै कृपालुना ॥५३॥ अहं ते शरणं प्राप्ता मामुद्ध-
र जगत्पते ॥ किंचिदुपदिशस्व त्वं येनाज्ञानं विनश्यति ॥५४॥ तत्तस्यावचनं श्रुत्वा रामो राजी-
वलोचनः ॥ उवाच कैकयीं वाक्यं मधुरं प्रहसन्निव ॥५५॥ न त्वया मेऽपराधं हि मच्छंदाच्च स-
रस्वती ॥ स्थित्वा तवास्ये सा प्राह वरयांच्यादि यत्पुरा ॥५६॥ त्वं हि कैकयी शुध्दासि त्वयि क्रो-
धो न मेऽस्ति वै ॥ स्वस्त्वां नीत्वोपदेशं हि कारयिष्यति लक्ष्मणः ॥५७॥ इत्युक्त्वा तां विसर्ज्या-
थ लक्ष्मणं राघवोऽब्रवीत् ॥ शिबिकास्था हि कैकेयीं स्वःप्रभाते गिरा मम ॥५८॥ त्वया नेया ब-
हिः पुर्याः सरय्व्याश्च तटं प्रति ॥ आवीसमूहसंस्थानं वर्तते यत्र तत्र हि ॥५९॥ आवीवृंदांतिकं नी-
त्वा कैकेयीं शिबिकास्थिताम् ॥ आवीवाक्यानि श्राव्याणि मुहूर्तं ममवाक्यतः ॥६०॥ आनेतव्या त-
तश्चेयं कैकेयी ममसन्निधौ ॥ इति तद्रामवचनं श्रुत्वा स लक्ष्मणोऽपि च ॥६१॥ तथेत्युक्त्वा तदा

रामं तूष्णिं तस्थौ तदग्रतः ॥ अथ प्रभाते सौमित्रि गत्वा भरतमंदिरे ॥ ६२ ॥ शिबिकायां स कैके-
यी समारुह्य मुदान्विता ॥ दासीभिः सेवकैश्चापि वेष्टितां वेत्रपाणिभिः ॥ ६३ ॥ तां निनाय बहिः
पूर्या शरय्व्याश्च तटेरणे ॥ आवीयूथांतिकं यानं स्थापयामास लक्ष्मणः ॥ ६४ ॥ सुस्नातां कैक-
यी विप्रा स्ते ज्ञात्वा दक्षिणेच्छया ॥ दुद्रुवुः शिबिकापृष्ठे लक्ष्मण स्तान्न्यवारयत् ॥ ६५ ॥ अतिमू-
र्खाश्च पंग्वाद्या एव ज्ञेया द्विजादयः ॥ दानार्हा पंडितानैते श्रोत्रिया न प्रतिष्ठिताः ॥ ६६ ॥ ततो
दूतान्निराकृत्य मुक्ताजालानि लक्ष्मणः ॥ ऊर्ध्वं कृत्वा स्वहस्ताभ्यां कैकेयीं वाक्यमब्रवीत् ६७
तत्सौमित्रे पश्य कैकेयीमावीयूथं पुरःस्थितम् ॥ रामेण प्रेषितासि त्वमुपदेशार्थमादरात् ॥ ६८ ॥ त-
त्सौमित्रेर्वचः श्रुत्वाऽऽश्चर्ययुक्ताथ कैकयी ॥ प्रतारिताहं रामेण किमत्र प्रेष सादरम् ॥ ६९ ॥ इति त-
र्कान्कुर्वति सा तस्थौ तूष्णिं क्षणं तदा ॥ तावत्सुश्राव सा मेमे त्वां विवाक्यानि वै मुहुः ॥ ७० ॥ तानि
श्रुत्वाथ कैकेयी तदा चित्ते विचारयत् ॥ मेमेत्विति मुहुश्चात्र किमर्थं वचनानि हि ॥ ७१ ॥ आव्यः स-
र्वा वदंत्यत्र गूढार्थस्त्वत्र वर्तते ॥ ततो निमि कैकेयी नेत्र ध्यात्वा क्षणं हृदि ॥ ७२ ॥ सर्वं ज्ञात्वागता
ज्ञाना तुतोष नितरां तदा ॥ ततः स्मितानना प्राह लक्ष्मणं पुरतः स्थितम् ॥ ७३ ॥ लब्धं ज्ञानं मया बा-
ल नय मां राघवंप्रति ॥ इति तस्या वचः श्रुत्वा मुक्ताजालानि मुच्य सः ॥ ७४ ॥ दूतान्दूर गतान्वेगा-
दाहूय नगरीं प्रति ॥ कैकेयीमानयामास सीतागेहं विवेश सा ॥ ७५ ॥ तत्र दृष्ट्वा समासीनं-
सीतया रघुनंदनः ॥ बद्धमानं स्वशिरसि चित्रोष्णीषं करेण हि ॥ ७६ ॥ सीताकर धृता-

-दर्शी पश्यतं स्वमुखोत्पलम्॥ तं नत्वा परयाभक्त्या कैकेयी वाक्यमब्रवीत्॥७७॥ राम ते कृपया लब्धमावी वाक्य विचारतः॥ सत्ज्ञानं मे गतो मोहश्चेदानीं न प्रयोजनम्॥७८॥ उ-पदेशस्य रामस्य सदा मुक्तास्मि राघव॥ तत्तस्यावचनं श्रुत्वा सास्मितः प्राह तां विभुः ७९ कथं ज्ञातं त्वया ज्ञानं विचारश्च कथं कृतः॥ तत्सर्वं विस्तरेणैव ममाग्रे वद कैकयी॥८०॥ तद्रामव-चनं श्रुत्वा कैकेयी प्राह राघवम्॥ श्रुणु राम यथा लब्धं ज्ञानं तत्ते वदाम्यहम्॥८१॥ मयावीवचना-न्येव तत्रावीयूथसन्निधौ॥ श्रुत्वा मे मे त्विति तदा हृदये मंत्रितं क्षणम्॥८२॥ मे मे त्विति ममैता-श्च श्रावयंति मुहुर्मुहुः॥ श्रुत्वा मे मे मया चेद्वाच्यं तर्हि वै मया ॥८३॥ मे मे कथ्यते नित्यं पशु पुत्र गृहादिषु॥ अतो वक्तुं नोपदेशोऽयं मामेता भिरुच्यते॥८४॥ तर्ह्यहं चोपदेशोऽद्य निषेधे मां प्रकीर्त्यते॥ अतोऽहं न कदा मेमे प्रवदामि त्वितःपरम्॥८५॥ मे माता मे सुतश्चायं मे बंधुर्मे गृ-हंवरम्॥ रामे राज्यं सपत्नीयं मे सापत्नसुतस्त्वयम्॥८६॥ मे शरीरमिदं कांतं मे दिव्याभरणं व-रम्॥ मे मंथरा प्रिया दास्याः पुत्रादित्य शुभामतिः॥८७॥ यास्ति मे मे त्विति मयि सा त्यक्तव्येति मामतः॥ बोधयामासु र्वचनैः स्वीयैः स्पष्टं रघूत्तम॥८८॥ अन्येद्राम नरान्सर्वान् ताश्चाव्यो बो-धयंति हि॥ मे मे बुध्द्या सदास्माभिः पूर्वजन्म निवर्तितम्॥८९॥ देहं त्वतो आवी लब्धं युष्माभि र्मे मतिस्तु या॥ सर्वतः सात्रत्यक्तव्यानांगीकार्या कदाचन॥९०॥ मे मे मत्यागतिर्जाता यास्माकं सकला जनाः॥ मे मे बुध्द्या हि युष्माकं गतिः सैव भविष्यति॥९१॥ एवं ता बोधयंत्यत्र जनान्स्व-

वचनैः सदा ॥ न तद्वाक्यं जनै र्बुध्या कदा चित्ते विचार्यते ॥९२॥ तासां वाक्योपदेशेन प्रसा-
दात्तव राघव ॥ मेमे बुद्धिर्गतामत्तस्त्वतो मुक्तास्यहं त्विह॥९३॥ मे देहास्त्विति या बुद्धिर्यदा त्य-
क्ता मयात्र हि ॥ तदा किं शेषमत्यत्र संसारे दुःखदायके ॥९४॥ अतस्त्वयं वा लयं यातु देहो वा-
रि तरंगवत्॥ को पुत्रः कस्य का माता सर्वं ब्रह्म न संशयः॥९५॥ अहमेव परं ब्रह्म मत्तो ब्रह्म परं
नहि ॥ सर्वं यदृश्यते चेदं मायेयं तव राघव ॥९६॥ नैश्वरं बुद्बुदाकारं ज्ञातं चेदं मया प्रभो ॥ इ-
ति तस्या वचः श्रुत्वा प्राह तां सस्मितः प्रभुः ॥९७॥ सम्यग्विचारितं बुध्या त्वयावीवाक्यमुत्तम-
म्॥ गच्छेदानिं सुखस्तिष्ठ जीवन्मुक्तासि कैकयी ॥९८॥ तद्रामवचनं श्रुत्वा कैकेयी तोषपूरिता॥
देहाभिमानहीना सा नत्वा सीतारघूत्तमम्॥९९॥ ययौ भरतगेहं हि नासक्ता क्वापि सत्वभूत्॥
एवं शिष्य मया प्रोक्तमावीवाक्योपदेशतः ॥१००॥ यथा ज्ञानं हि कैकेय्ये जातं तत्कथितं तव ॥
इदानीं श्रृणु यच्चान्य ते वदामि कुतूहलम्॥१॥ सुमित्रात्वेकदा रामं सीतया रहसी स्थितम्॥ नि-
रीक्ष्य नत्वा तं प्राह रामं राजीवलोचन ॥२॥ किंचित्ते प्रार्थयाम्यद्य किंचिदुपदिशस्व माम्॥ तत्त-
स्या वचनं श्रुत्वा तामाह रघुनंदनः ॥३॥ का त्वं चेति वदादौ मां पश्चादुपदिशामि ते ॥ गच्छ गेहं
स्वस्थ बुध्या हृदि सम्यग्विचार्य च ॥४॥ श्वो मामेत्य मम प्रश्नस्यौत्तरं देहि वै ततः ॥ अहमुपदि-
शाम्यंब येन तुष्टा भविष्यसि॥५॥ तद्रामवचनं श्रुत्वा सुमित्रा विस्मितानना ॥ तूष्णिमेव ययौ
गेहं रामवाक्यं व्यचिंतयत्॥६॥ काहं रुष्टा राघवेण किं श्वो देयं मयोत्तरम्॥ काहं दैविचासु-

री वा दानवी राक्षसी तथा ॥ ७॥ मानुषी चेत्यहं मत्वा यदि रामं वदामि वै ॥ तर्हि ना शरीराणि ध्रीयंते नटवन्मया ॥ ८॥ तदा क्वेदं मानुषी त्व मन्य जात्या घटेच्चमे ॥तर्ह्यहं मानुषी नैव नचैवा- न्या कदाच न ॥ ९॥ मानुषी राक्षसी चेति यानि नामानि तानि हि ॥ देहस्यै वात्र कथ्यंते देहस्तु नैश्वरः स्मृतः ॥१०॥ देहाद्भिन्नास्मिका त्वन्याहं रूपान्यनेकशः ॥ धरामि सर्वदा भूम्यां सा काहं चेति वेद्मि न ॥ ११॥ इदानीं तु मया ज्ञातं यथा विष्णुस्तथा त्वहम॥ नानारूपाणि सोऽप्यत्र मत्स्यादिनि धरोति हि ॥१२॥ तथा नानास्वरूपाणि धार्यंतेऽत्रापि वै मया ॥ एवमेव हि वक्त- व्यं तर्हि मे तस्य चांतरम् ॥१३॥ स्ववशोऽस्ति महाविष्णुस्त्वहं विष्णु वशा सदा॥ अतो विष्णोः कला चाहं सत्यमेव न संशयः ॥१४॥ विष्णु में नैव भेदोऽस्ति यथा गंगास्थले घटे ॥ एकै वा- स्त न तद्वैच्च विष्णुरेवाहमस्मि हि ॥१५॥ अहमेव यदा विष्णुस्तदा किं चावशेषितुम् ॥ यत्प्र- ष्टव्यं तु रामाय जीवन्मुक्ताहमस्मि वै ॥१६॥ एवं सुमित्रा संचिंत्य गताज्ञाना मुदान्विता ॥ अ- तिक्रम्य निशां ता सा प्रभाते राघवं ययौ ॥१७॥ नत्वा रामं स ता प्राह मया रात्रौ विचिंततम् ॥ का त्वं पृष्टा त्वया पूर्वं तर्ह्यहं ब्रह्म राघव ॥१८॥ त्वत्तो नान्यच्च प्रष्टव्यं त्वद्भिन्नाहं कदापि न ॥ इत्युक्त्वा सा यथा गेहे निशि स्वे हृदि मंत्रितम् ॥१९॥ तत्सर्वं श्रावयित्वा तं जीवन्मुक्त भव- त्तदा ॥सुमित्रां राघवप्याह सम्यग्बुध्वा विचिंतितम् ॥२०॥ जीवन्मुक्तासि चांब त्वं गच्छ गेहं सुखं वस ॥ ततः सुमित्रा संतुष्टा गतमोहा रघूत्तमम् ॥२१॥ सीतां चापि पृथग्नत्वा ययौ लक्ष्मण-

मंदिरम् ॥ एवं शिष्य मया प्रोक्तं काहं चेति विचारतः ॥२२॥ जीवन्मुक्ता सुमित्रा सा बभूव सुख-
निर्भरा ॥ अन्यच्चेते वदाम्यद्य तच्छृणुष्व द्विजोत्तम ॥२३॥ एकदा राघवं दृष्ट्वा कौसल्या रहसि -
स्थितम् ॥ पप्रच्छ नत्वा श्रीरामं ज्ञात्वा विष्णुं परात्परम् ॥२४॥ राम राम महाबाहो किंचिदुपदिश-
स्व माम् ॥ येन मे तव सत्ज्ञानं भविष्यति महाशुभम् ॥२५॥ तं मातृवचनं श्रुत्वा तां विहस्याह राघ-
वः ॥ श्वः प्रभाते समुत्थाय गत्वा गोष्ठं कियत्क्षणम् ॥२६॥ श्रुत्वा गोवत्सवाक्यानि सम्यक् तानि
विचिंत्य वै ॥ ममांतिकं ततो याहि त्वमम्ब वचनान्मम ॥२७॥ उपदेशं करिष्यामि ततोऽहं त्वां न सं-
शयः ॥ तद्रामवचनं श्रुत्वा कौसल्या विस्मिता तदा ॥२८॥ नत्वा रामं ससीतं च तूष्णिमेव गृहं
ययौ ॥ ततो निशामतिक्रम्य कौसल्या साऽरुणोदये ॥२९॥ गोष्ठं गत्वा क्षणं स्थित्वा धेनुवत्स
वचांसि सा ॥ अहम्मा त्विति शुश्राव सुस्नाता वै मुहुर्मुहुः ॥३०॥ तानि वाक्यानि वत्सानां श्रुत्वा चि-
त्ते विचारयत् ॥ अहम्मा त्विति वाक्यानि किं वदंति मुहुर्मुहुः ॥३१॥ इमानी किं बोधयंति मां व-
त्सानि मुहुर्मुहुः ॥ इत्युक्त्वा सा क्षणं ध्यात्वा हृदि सम्यग्विचार्य च ॥३२॥ वत्सवाक्यानि कौसल्या
गताज्ञानाभ तत्क्षणात् ॥ ततस्तुष्टा ययौ रामं नत्वा तं प्राह हर्षिता ॥३३॥ राम विष्णो रमानाथ वत्स-
वाक्यैः सुबोधिता ॥ त्वयैवाहं रामचंद्र गताज्ञानास्मि राघव ॥३४॥ तवोपदेशवांच्छा मे न किंचि-
दस्त्यतःपरम् ॥ लब्धं ज्ञानं मया राम त्वत्तो भिन्ना कदास्मि न ॥३५॥ तन्मातृवचनं श्रुत्वा कौ-
सल्यां राघवोऽब्रवीत् ॥ वत्सवाक्यैः कथं लब्धं त्वया ज्ञानं वदस्व माम् ॥३६॥ तद्रामवचनं श्रु-

त्वा कौसल्या प्राह राघवम् ॥ अहंमा त्विति वाक्यानि तेषां श्रुत्वा रघूत्तम ॥३७॥ इमानी किं बोधयंति मां वत्सानि मुहुर्मुहुः ॥ एवं विचारितं ध्यात्वा क्षणं स्वहृदये मया ॥३८॥ वाक्यार्थश्च तदा ज्ञातस्त्वहं मां कथ्यतां जनाः ॥ वत्सान्येव बोधयंति अज्ञाय न जनैस्तु तत् ॥३९॥ अहंशब्दोदहपरो यदा त्यक्तो मयात्र हि ॥ अहं देहि त्वहं माता येति बुद्धिर्गता मम ॥४०॥ देहबुद्धि र्यदा नष्टा तदा किं शेषमस्ति हि ॥ सुखं दुःखं तु देहाय न मे किंचिद्रघूत्तम ॥४१॥ तिष्ठ त्वयं वापदा तु देहो भोगाश्रयस्त्वयम् ॥ अहंत्वदश एवात्र पृथगुपाधितः स्मृता ॥४२॥ यथा कुंभे रविर्भिन्नो दृश्यतेऽत्र ह्युपाधितः ॥ त्वतोऽहं न कदा भिन्ना ब्रह्ममेवास्यहं प्रभो ॥४३॥ इति तन्मातृवचनं श्रुत्वा रामः स्मिताननः ॥ कौसल्यामाह मातस्त्वं मुक्तास्यद्य न संशयः ॥४४॥ सम्यग्विचारितं चित्ते वत्सवाक्यं सविस्तरम् ॥ गच्छ तिष्ठ सुखं गेहे त्विमां बुद्धि दृढां कुरु ॥ ४५॥ किमर्थं नमया युष्माकं स्वजन्मातृः स्ववचनेन हि ॥ उपदेशकृतस्त्वंब तत्सर्वं त्वं निबोधय ॥४६॥ उपदेष्टा गुरुर्ज्ञेयो युष्माकं तनयस्त्वहम् ॥ कथं युष्मानहं मातृस्त्वहमुपदिशाम्यहम् ॥४७॥ स्त्रीणां पति र्गुरुर्ज्ञेयः स्त्रीभिर्नान्यो गुरुः कदा ॥ कार्यस्तस्मान्मयानैव युष्मान्स्वास्योपदेशितम् ॥४८॥ पौराणां च गुरुस्तातस्तथा स्वीय पुरोहितः ॥ अतस्ते त्वमपि मया दूतवाक्योपदेशितम् ॥ ४९॥ परास्यैरेव युष्माकंमुपदेशः कृतो मया ॥ गच्छ गेहं सुखं तिष्ठ सदा मां परिचिंतय ॥५०॥ तद्रामवचनं श्रुत्वा कौसल्या तुष्टमानसा ॥ रामं नत्वा ययौ गेहं संतुष्टा संस्थिता सुखम् ॥५१॥ एवं ता रामचंद्रेण बोधिता मातरः

शुभाः ॥ स्वस्वायुषः क्षये: सर्वा देहानि मुमुचुः सुखम् ॥१५१॥ रामसान्निध्यमात्रेण विमानवर-
संस्थिताः ॥ जग्मुः सर्वास्तद्वैकुंठं राघवेणैव सत्कृताः ॥ ५३॥ शिष्य तासां महद्भाग्यं यासां रा-
-मादिभि स्त्रिभिः ॥ पारलोक्यादि सत्कर्म स्वहस्तै विनिवर्तितम् ॥५४॥ एवं शिष्य मया प्रो-
क्ता तासामूर्ध्वगतिस्तव ॥ उपदेशस्तथा तासां प्रोक्ताश्चाप्यत्र वै मया ॥ १५५॥ इति श्रीशत-
कोटि रामचरितांतर्गत श्रीमदानंदरामायणे वाल्मीकिये मनोहरकांडे मातृणां वैकुंठारोह-
णं नाम द्वितीयः सर्गः॥ शुभं भवतु ॥ श्रीसीतारामचंद्रार्पणमस्तु ॥

नागपूर
ता॰ २२-११-५२

॥श्रीगणेशायनमः॥ श्रीविष्णुदास उवाच ॥ कथं श्रीराघवस्यात्र रामोपासक मानवैः॥ कार्या वै मानसी पूजा बहिः पूजा तथा शुभा ॥१॥ कथं चोपासना ग्राह्या गुरोः श्रीराघवस्य च ॥ का श्रेष्ठोपासना चात्र कः श्रेष्ठो गुरुस्तथा ॥२॥ के के मंत्रा राघवस्य भक्तानां सिद्धिदायकाः॥ का तिथिस्तोषदा तस्य किं किं तत्तोषवर्द्धनम् ॥३॥ कः श्रेष्ठोत्र वरो देवो यस्य ग्राह्या ह्युपासना ॥ तत्सर्वं विस्तरेणैव गुरो त्वं वक्तुमर्हसि ॥४॥ श्रीरामदास उवाच ॥ सम्यग्पृष्टं त्वया शिष्य सावधान मनाः शृणु ॥ सर्वं तद्विस्तरेणाद्य त्वदग्रे कथ्यते मया ॥५॥ आदौ गुरुं परीक्ष्यात्र तच्चिन्हैश्च द्विजोत्तमैः॥ ततस्तस्मादुपदेशो ग्राह्यस्तीर्थे विधानतः ॥६॥ गुरोश्चैवात्र चिन्हानि तवादौ प्रवदाम्यहम् ॥ क्रोधी कुष्टी महारोगी मलीनो निर्घृणो जडः ७ अपंडितो निंदकश्च लोलुपो विषयातुरः॥ दांभिको गर्वसंयुक्तः पापात्मा दुष्टवंशजः ॥८॥ घाती परद्रोह कर्ता परद्रव्यापहारकः ॥ अजितात्मा देवबाह्य परदारा रतः सदा ॥९॥ परदोषारोपकश्च कृपणश्चाजितेंद्रियः ॥ देव वेद द्विजानां च यति तीर्थ गवामपि ॥१०॥ तुलसी वन्हि सूर्याणां शास्त्रेषु परिनिष्ठकः ॥११॥ सत्यवाक् मितभुक् ज्ञानी कलावान् द्विजवंशजः॥ सत्कर्मनिष्ठो धर्माणामुपदेष्टा सुबुद्धिदः ॥१२॥ योगाभ्यास कलाभिज्ञो योगवान्समदर्शनः ॥ कृतकर्मा तीर्थसेवी ~~धर्माधर्म~~ विवेचकः ॥१३॥ ब्रह्मचारी गृहस्थो वा वानप्रस्थाश्रमी यतिः ॥ स्वाश्रमाचार सन्निष्ठो बुद्धिमान्विजितेंद्रियः ॥१४॥ क्षमी कृपालू मृदुवाक् सुमुखः सौम्यदर्शनः ॥ अनिद्रश्च समुद्योगी शांतात्मा परतोषकृत् ॥१५॥ औदार्यवान् ज्ञाननिष्ठः शुचिस्त्यक्त प्रतिग्रहः ॥ इत्यादि गुणयुक्तोयः स गुरुः परमोत्तमः ॥१६॥ तस्य से-

वां चिरं कृत्वा सेवया तं प्रसाद्य च ॥ तस्मादुपासना ग्राह्या स तीर्थे विधिपूर्वकः ॥१७॥ उपासनास्त्र-
यः संति सात्विकी राजसी तथा ॥ तामसी च तृतीया सा गर्हितात्र निगद्यते ॥१८॥ भूत वेताळ कू-
ष्मांड पिशाच्चानामुपासना ॥ सा ज्ञेया तामसी घोरा देवानां सात्विकी स्मृता॥ १९॥ यक्षाणां राक्षसा-
णां च यासा ज्ञेया तु राजसी ॥ शैवाः सौराश्च गाणेशोः शाक्ताश्च वैष्णवास्तथा ॥ २०॥ अवतारास्त्वसं-
ख्याता पंचानां संति भूतले ॥ तेषामुपासना ग्राह्या गुरोरास्या द्विजादिभिः ॥ २१॥ पंचानामवतारेषु
विष्णोरेव वदाम्यहम् ॥ चतुश्चत्वारींशन्मितानवतारान्महत्तमान् ॥२२॥ पुरुषोत्तमो विधिश्चैव रुद्रो नारा-
यणस्तथा ॥ हंसोऽथ दत्तात्रेयश्च कुमारो ऋषभस्तथा ॥२३॥ हयग्रीवो तथा मत्स्यः कूर्मो वाराह एव च
॥ नारसिंहो वामनश्च जामदग्न्यस्तथैव च ॥२४॥ रामः कृष्णस्तथा बौध्दः कल्किर्यज्ञो हरिस्तथा ॥ वा-
लखिल्योध्दारकश्च पृथुर्धन्वंतरि स्तथा ॥२५॥ मोहनी नारदो व्यासः कपिलः केशवस्तथा ॥ माधवश्चा-
थ गोविंदो मधुसूदन एव च ॥२६॥ त्रिविक्रमः श्रीधरश्च पद्मनाभ स्तथा स्मृतः ॥ दामोदरस्तथा संकर्ष-
णः प्रद्युम्न एव च ॥२७॥ अनिरुध्दोऽधोक्षजश्च ह्यच्युतश्च जनार्दनः ॥ उपेंद्रश्च हृषिकेशास्त्वेते ज्ञेया
महत्तमाः ॥२८॥ मत्स्याद्या अवताराश्च दशै तेष्वपि चोत्तमाः॥ दशावतार मध्येऽपि राम कृष्णौ महत्तमौ
॥२९॥ ताभ्यामपि वरः पूर्वः सत्यसंधो रघूत्तमः॥ एकपत्नीव्रतो वीरोस्त्वेकबाणो नृपोत्तमः ॥३०॥ सप्तद्वी-
पपतिः श्रीमान्छत्रचामर मंडितः ॥ एवं ज्ञात्वोपासनात्र ग्राह्या श्रीराघवस्य च ॥३१॥ गुरूपदिष्ट विधिना
सुमुहूर्ते शुभस्थले ॥ अथवा तत्तद्देवानां ग्राह्या तज्जन्म सं तिथौ ॥३२॥ चैत्रमासे सितेपक्षे नवम्यां राम-

जन्मनि ॥ उपासना नंतरं हि रामंभक्त्या प्रपूजयेत् ॥३३॥ एवं यस्यावतारस्य गृहितोपासना नरैः॥ तै-
स्तज्जन्मदिवसे कार्या पूजा महोत्सवैः ॥३४॥ अथ दशावताराणां शिष्य जन्मदिना मया ॥ प्रोच्यतेऽ
त्र श्रुणुष्वं त्वं येषु तान्पूजयं नरैः ॥३५॥ चैत्रे तु शुक्ल पंचम्यां भगवान्मीनरूपधृक् ॥ ज्येष्ठशुक्ल द्वा-
दशां च कूर्मरूपधरो हरिः ॥३६॥ चैत्र कृष्ण नवम्यां तु हरिर्वाराहरूप धृक् ॥ वैशाखे भूच्चतुर्दश्यां
शुक्लपक्षे नृकेसरी ॥३७॥ मासे भाद्रपदे शुक्लैकादश्या वामनस्त्वभूत् ॥ वैशाखे जामदग्न्यस्तु तृती-
यायां सिते त्वभूत् ॥३८॥ चैत्रशुक्ल नवम्यां तु माध्यान्हे राघवस्त्वभूत् ॥ कृष्णाष्टम्यां श्रावणे हि कृ-
ष्णो भून्मथुरापुरी ॥३९॥ पौषशुक्ला सप्तमी या बौध्दजन्मतिथिस्तु सा ॥ माघशुक्ल तृतीयां तु क-
ल्किनः सा तिथिः स्मृता ॥४०॥ अन्हो मध्ये वामनो राम रामौ- मत्स्यः क्रोडश्चापराण्हे विभागे ॥ कूर्मः
सिंहो बौध्द कल्की च सायं- कृष्णो रात्रौ काल साम्ये च पूर्वे ॥ ४१॥ एवं तज्जन्मकालाश्च ज्ञात्वा तेषा-
मुपासकैः ॥ उत्सवः परमः कार्यस्तद्देवस्य प्रपूजने ॥४२॥ नित्यं पूजा प्रकर्तव्या भक्त्या तेषामुपास-
कैः ॥ विशेषाज्जन्मदिवसे कार्यं तत्पूजनं मुदा ॥४३॥ गुरो र्गृहितो यो मंत्र स्तं नित्यं हृदये जपेत् ॥
राममंत्रास्त्वनेकाश्च शतवर्णात्मको मनुः ॥४४॥ पंचाशद्वर्णकश्चापि द्विचत्वारिंशदक्षरः ॥ द्वात्रिं-
शदक्षरश्चाथ सप्तविंशाक्षर स्तथा ॥४५॥ पंचविंशाद्वर्णकश्च चतुर्विंशाक्षरस्तथा ॥ एकविंशद्वर्ण
कश्च विंशद्वर्णात्मक स्तथा ॥४६॥ अष्टादश वर्णकश्च षोडशाक्षरं एव च ॥ पंचदश वर्ण कश्च चतु-
र्दशाक्षर स्तथा ॥४७॥ त्रयोदशा क्षरश्चापि द्वादशाक्षर एव च ॥ एकादशाक्षरश्चापि तथा मंत्रो द-

शाक्षरः ॥ ४८॥ नवाक्षरोऽष्टवर्णात्मा सप्ताक्षर मनुस्तथा ॥ षडक्षरो राममंत्रस्तथा पंचाक्षरो मनुः ॥४९॥ चतुर्वर्णात्मकश्चापि तथा वर्ण त्रयात्मका॥ द्व्यक्षरो राममंत्रश्च मनुस्त्वेकाक्षरोपि च ॥५०॥ एवं नानाविधामंत्राः शतशोथ सहस्रशः ॥ गुरुस्त्वेको गृहित्वात्र जपेच्छ्रीराम सन्निधौ ॥५१॥ उपासना विधानं च रामोपासक मानवैः ॥ तथा मंत्रस्वरूपं हि विज्ञेयं मंत्रशास्त्रतः॥५२॥ अधुना मानसी पूजा विधानं च मयोच्यते ॥ यद्वंडके सुतीक्ष्णाय कथितं कुंभजन्मना ॥५३॥ सुतीक्ष्णस्त्वेकदाऽगस्तिं दृष्ट्वा रहसिसंस्थितम् ॥ प्रणम्य प्रणयाभक्त्या प्रोवाच विनयान्वितः ॥५४॥ सुतीक्ष्ण उवाच ॥ हृदये मानसी पूजा की दृशी च वद प्रभो ॥ उपचारैः कति विधैः पूज्यते रघुनंदनः ॥५५॥ अगस्त्य उवाच ॥ रामं पद्मपलाशाक्ष कालांबुद सम प्रभम् ॥ स्मितवक्त्रं सुखासीनं चिंतयेच्चिंतिताप्तये ॥ ५६॥ रागादि कलुषं चित्तं वैराग्येन सुनिर्मलम् ॥ कृत्वा ध्यायेत्सदा रामं भवबंध विमुक्तये ॥५७॥ प्रातः शुद्ध तनुर्भूत्वा शौचादिभिरतंद्रितः ॥ विविक्त देशमाश्रित्य ध्यानं पूजां समारभेत् ॥५८॥ नाभिकंद समुद्भूतं कदलीकुसुमोपमम् ॥ अष्टपत्रं स्निग्धवर्णं ध्यायेत्हृदय पंकजम् ॥५९॥ तत्पद्मं रामनाम्नैव फुल्लं कृत्वास्य मध्यमे ॥ भावयेत्सूर्य सोमाग्नि मंडलान्युत्तरोत्तरम् ॥६०॥ तस्योपरिह्यसे दिव्यं पीठं रत्नमयोज्वलम् ॥ तन्मध्ये राघवं ध्यायेत्सूर्यकोटिसमप्रभम् ॥६१॥ इंदिवरनिभं शांतं विशालाक्षं सुवक्षसम् ॥ उद्यद्दीधीति मस्द्रास्वत्कुंडलाभ्यां विराजितम् ॥६२॥ सुनासं सुकीरीटं सुकपोलं शुचिस्मितम् ॥ विज्ञानमुद्रा द्विभुजं कंबुग्रीवं सुकुंतलम् ॥६३॥ नानारत्नमयैर्दिव्यहारैर्भूषितमव्ययम् ॥ विद्युत्पुंज प्रतीकाशं वस्त्र-

युग्मधरं हरिम् ॥ ६४॥ वीरासनस्थं संतान तरूमूलनिवासिनम् ॥ महासुगंधलिप्तांगं वनमाला विराजितम् ॥६५॥ वामपार्श्वे स्थितां सीतां चामीकरसमप्रभाम् ॥ लीलापद्मधरां देविं चारुहासां शुभाननाम् ॥६६॥ पश्यंति स्निग्धया दृष्ट्या दिव्यां कल्पविराजिताम् ॥ छत्र चामरहस्तेन लक्ष्मणेन सुसेवितम् ॥ ६७॥ हनुमत्प्रमुखैर्नित्यं वानरैः परिवारितम् ॥ स्तूयमानं ऋषिगणैः सेवितं भरतादिभिः ॥ ६८॥ सनंदनादिभिश्चान्यैर्योगि वृंदैः स्तुतं सदा ॥ सर्वशास्त्रार्थकुशलं योगज्ञं योगसिद्धिदम् ॥ ६९॥ एवं ध्यात्वा रामचंद्रं मणिद्रुय सुशोभितम् ॥ शुद्धेन मनसा रामं पूजयेत्सततं हृदि ॥ ७०॥ राजाधिराज राजेंद्र रामचंद्र महिपते ॥ आवाहयामि विश्वेशं जानकीवल्लभं विभुम् ॥ कौसल्यातनयं विष्णुं श्रीरामं प्रकृतेः परम् ॥७१॥ राजाधिराज राजेंद्र रामचंद्र महिपते ॥ रत्नसिंहासनं तुभ्यं दास्यामि स्वीकुरु प्रभो ॥७२॥— श्रीरामागच्छ भगवन् रघुवीर नृपोत्तम ॥ जानक्यासह राजेंद्र सुस्थिरो भव सर्वदा ॥ ७३॥ रामचंद्र महेष्वास रावणांतक राघव ॥ यावत्पूजा समाप्येहं तावत्त्वं सन्निधो भव ॥ ७४॥ रघुनंदन राजर्षे राम राजीवलोचन ॥ रघुनंदन मे देव श्रीरामाभिमुखो भव ॥७५॥ प्रसीद जानकीनाथ सुप्रसिद्ध सुरेश्वर प्रसन्नो भव मे राजन्सर्वेश मधुसूदन ॥७६॥ शरणं मे जगन्नाथ शरणं भक्तवत्सल ॥ वरदोभव मे राजन्शरणं मे रघूत्तम ॥ ७७॥ त्रैलोक्यपावनानंत नमस्ते रघुनायक ॥ पाद्यं गृहाण राजर्षे नमो राजीवलोचन ॥ ७८॥ परिपूर्ण परानंद नमो रामाय वेधसे ॥ गृहाणार्घ्यं मया दत्तं कृष्ण विष्णो जनार्दन ॥ ७९॥ ॐ नमो वासुदेवाय तत्वज्ञान स्वरूपिणे ॥ मधुपर्कं गृहाणे मे राजराजाय ते नमः ॥८०॥ नमः सत्याय

शुध्दाय बुध्याय ज्ञानस्रूपिणे ॥ गृहाणाचमनं देव सर्वलोकैक नायक ॥८१॥ ब्रह्मांडोदर मध्यस्थ तीर्थैश्च रघुनंदन ॥ स्नापयिष्याम्यहं भक्त्या सं गृहाण जनार्दन ॥८२॥ संतप्तकांचनप्रख्यं पीतांबरमिदं हरे ॥ सं गृहाण जगन्नाथ रामचंद्र नमोस्तु ते ॥८३॥ श्रीरामाच्युत यज्ञेश श्रीधरानंत राघव ॥ ब्रह्मसूत्रं सोत्तरीयं गृहाण रघुनायक ॥८४॥ कीरीट हार केयूर रत्नकुंडल मेखलाः॥ ग्रैवेय कौस्तुभं हार रत्नकंकण नूपुरान् ॥८५॥ एवमादिनि सर्वाणि भूषणानि नृपोत्तमः ॥ अहं दास्यामि सद्भक्त्या सं गृहाण जनार्दन ॥८६॥ कुंकुमागरु कस्तुरी कर्पूरोन्मिश्र चंदनम्॥ तुभ्यं दास्यामि विश्वेश श्रीराम स्वीकुरु प्रभो ॥८७॥ तुलसी कुंद मंदार जाति पुन्नाग चंपकैः॥ कदंब करवीरैश्च कुसुमै शतपत्रकैः॥८८ नीलांबुजै र्बिल्वदलैः पुष्पमाल्यैश्च राघव॥ पुजयिष्याम्यहं भक्त्या संगृहाण नमोस्तुते ॥८९॥ वनस्पतिरसै र्दिव्यै र्गंधाढ्यैः सुमनोहरैः॥ रामचंद्र महिपाल धूपोयं प्रतिगृह्यताम् ॥९०॥ ज्योतिषां पतये तुभ्यं नमो रामाय वेधसे ॥ गृहाण दीपकं राजन् त्रैलोक्य तिमिरापहम् ॥९१॥ इदं दिव्यान्नममृतं रसैः षड्भिः समन्वितम् ॥ श्रीराम राजराजेंद्र नैवेद्यं प्रतिगृह्यताम् ॥९२॥ नागवल्लि दलै र्युक्तं पुगीफल समन्वितम् ॥ तांबूलं गृह्यतां राम कर्पूरादि समन्वितम् ॥९३॥ मंगलार्थं महिपाल नीराजनमिदं हरे ॥ संगृहाण जगन्नाथ रामचंद्र नमोस्तुते ॥९४॥ ॐ नमो भगवते श्रीरामाय परमात्मने ॥ सर्वभूतांतरस्थाय ससीताय नमो नमः ॥९५॥ ॐ नमो भगवते श्रीरामचंद्राय वेधसे ॥ सर्व वेदांतवेद्याय ससीताय नमोनमः ॥९६॥ ॐ नमो भगवते श्री विष्णवे परमात्मने ॥ परात्पराय रामाय ससीताय नमोनमः ॥९७॥

ॐ नमो भगवते श्रीरघुनाथाय शार्ङ्गिणे ॥ चिन्मयानंदरूपाय ससीताय नमोनमः ॥ ९८॥ ॐ नमो भगवते श्रीरामकृष्णाय चक्रिणे ॥ विशुद्धज्ञानदेहाय ससीताय नमोनमः ॥९९॥ ॐ नमो भगवते श्रीवासुदेवाय विष्णवे ॥ पूर्णानंदैकरूपाय ससीताय नमोनमः ॥१००॥ ॐ नमो भगवते श्रीरामचंद्राय वेधसे ॥ सर्वलोक शरण्याय ससीताय नमोनमः ॥१॥ ॐ नमो भगवते श्रीरामायामित तेजसे ॥ ब्रह्मानंदैकरूपाय ससीताय नमोनमः ॥२॥ इति नमस्काराष्टकः ॥ नृत्य गीतादि वाद्यादि पुराण पठनादिभिः ॥ राजोपचारैरखिलैः संतुष्टो भव राघव ॥३॥ विशुद्धज्ञानदेहाय रघुनाथाय विष्णवे ॥ अंतःकरण स शुद्धिं देहि मे रघुनंदन ॥४॥ नमो नारायणानंत श्रीराम करुणानिधे ॥ मामुद्धर जगन्नाथ घोरात्संसारसागरात् ॥५॥ रामचंद्र महेष्वास शरणागत तत्पर ॥ त्राहि मां सर्वलोकेश तापत्रय महानलात् ॥६॥ श्रीकृष्ण श्रीकर श्रीश श्रीराम श्रीनिधे हरे ॥ श्रीनाथ श्रीमहाविष्णो श्री नृसिंह कृपानिधे ॥७॥ गर्भ जन्म जरा व्याधि घोरसंसार सागरात् ॥ मामुद्धर जगन्नाथ कृष्ण विष्णो जनार्दन ॥८॥ श्रीराम गोविंद मुकुंद कृष्ण- श्रीनाथ विष्णो भगवन्नमस्ते ॥ प्रौढारि षड्वर्ग महाभयेभ्यो- मां त्राहि नारायण विश्वमूर्ते ॥९॥ श्रीरामाच्युत यज्ञेश श्रीधरानंत राघव ॥ श्रीगोविंद हरे कृष्ण नमस्ते जानकीपते ॥११०॥ ब्रह्मानंदैक विज्ञानं त्वन्नामस्मरणां नृणां ॥ त्वत्पादांबुज सद्भक्तिं देहि मे रघुवल्लभ ॥११॥ नमोस्तु नारायण विश्वमूर्ते- नमोस्तुते शाश्वत विश्वयोने ॥ त्वमेव विश्वं सचराचरं च- त्वामेव सर्वे प्रवदंति संतः ॥१२॥ नमोस्तुते कारण कारणाय- नमोस्तु कैवल्यफलप्रदाय ॥ नमोनमस्तेस्तु अजन्मयाय- वेदांतवेद्याय नमोनमस्ते ॥१३॥ नमोनमस्ते भरताग्रजाय- नमोस्तु यज्ञ-

प्रतिपालकाय ॥ अनंत यज्ञेश हरे मुकुंद ॥ गोविंद विष्णो भगवन्मुरारे ॥ १४॥ श्रीवल्लभानंत जगन्निवास श्रीरामराजेंद्र नमो नमस्ते ॥ श्रीजानकीकांत विशालनेत्र-राजाधिराज त्वयि मेऽस्तु भक्तिः ॥ १५ ॥ त्वत्पदांबु नदेनैव निर्मितं रत्नभूषितम् ॥ स्वर्णपुष्पं रघुश्रेष्ठ दास्यामि स्वीकुरु प्रभो ॥१६॥ हृत्पद्मकर्णि-कामध्ये सीतयासह राघव ॥ निवस त्वं रघुश्रेष्ठ सर्वैरावरणैः सह ॥१७॥ मनोवाक्कायजनितं कर्म यद्वाशु-भाशुभम् ॥ तत्सर्वं प्रीतये भूयान्नमो रामाय शार्ङ्गिणे ॥१८॥ अपराध सहस्राणि क्रीयंतेऽहर्निशं मया ॥ दासोऽहमिति मां मत्वा क्षमस्व रघुपुंगव ॥१९॥ नमस्ते जानकीनाथ रामचंद्र महीपते ॥ पूर्णानंदैक रूप त्वं गृहाणार्घ्यं नमोस्तु ते ॥१२०॥ एवं यः कुरुते पूजां बहिर्वा हृदयेऽपि वा ॥ स कृत्पूजनमात्रेण राम एव भवेन्नरः ॥२१॥ किं पुनः सततं ब्रह्मण्येवं पूज्यं स्थितो हि सः ॥ सर्वान्कामानवाप्नोति चेह लोके परत्र च ॥२२ ॥ एवं सुतीक्ष्ण ते प्रोक्तं यथा पृष्टं त्वया मम ॥ हृदये मानसीपूजाविधानं राघवस्य च ॥२३॥ श्री-रामदास उवाच ॥ एवं शिष्य सुतीक्ष्णाय मुनयेऽगस्तिना पुरा ॥ यत्प्रोक्तं तन्मया सर्वं तव प्रोक्तं सवि-स्तरात् ॥२४॥ शिष्याधुना बहिःपूजाविधानं च मयोच्यते ॥ नरैः प्रातः समुत्थाय कृतशौचादि सत्क्रियैः स्नात्वा संध्यादिकं कृत्वा देवपूजा समारभेत् ॥ तीर्थे देवालये वापि गोष्ठे पुण्यस्थलेषु च ॥२६॥ नद्यास्त-टे देवगेहे तुलसीसन्निधौ तथा ॥ लिप्त्वा भूमिं गोमयेन ततो पद्मानि लेखयेत् ॥२७॥ सीता रक्त हरि-त्पीत नील कृष्णादि संभवैः ॥ नानावर्णैश्चित्रितानि तत्र पूजां समारभेत् ॥२८॥ अष्टोत्तर सहस्र श्रीराम-लिंगात्मकासनम् ॥ वाऽष्टोत्तरशत श्रीमद्राम लिंगात्मकासनम् ॥२९॥ अष्टोत्तरसहस्र श्रीरामभद्रासनं

हि वा ॥ वाऽष्टोत्तरशत श्रीमद्रामभद्रासनं शुभम् ॥१३०॥ बहुन्यन्यानि शतशः संति लघ्वासनानि हि
॥ तेषां मध्यादेकमेवासनं संस्थाप्य चित्रितम् ॥३१॥ पीठोपरि वस्त्रकृतं पत्रादिष्वपि वा कृतम् ॥ आसनो-
परि जानक्या राघवादीन्यवेशयेत् ॥३२॥ आसने सर्वतोभद्रमध्ये पद्मोपरि न्यसेत् ॥ सीतया राघवं र-
म्यवर सिंहासनस्थितम् ॥३३॥ रामस्य पृष्ठभागे च लक्ष्मणं स्थापये ततः ॥ रामस्य दक्षिणे पार्श्वे भरतं
विन्यसेच्छुभम् ॥३४॥ रामस्य वामपार्श्वे हि शत्रुघ्नं विन्यसेच्छुभम् ॥ पुरतो रामचंद्रस्य जांबवंतं तु
सं न्यसेत् ॥३५॥ पूज्य पूजकयोर्मध्ये प्राक् दिग्ज्ञेयार्चनेत्विह ॥ सर्वशास्त्रेष्वेवमेव निर्णयः कथ्यते बु-
धैः ॥३६॥ लक्ष्मणस्य करे देयं चामरं रुक्ममंडितम् ॥३७॥ शत्रुघ्नस्य करे देयं व्यजनं चित्रितं शुभ
म् ॥ हनूमंतः करे देयं रामस्य पादुका द्वयम् ॥३८॥ सुग्रीवस्य करे देयं जलपात्रं मनोहरम् ॥ करे बि-
भीषणस्यापि देयं मुकुरमुत्तमम् ॥३९॥ देयं तांबूलपात्रं च वालिनंदन सत्करे ॥ जांबवंतः करे देयो
वस्त्रकोशो महत्तमः ॥१४०॥ नवायतेनमेवं हि स्थापयेद्राघवस्य च ॥ अथवा पंचायतनं स्थापयेदास-
नोपरि ॥४१॥ सीतया रामचंद्रं च मध्ये पृष्ठे तु लक्ष्मणम् ॥ भरतं सव्यपार्श्वे च शत्रुघ्नं वामपार्श्वके ॥४२॥
पुरतो वायुपुत्रं च पूर्वोक्तैरुपचारकैः ॥ एवं संस्थापयेद्भक्त्या राम भद्रासनोपरि ॥४३॥ अथवा सीतया-
रामं मध्ये स्थाप्य ततः परम् ॥ रामस्य पृष्ठे सौमित्रिं रामाग्रे वायुनंदनम् ॥४४॥ स्थाप्यैव पूजयेद्भक्त्या
रामं धृतशरासनम् ॥ अथवा सीतया रामं लक्ष्मणं परिपूजयेत् ॥४५॥ सीताऽनुजाविना पूजा रामस्यैक-
स्य नाचरेत् ॥ कृता चेद्विघ्नकर्त्रीसा भवेदत्र न संशयः ॥४६॥ नवायतन पूजा सा श्रेष्ठा ज्ञेया शुभप्र-

दा ॥ या पंचायतनि पूजा ज्ञेया सा मध्यमात्र हि ॥४७॥ त्रि दैवत्या तु या पूजा कनिष्ठा सा निग-
द्यते ॥ अतिकनिष्ठा पूजा सा द्वि दैवत्या स्मृतात्र हि ॥४८॥ कोदंडं वामहस्ते च तूणिरं वामपार्श्वके ॥
निजनामांकितं बाणं दधानं दक्षिणे करे ॥४९॥ एवं श्रीराघवं स्थाप्य ततः पूजां समारभेत् ॥ आत्मनो वा-
मभागे च जलकुंभं निधाय हि ॥१५०॥ आत्मनो दक्षिणेभागे पूजा पात्रं निवेशयत् ॥ आत्मनः पुरतः पा-
त्रं स्थापयेद्विस्तृतं वरम् ॥ ५१॥ प्राङ्मुखः समासीनो धृत पद्मासनः शुचिः ॥ मौनी धृताक्ष तुलसीमालो
निश्चल मानसः ॥५२॥ बध्दग्रंथि शिखः शुध्द वस्त्रो धृत पवित्रकः ॥५३॥ शुध्द द्वारावति मृत्कृत्तिल-
को मुद्रिकांकितः ॥ नत्वादौ गणराजं च तिथिवारादि कीर्तयेत् ॥५४॥ भूमिशुध्दिं भूतशुध्दिं न्यासौ कृ-
त्वा यथाक्रमम् ॥ प्रोक्षणी पात्रमेकं तु जलपूर्णं प्रकारयेत् ॥५५॥ दूर्वा गंधाक्षता पुष्पैस्तत्पात्रं परिपूर-
येत् ॥ प्रोक्षते ये तेन नीरेण पूजा द्रव्यं सहात्मना ॥५६॥ पाद्यार्घ्याचमनार्थं तु त्रीणि पात्राणि विन्यसे-
त् ॥ गणराजं पूजयित्वा संपूज्य वरुणं ततः ॥५७॥ पांचजन्यं पूजयित्वा प्रोक्षये तज्जलैरपि ॥ पूजा द्रव्यं
पूर्ववच्च ह्यात्मानं च भुवं तथा ॥५८॥ धेनु शंख चक्र पाक्षिराज मुद्राः प्रदर्शयेत् ॥ शैलादारुमयी लोही
लेप्या लेख्या च सैकती ॥५९॥ मनोमयी मणिमयी प्रतिमाष्टविधा स्मृता ॥ अथ ध्याये द्रामचंद्रं ससीतं
पुरतः स्थितम् ॥१६०॥ द्विभुजं धृततूणीरं चापबाण धृतायुधम् ॥ दिव्यालंकार संयुक्तं पीतकौशेय वा-
ससम् ॥६१॥ सलक्ष्मणं सशत्रुघ्नं भरतेन समन्वितम् ॥ हनुमत्सेवितपदं सिंहासन विराजितम् ॥६२॥
सीतछत्र समायुक्तं दिव्यचामर वीजितम् ॥ बिभीषण समायुक्तं सुग्रीव परिवंदितम् ॥६३॥ जांबवंत

समायुक्तमंगदेन परिष्टुतम् ॥ अयोध्यावासिनं राममेवं हृदि विचिंतयेत् ॥६४॥ सीताराम समाग-
च्छ मदग्रे त्वं स्थिरो भव ॥ गृहाण पूजां मद्दत्तां कृतमावाहनं तव ॥६५॥ हिरण्मयं रत्नयुक्तं ना-
ना चित्रविचित्रितम् ॥ सिंहासनं सवस्त्रं ते ह्यासनार्थं ददाम्यहम् ॥६६॥ चंदनागरुसंयुक्तै जलै —
स्तीर्थसमुद्भवैः ॥ पाद्यं गृहाण श्रीराम मया दत्तं प्रसीद च ॥६७॥ पुष्करादिषु तीर्थेषु गंगादिषु स-
रित्सु च ॥ यत्तोयं तन्मयाऽऽनीतं दत्तमर्घ्यं गृहाण भो ॥६८॥ सुगंधवासितं तोयं बहुतीर्थ स-
मुद्भवम् ॥ आचमनार्थमानीतं गृहाण त्वं सुरेश्वर ॥६९॥ हरिद्रा कुंकुमैर्युक्तं सुगंधद्रव्य मिश्रितम् ॥
सुगंधस्नेह संमिश्रमुद्वर्तनमथास्तु ते ॥१७०॥ कामधेनूद्भवं क्षीरं नंदिन्या दधिसुंदरम् ॥ कपिलाया घृ-
तं श्रेष्ठं मधु विंध्याद्रिसंभवम् ॥७१॥ सीतोत्पल समानाभा सीतायुक्तं मनोहरम् ॥ पंचामृतमयोनीतं
स्नानार्थं त्वं गृहाण भो ॥७२॥ गंगा च यमुना चैव गोदावरि सरस्वती ॥ नर्मदा सिंधु कावेरी शरयू
गंडकी तथा ॥७३॥ ताम्रपर्णी भीमरथी कृष्णावेणि महानदी ॥ गोमती सागरासप्त पयोष्णी भवना -
शिनि ॥७४॥ पूर्णा तापि तुंगभद्रा क्षिप्रा वेगवती तथा ॥ पिनाकि प्रवरा सिंधुफेना सार्द्ध त्रया नदाः ७५
घृतमाला कृतमाला मही निक्षेपिका तथा ॥ परुष्णी प्रेमगंगा च चित्रगंगा करा नदिः ॥७६॥ नीरा चर्मण्व-
ति वृध्दा वंजरा च पुनः पुनः ॥ सिंधुक्षीरा च वैकुंठाऽलकनंदा च दारणा ॥७७॥ इत्यादि सर्वतीर्थेषु यत्तोयं
वर्तते शुभम् ॥ तन्मयानीतमद्यात्र स्नानं कुरु रघूत्तम ॥७८॥ पुनराचमनं रम्यं सर्व तीर्थ समुद्भवम् ॥
गृहाण रघुनाथ त्वं दीयते यन्मया तव ॥७९॥ सुवर्णतंतु भिश्चित्रं पीतकौशेय संभवम् ॥ वस्त्रयुग्मं प्रदा —

स्यामि गृहाण रघुनायक ॥ १८० ॥ शुद्धहेममयं रम्यं नव तंतु समुद्भवम् ॥ ब्रह्मग्रंथि समायुक्तं ब्रह्मसूत्रं प्रगृ-
ह्यताम् ॥ ८१ ॥ मुकुटः कुण्डले रम्ये मुद्रिकाः कंकणे तथा ॥ नूपुरे रसनामालाः केयूरे रत्नमंडिते ॥ ८२ ॥ इ-
त्यादिन्परमादिव्यान्स्वर्णमाणिक्य निर्मितान् ॥ त्वदर्थं च मया नीतानालंकारान्गृहाण भो ॥ ८३ ॥ छत्रं स व्य-
जनं रम्यं चामरद्वय संयुतम् ॥ त्वदर्थं ते मयानीतं गृण्हिष्व रिपुसूदन ॥ ८४ ॥ सुगंध चदनं दिव्यं कृष्णा-
गरु विमिश्रितम् ॥ रक्तचंदन संयुक्तं गृण्हिष्व त्वं मयार्पितम् ॥ ८५ ॥ अक्षताश्च वरादिव्या मुक्ताफल वि-
निर्मिताः ॥ कस्तुर्या कुंकुमे नोक्ता गृहाण परमेश्वर ॥ ८६ ॥ माल्यादीनि सुगंधीनि मालत्या। द नि वै प्रभो ॥
मयाहृतानि पुष्पाणि गृहाण रघुनायक ॥ ८७ ॥ वनस्पति रसो धूपो गंधाढ्यो गंध उत्तमः ॥ आघ्रेयः सर्व देवा-
नां धूपं गृण्हिष्व राघव ॥ ८८ ॥ साज्यं त्रिवर्ति संयुक्तं वन्हिना योजितं मया ॥ दीपं गृहाण भो राम त्रैलोक्यं-
तिमिरापह ॥ ८९ ॥ भक्षं भक्तेन संयुक्तं स पायस घृतान्वितम् ॥ शर्करा मधु संयुक्तं नैवेद्यं प्रतिगृह्यताम्
॥ १९० ॥ आम्रादिनि सुपक्वानि फलानि विविधानि हि ॥ समर्पितानि तं राम गृण्हिष्व रघुनायक ॥ ९१ ॥ पूगी-
फल समायुक्तं नागवल्ली दलैर्युतम् ॥ जाति चतुष्टय युतं तांबूलं स्वीकुरु प्रभो ॥ ९२ ॥ हिरण्यगर्भ संभूतं
वन्हि तेजसमुद्भवम् ॥ दीयते दक्षिणार्थं ते गृण्हिष्व रघुनंदन ॥ ९३ ॥ एवं मया षोडशचोपचाराः - सवि-
स्तरं ते कथिताः शिशोऽत्र ॥ आवाहनाद्याश्च हि दक्षिणां ताः - शेषापि पूजा सकलाथ वक्ष्ये ॥ ९४ ॥ पंचवर्ति
समायुक्तं कपिलाऽऽज्य विमिश्रितम् ॥ वन्हिना योजितं रम्यं गृण्हिष्व त्वं नीराजनम् ॥ ९५ ॥ जाति चंपक
मंदारो केतकी तुलसी तथा ॥ दमनो मुनिकुंदे च ह्यनंतात्विति वै नव ॥ ९६ ॥ एभिर्नव विधैः पुष्पै र्मंत्रपुष्पा-

णि राघव ॥ मयार्पितानि गृण्हिष्व प्रसीद परमेश्वर ॥९७॥ यानि कानि च पापानि जन्मांतर कृतानि च
तानि सर्वाणि नश्यंतु प्रदक्षिणं पदे पदे ॥९८॥ उरसा शिरसा दृष्ट्या मनसा वचसा तथा ॥ पद्भ्यां करा-
भ्यां जानुभ्यां साष्टांगश्च नमोस्तु ते ॥९९॥ आवाहनं नजानामि न जानामि विसर्जनम्॥ पूजां चैव न जा-
नामि क्षम्यतां परमेश्वर ॥२००॥ मंत्रहीनंक्रियाहीनं भक्तिहीनं रघूत्तम ॥ यत्पूजितं मया देव परिपूर्ण
तदस्तु मे ॥१॥ एवं श्रीरामचंद्रस्य भक्त्या कार्यं प्रपूजनम्॥ निरंतरं तथा कार्यं नवम्यां च विशेषतः २
विष्णुदास उवाच ॥ गुरो नवविधैः पुष्पैस्त्वया पुष्पांजलिः कथम्॥ निवेदितात्र रामस्य पूजने तद्वदस्व
माम्॥३॥ त्वत्तो नानाविधाः पूजाः सुराणां च मया श्रुताः॥ पूर्वं ता सुश्रुतानेयं नवपुष्पांजलिः कदा॥४॥
रामदास उवाच ॥ सम्यक् पृष्टं त्वया शिष्य सावधान मनाः श्रुणु ॥ आसीत्पुरा द्विजवरः कावेर्या उत्तरे तटे
रामनाथपुरे कश्चित्सुंदराख्योऽति भक्तिमान्॥ तस्यासन्नव पुत्राश्च रामचिंतन तत्पराः ॥६॥ चंद्रोऽति-
चंद्रश्चंद्राभश्चंद्रास्यश्चंद्रशेखरः ॥ चंद्रांशुर्जितचंद्रश्च चंद्रचूडोऽष्टमः स्मृतः ॥७॥ रामचंद्रश्चेति नव -
ग्रहाभाश्च नव स्मृतः ॥ एकदा ते त्वयोध्यायां रामं भक्तकृपाकरम्॥८॥ द्रष्टुं ययुश्चैत्रमासे तस्थुस्ते स-
रयूतटे ॥ तावत्तत्र समायाता नानादेशांतरःस्थिताः ॥९॥ नानाजनाः कोटिशश्च नानावाहनसंस्थिताः॥
सरय्वां रामतीर्थे हि चैत्रस्नानार्थमादरात् ॥२१०॥ तेषां समागतानां हि संमर्दस्तत्र वै ह्यभूत् ॥ संम-
र्दाद्रामचंद्रस्य तेषां नाभूच्चदर्शनम् ॥११॥ तदा ते मंत्रयामासुर्नवविप्राः परस्परम्॥ कथं श्रीराघवस्या-
त्र संमर्दे दर्शनं भवेत् ॥१२॥ चेज्जातं त्वतियत्नेन तर्हि तत्किं तु दर्शनम्॥ यावत्स्वस्थेन मनसा राघ-

वो न निरीक्षितः ॥१३॥ तावत्तद्दर्शनं नैव नो तुष्टिं जनयिष्यति ॥ तदा ज्येष्ठोऽब्रवीच्चंद्रस्त्वत्रैव रामदर्शनम् ॥१४॥ वयं तीव्रेण तपसा प्राप्स्यामस्तप्यतां तपः ॥ तच्चंद्र वचनं श्रुत्वा पुनः प्रोचु द्विजोत्तमाः १५ एककाले तु सर्वेषां तपतामंतरेण हि ॥ कस्यादौ रामचंद्रः स दास्यत्यत्र प्रदर्शनम् ॥१६॥ कस्य दास्यति पश्चाच्च विदितं तद्भविष्यति ॥ कस्यास्मा सुदृढा भक्ति विदिता सा भविष्यति ॥१७॥ एवं परस्परं चोक्त्वा ते सर्वे द्विजसूनवः ॥त्यक्ताहारा वायुभक्षाश्चेकांते तत्परेण हि ॥१८॥ गत्वाऽतिदूर संमर्दा तेषुः सर्वे तपो महत् ॥ तत्सर्वं राघवो ज्ञात्वा सर्वसाक्षि जगत्प्रभुः ॥१९॥ तेषां स्वदर्शनं दातुं नवमे दिवसे मुदा ॥ मंत्रयामास श्रीरामः क्षणं चित्ते सभास्थितः ॥२२०॥ एककाले तु सर्वेषां यदि दास्यामि दर्शनम् ॥ तर्ह्येव तुष्टिस्तेषां हि भविष्यति नचेन्नहि ॥२१॥ अतोऽद्याहं करिष्यामि नवरूपाणि निश्चयात् एवं संमंत्र्य श्रीरामो लक्ष्मणं प्राह सादरम् ॥२२॥ शिबिकामानयस्वाद्य बहिर्गच्छाम्यहं मुदा ॥ तथेति रामवाक्येन शिबिका लक्ष्मणस्तदा ॥२३॥ आनयामास दूतैः स राघवाय न्यवेदयत् ॥ तदा सिंहासनाद्रामश्चोत्तिर्य सिबिका स्थितः ॥२४॥ बंधुभिर्मंत्रिभिर्यैश्च सुहृन्मित्रादिभिर्युतः ॥ बहिः शनैरयोध्याया ययौ रामो मुदान्वितः ॥२५॥ ततस्तं जनसंमर्दं समतिक्रम्य राघवः ॥ चकार नवरूपाणि आत्मनः परमेश्वरः ॥२६॥ सिबिकाः सुहृदो भ्रातॄन्दूतान्मित्रान्सवाहनान् ॥ चकार नवधा राम तदा स क्षणमात्रतः ॥२७॥ निरिक्षितुं समायातानात्मानं तान् जनानपि ॥ चकार नवधा रामस्तदद्भुतमिवा भवत् ॥२८॥ ततस्तैस्तैर्जनैर्मित्रैर्दूतैर्बंधुजनैः सह ॥ नवानां भूसुराणां हि ययावग्रे रघूत्तमः ॥२९॥ ततस्तै भूसुराः

सर्वे तदैक समये प्रभुम् ॥ आत्मनः पुरतो रामं ददृशु स्तं पृथग्पृथक् ॥२३०॥ ततस्तुष्टमनाः सर्वे प्रणेमु
रघुनंदनम् ॥ ततो रामा शिबिकाभ्यस्त्ववरुह्य पृथग्पृथक् ॥३१॥ नवरूप धराः सर्वान्विप्रानालिंग्य साद-
रम् ॥ ऊचुर्मधुरया वाचा प्रसन्न मुखपंकजाः ॥३२॥ रामा ऊचुः ॥ भो विप्रा श्रमिता यूयं युष्माकं कृत नि-
श्चयम् ॥ बुध्वा वयं पृथग्रूपौ जातास्मो नवधाद्य हि ॥३३॥ एककालेऽत्र तपतां सर्वेषां दर्शनं निजम् ॥
कस्य देयं तु पूर्वं हि पश्चात्कस्य प्रदीयताम् ॥३४॥ इति संमंत्र्य हृदये त्वद्यैव समयेन हि ॥ युष्माकं
दर्शनं दत्तं वरयध्वं वरानि तः ॥३५॥ रामाणां वचनं श्रुत्वा ते प्रोचु र्भूसुरोत्तमाः ॥ येनास्माकं भवेत्की-
र्तिः स वरो दीयतां तु नः ॥३६॥ तत्तेषां वचनं श्रुत्वा रामाः प्रोचु द्विजां पुनः ॥ युष्माकं दर्शनार्थं हि नव-
रूप धरा वयम् ॥३७॥ अथ जातो ततस्तस्माद्युष्माकं नामभिः सदा ॥ नवरामाः परां ख्यातिं गमिष्यामो
ऽवनीतले ॥३८॥ अस्माकं नव यत्किंचित्त त्प्रीयं हि भविष्यति ॥ इति तेषां तु रामाणां वाक्यं श्रुत्वा द्वि-
जोत्तमाः ॥३९॥ संतुष्टा स्ते तेदा नेमुः स्वस्वं रामं मुहुर्मुहुः ॥ तदा सर्वे जनान्रामान्लक्ष्मणान्भरतादि-
कान् ॥२४०॥ आत्मानं नवधा जातान्दृष्ट्वा विस्मयमागताः ॥ ततो रामाः शिबिकासु स्थित्वा पृष्ट्वा द्विजो-
त्तमान् ॥४१॥ परिवर्त्य ययुः सर्वे मार्गेत्वेको भवत्पुनः ॥ सर्वे जातास्त्वेक रूपा स्तदा ते विस्मयं ययुः
॥४२॥ ततो रामो बंधुभिश्च पूर्ववन्नगरीं ययौ ॥ गत्वा गेहेथ सीतायै सर्वं वृत्तं न्यवेदयत् ॥४३॥ अत-
स्ते नव विप्राणां नामभिर्जगतितले ॥ ख्याति रामा ययुस्त्वत्र नव यद्यच्च तत्प्रियम् ॥ ४४॥ यथार्का द्वा-
दश प्रोक्ता एकविंशद्गणाधिपाः ॥ रुद्रा एकादश प्रोक्ता यथाऽष्ट भैरवा स्मृताः ॥४५॥ नव दुर्गा य-

था त्वत्र तथा रामा नवस्मृताः ॥ प्रियं द्वादश सूर्याय एकादश शिव प्रियम् ॥ ४६॥ एकविंशत्प्रियं यद्वद्गणेशाया महात्मने ॥ प्रियमष्ट भैरवाय दुर्गायै तु नव प्रियम् ॥ ४७॥ यथा तथात्र रामाय नव शिष्य प्रियं सदा ॥ तस्मान्नवविधैः पुष्पैरंजलिस्तत्प्रियेरिता ॥ २४८॥ इति श्रीशतकोटि राम-चरितांतर्गत श्रीमदानंद रामायणे वाल्मीकिये मनोहरकाण्डे रामपूजाऽद्वय विस्तारो नाम तृतीयःसर्गः ॥शुभंभवतु ॥ श्रीसीतारामचंद्रार्पणमस्तु ॥

नागपूर

मार्गशीर्षवद्य रोज गुरुवार शके १८७४

ख्रिस्ताब्दः ४-१२-१९५२

॥श्रीगणेशाय नमः॥ श्रीविष्णुदास उवाच॥ स्वामिन्त्वया रामनाम्ना अष्टोत्तर सहस्रकम्॥ भद्रं मु-
क्तं तथा चाष्टोत्तरशतमनुत्तमम्॥ १॥ रामनाम्नां भद्रमुक्तं रामचंद्रं प्रपूजयेत्॥ तत्किंदृशंते तु भद्रे
लेखनीये मनोरमे॥ २॥ ते मां विस्तरतो ब्रूहि यथाहं वेद्मि तत्वतः॥ तयोर्ये ये विशेषाश्च भद्रयो स्तेऽ
पि मां वद॥ ३॥ रामदास उवाच॥ श्रुणु शिष्य प्रवक्ष्यामि भद्राणां रचनाः शुभाः॥ यथा पृष्टा त्वया मेऽद्य
रामनाम्नां मनोरमाः॥ ४॥ अष्टोत्तरशतं रामलिंगतोभद्रमुत्तमम्॥ आदौ मया विस्तरेण कथ्यते तन्नि-
शामय॥ ५॥ अत्रोपास्या राममुद्रा रुद्रश्चोपासक स्मृतः॥ श्रीरामलिंगतोभद्रमत एवोच्यते बुधैः॥ ६॥ ति-
र्यगूर्ध्वगता रेखा द्वे शते रेखयाधिके॥ तत्रादौ कृष्णपरिधिस्ततो रक्तः सितः स्मृतः॥ ७॥ ततः पीतश्च
परिधिः कोणेंदुस्त्रि पदस्मृतः॥ चंद्राग्रे शृंखला कृष्णा स्मृता द्वादशपादिका॥ ८॥ हरिता च ततो वल्लि
त्रयोविंशत्पदात्मिका॥ ततः पीता श्रुंखला च स्मृता द्वादशपादिका॥ ९॥ विंशपाद भवं भद्रं रक्तं
वापि सिता ततः॥ त्रयोदश पदा ज्ञेया लिंग षड्विंश पादजम्॥ १०॥ कृष्णं चतुः सदो मुध्र्दा नाभिर्यु-
ग्मपदःस्मृतः॥ मल स्कंधौ षड्पदजौ पार्श्वे तुर्य पदात्मके॥ ११॥ ततो रक्तश्च परिधिर्मर्यादारन्योऽ
र्क पादजः॥ ततो मुद्रा तुर्य तुर्य भूमिपादमिता स्मृता॥ १२॥ ततो मर्यादा परिधिर्लिंगमुद्रा पुनः पुनः
॥ एवं हरा नव ज्ञेया मुद्रा अष्ट प्रकीर्तिताः॥ १३॥ परिधयः षोडशैव ह्यंते लिंगोर्ध्व पार्श्वके॥ तिर्यग्भ-
द्रं नवपदैः पीतं वा हरितं क्वचित्॥ १४॥ रक्तभद्रोर्ध्वतः शेष पदानि यानि संति हि॥ यथेच्छं चित्रव-
र्णैश्च श्रृंखलार्थे नियोजयेत्॥ १५॥ मध्यलिंगस्कंधयोश्च सितौ नेत्रौ स्मृतौ शुभौ॥ पीते लिंगस्कंध-

योश्च श्रृंखले त्रि त्रि पादजे ॥१६॥ अधोमुखं हरोर्ध्वं च रक्तं भद्रं द्विषट् भवम् ॥ तिर्यग्भद्रे तु ह-
रिते स्मृतेऽष्टादश पादजे॥१७॥ततः पंक्तेरूर्ध्वभागे हरितः परिधिः स्मृतः ॥ तत ऊर्ध्वे पीतवर्णे
प्रोक्तश्च परिधिः शुभः ॥१८॥ एवं प्रोक्ता प्रथमेयं पंक्तिः सर्वत्र कारयेत् ॥ द्वितियाया विशेषोत्र व-
क्ष्यामि न पुरेरितम् ॥१९॥ सप्तमुद्रा हरा अष्ट परिधयश्चतुर्दश ॥ भद्रं रक्तं षड्वदजं शेषं सर्वंतु पू-
र्ववत् ॥२०॥ तृतीयायां ततः पंक्तौ मुद्राः पंचाथ वा रसाः ॥ परिधयो दशाज्ञेयाः भद्रं त्रिंशपदात्मकम् २१
ततः पंक्तौ चतुर्थ्यां तु त्रिंशा मुद्रा चतुष्टयम् ॥ परिधयोऽष्ट विज्ञेया भद्रं च नववेदजम् ॥२२॥ हरि-
त्पीतयोर्मध्ये हि लोहितः परिधिः स्मृतः ॥ पंचमायां ततः पंक्तौ मुद्रे द्वे शंकर स्तथा ॥२३॥ परिधयश्च च-
त्वारि भद्रं नवति पादजम् ॥ हरिद्रक्तं पीतवर्णा परीधयश्च पूर्ववत् ॥२४॥ षष्ठायां च ततः पंक्तौ मुद्रै-
का परिधि द्वयम् ॥ नववेद भवं भद्रं तिस्त्रः परिधयोऽपि च ॥२५॥ मध्येथ पूर्वतो भद्रं वेदनेत्राग्नि पाद-
जम् ॥ त्रिपदें दुः श्रृंखला च कृष्णा पंचपदामता ॥२६॥ एकादश पदा वह्नि भद्रं नवपदात्मकम् ॥ चतु
र्विंश पदावापी पीतश्च परिधिस्ततः ॥२७॥ पदेषु षाडशेष्वेव मध्ये पद्मं तथा रुचि ॥ कर्णिका पीतव-
र्णा च शेषं बुद्ध्या नियोजयेत् ॥२८॥ एतदष्टोत्तरशतं रामलिंगात्मकं स्मृतम् ॥ तत्र मुद्रास्वरूपं च
वेद वेदेदुषूच्यते ॥२९॥ राज्यकांड उत्तरार्द्धे सर्गेऽष्टादशमे पुरा ॥ उक्त मुद्रास्वरूपं च तथाप्यत्र तु
कथ्यते ॥३०॥ पंक्तयोऽर्कमिता स्तत्र सर्वा द्वादशपादजाः ॥ तासु पूर्वदिगारभ्य क्रमेणैव प्रपूरयेत् ३१
प्रथमा सप्तमी चोभे पंक्ति कृष्णे प्रपूरयेत् ॥ ऊर्ध्वाधः पंचपंचैव पंचयस्त त्क्रमं ब्रुवे ॥३२॥ पंचपंक्ति-

षुचोर्ध्वे हि प्रथमायाः प्रपूरयेत् ॥ प्रथमं चेशदिग्जं च कृष्णवर्णं नचापरम् ॥ ३३॥ तदधश्च द्वितीया-
याः प्रथमं च द्वितीयकम् ॥ चतुर्थं सप्तमं षष्ठं ह्यष्टमं नवमं तथा ॥३४॥ तथैकादशमं चापि कृष्णव-
र्णानि पूरयेत् ॥ तदधश्च तृतीयायाः चतुर्थं षष्ठ सप्तमे ॥३५॥ तथैकादशमं चापि कृष्णवर्णानि
पूरयेत् ॥ चतुर्थ्यास्तदधश्चापि प्रथमं च द्वितीयकम् ॥३६॥ चतुर्थं सप्तमं षष्ठं नवमं रुद्रसंमितम् ॥



तदधः पंचमायाश्च प्रथमं च द्वितीयकम् ॥३७॥ चतुर्थं च तथा षष्ठं नवमैकादशे तथा ॥ राजेति द्वेऽक्ष-
रे शुक्ले द्रष्टव्ये पंचपंक्तिषु ॥३८॥ पंचपंक्तिष्वधश्चाथ प्रथमायाश्च पूर्ववत् ॥ तदधश्च द्वितीयायाः
प्रथमं च द्वितीयकम् ॥३९॥ चतुर्थं सप्तमं षष्ठं नवमं दशमं तथा ॥ तथा चैव द्वादशमं कृष्णवर्णानि पू-

रयेत् ॥४०॥ तृतीयाया श्चतुर्थं च षष्ठमर्कं च सप्तमम् ॥ चतुर्थ्याः प्रथमं षष्ठं द्वितीयं च चतुर्थक-
म् ॥ ४१॥ अष्टमं नवमं चार्कं दशमं चापि पूरयेत् ॥ पंचमाया द्वितीयं च प्रथमं चचतुर्थकम् ॥ ४२ ॥
षष्ठमर्कमष्टमं च सप्तमं दशमं तथा ॥ नवमं कृष्णवर्णानि रामेति द्वेऽवलोकयत् ॥४३॥ राजारामेति
चत्वारि ह्यक्षराणि निरीक्षयेत् ॥ व्यत्ययो द्रामराजेति बुध्द्य कार्येऽक्षरे नरैः ॥४४॥ अथवा राम नामेति-
तृतीयं नाम कारयेत् ॥ विशेषं त श्रवक्ष्मामि ह्यधः पंच सुपंक्तिषु ॥ ४५॥ पंक्तेश्चतुर्थ्याः प्रथमं पदं



कृष्णेन कारयेत् ॥ नाकारस्तेन द्रष्टव्यो रामनामावलोकयेत् ॥४६॥ अ-
थवा रमा रामेति विशेषश्चोर्ध्व पंक्तिषु ॥ प्रथमा पूर्ववज्ज्ञेया द्वितीयाया
स्ततः परम् ॥ ४७॥ प्रथमं च द्वि तीयं च तृतीयं पंचमं तथा ॥ अष्टमं नवमं
षष्ठं तथैकादशमंत्वपि ॥ ४८॥ तृतीयायाः प्रथमं च रुद्रं षष्ठं च पंचमम् ॥
चतुर्थ्याः प्रथमं चैव द्वितीयं च तृतीयकम् ॥४९॥ पंचमं सप्तमं चापि
ह्यष्टमं नवमं तथा ॥ तथैकादश मं चापि कृष्णवर्णानि पूरयेत् ॥५०॥ पंच-
मायाः प्रथमं च द्वितीयं च तृ तीयकम् ॥ पंचमं सप्तमं षष्ठं ह्यष्टमं नव-
मं तथा ॥५१॥ तथैकादशमं चापि रमेति द्वेऽक्षरे सिते ॥ नामान्येतानि चत्वारि चतुःपार्श्वेषु योजयेत्
॥५२॥ लघु मुद्रान्वितं रामलिंगाख्यं भद्रमुच्यते ॥ मया शिष्याधुना तत्त्वं श्रुणुष्व स्थस्थमानसः ॥ ५३॥
तिर्यगूर्ध्वमेकपंचाशद्रेखास्तत्पदेषु च ॥ सप्त सप्त पदा द्वौ द्वौ परिधिः पीतवर्णकौ ॥५४॥ कार्यौ तत्र को-

-णदेशेष्विंदुस्त्रिपद शुक्लकः ॥ श्रृंखला तु पदा कृष्णा त्रयोदशपदा लता ॥ ५५॥ हरितेशोव सुपदः
कृष्णवर्णः प्रकारयेत् ॥ त्रिपदं लोहितं ज्ञेयं भद्र वल्यंतिक स्थितम् ॥ ५६॥ षष्ठि पादात्मिका मुद्रा त-
त्रेंद्र यम दिक् स्थिते ॥ त्यक्त्वा पंक्तिकोणकोष्ठान् सिंधु सिंधु ४ मितान्तथा ॥ ५७॥ सिंध्व ४ र्तु ६ पंक्ति द्वे
सप्तमायाः पंक्ते पंदत्वधः ॥ मषिणा पूरयेत्तत्र भाति रामेति सप्तमम् ॥ ५८॥ तत्रादावग्नि मुद्रास्तत्सी-
मा परिधयस्तथा ॥ रक्तालिंग द्वयं भद्रे तथा लिंगोपरि स्थितम् ॥ ५९ ॥ पद द्वयं पीतवर्णं वीथीवल्या
नियोजयेत् ॥ द्वितीयेत्वेक मुद्रा द्वौ परिधि द्वौ शिवौ मतौ ॥ ६०॥ भद्रं नवपदं लिंगं वल्योर्मध्ये रसात्म-
कम् ॥ भद्रं पीतं लिंगोपरि रक्तं तुर्यपदात्मकम् ॥ ६१॥ लिंगस्कंध पद द्वे द्वे हरिते वीथिकापि च ॥ भ-
द्राणि त्रिणि ज्ञेयानि पीतं द्वे लोहितेत्र हि ॥ ६२॥ ततोऽतः सर्वतोभद्रं कार्यं तच्च तु वापि वा ॥ चतु-



र्विंशपदा भद्रमंक ९ कोष्ठं लतैशिका ॥ ६३॥ त्रिपदोऽब्जः पंचपदा
श्रृंखला परिधिस्ततः ॥ मध्ये पद्मं रक्तवर्णं रचयेद्वा विचित्रितम् ॥ ६४
पीत शुक्ल रक्त कृष्णा अंते परि-धयो मताः ॥ एतच्छोडश मुद्रा-
भि रामलिंगाख्य भद्रकम् ॥ ६५॥ सदानंदमयं राम चिज्जोतिष म-
नामयम् ॥ सर्वावभासकं नित्यं स्वात्मानंद समुस्महे ॥ ६६॥ चंद्र-
कलां १६ रामलिंगतोभद्रं यद्विक ल्पितम् ॥ निर्विचारं वास्तितास्मि
न्विवेक स्तं विविच्यते ॥ ६७॥ कल्पितः स नरो पाधा रामलिंगयुतः स्मृतः ॥ रमणाद्राम इत्युक्तो

योगिगम्यः परंमहः ॥६८॥ लीयंते यत्र भूतानि गच्छंति य तः पुनः ॥ तेन लिंगं परं व्योमेऽत्युक्तं ब्रह्मविदूत्तमैः ॥६९॥ लिंग्यते चिंत्यते येन भावेन भगवान् शिव ॥ लिंगरूपी स रामेति लिंग चेति द्विनामकः ॥७०॥ बहूनि संति नामानि रामेशस्य महात्मनः ॥ रजांसि गणयेत्कोऽपि भूमे नैवाखिलेशि तुः ॥७१॥ तास्मिन्यत्सर्वतोभद्रं हृदयं तत्प्रकीर्तितः॥ तत्र पद्ममष्टपत्रं सकेसर सुकर्णिकम् ७२ तत्स्थानं रामलिंगस्य ध्यानार्थं परिकल्पितम् ॥७३॥ चिज्जोतिः परमात्मायं स्वमाया वश तां गतः ॥ धर्मार्थ काम मुक्त्यर्थ सृष्ट्योपाधिं प्रविष्टवान् ॥७४॥ तस्य चैतन्यचंद्रस्य षोडशेमाः कलाः पराः॥ चिद्व्याप्ताश्च द्वारभूता घटादिन्विषयानिह ॥७५॥ प्रकाशयंति गृण्हंति त्यजंति च स्वभावतः ॥ बुद्धिरेकात्पतंति सा सन्निकृष्टा शिवात्मनः ॥७६॥ अतो ज्ञान प्रधाना सा तत्ज्ञानं चक्षुरादिषु ॥ प्रसृतं रूप शब्दादिन् जानाति स विशेषतः ॥७७॥ चतुर्द्धा वृत्तिभेदेन प्रोक्ता तत्वार्थ दर्शिभिः ॥ प्रयोजनं न तेनात्र प्रकृतिं तद्धि विच्यते ॥७८॥ क्रियाप्रधानः प्राणश्च पंचधा सौ स्ववृत्तितः ॥ प्राणापानौ तथा व्यानः समानोदानकाविति ॥७९॥ वागादि कर्मेंद्रियेषु क्रिया प्राणाश्रयामता ॥ श्रवणं नयनं घ्राणं त्वग्रसनेंद्रियं तथा ॥८०॥ पंचमानि चेंद्रियाणि ज्ञानद्वाराणि वै विदुः ॥ वाक्याणि पादपयूपस्थीश्च कर्मेंद्रियाणि च ॥८१॥ एवं षोडशसंख्यानं कलानामुच्यते बुधैः ॥ तासु सर्वासु चैतन्यं रामनामेति विश्रुतम् ॥८२॥ प्रविष्टं दीप्यतेशश्वत्तेन विश्वं विचेष्टते ॥ अनादि संसारतरुः कर्ममूल फलात्मकः ॥८३॥ देहाभिमानिनो जीवाः फलभोगाय पक्षिणः ॥ यथाकर्म सुखं दुःखं वादंति स्वेश्वरार्पितम् ॥८४॥

काश्चिज्जन्मसहस्रेषु ज्ञानवान् जायते तदा ॥ तदात्मस्थं रामरूपं ज्ञात्वा मोक्षी भवेत्फलम् ॥८५॥
इंद्रियाणि पराण्येवं तेभ्यो बुद्धिः परामता ॥ तत्परः परमात्मा सर्वसाक्षि विनिश्चितः ॥८६॥ द्वौसु पर्णा-
वेक वृक्षं समाश्रित्य स्थितौ तयोः ॥ एकस्तरु फलं स्वादु खादत्यन्यो विचक्षते ॥८७॥ त्रिषु धामसु य-
द्भोग्यं भोक्ता भोगश्च यद्भवेत् ॥ तेभ्यो विलक्षणः साक्षि त्याह चाथर्वणि श्रुतिः ॥८८॥ यच्चास्तिह य-
त्स्फुरति यच्चानंद यति स्वयम् ॥ यास्मिंश्च महसि प्रख्ये सर्वे वेदाः समन्विताः ॥८९॥ विषयादिधि पर्य-
तं जडं सर्व मनात्मकम् ॥ यस्यार्थेषु प्रियं चैतत्सरामात्मा महान्प्रियः ॥९०॥ सर्वेषां प्राणिनां स्वात्मा प-
रप्रेमास्पदोमतः ॥ स तु सर्वत्रैक एव नेहना नास्ति सच्छुतिः ॥९१॥ चिद्रामं हृद्गतं ज्ञात्वा योसौ सोहमि-
तीरया ॥ आचार्य दत्तया सम्यग्परमोपासनं गतः ॥९२॥ आवृत्ति रसकृन्न्यायात्फलीभूते परात्मनि ॥
बोधे दार्ढ्ये पुनस्तस्य न कार्य विद्यदेभवे ॥९३॥ सर्वेऽप्युपायाः शास्त्रेषु यज्ज्ञानार्थे प्रयोजिताः ॥ स चे-
द्वेशिक शब्देन हृद्याविः किं पतंततः ॥९४॥ दृष्टेऽस्मिन् रचिते भद्रे यद्येवं प्रविचार्यते ॥ तदा चित्ते परा
प्रीतिर्जायते विदुषां स ताम् ॥९५॥ नमो रामाय शांताय लिंगरूप धराय च ॥ शंभवे विष्णवे तुभ्यं शंक-
राय शिवात्मने ॥९६॥ अथवाद्ये स्थले भद्रं कार्यं नवपदात्मकम् ॥ तीर्यभद्र षड्दजं रक्तपीतेत्रते स्मृतः
॥९७॥ स्थले द्वितीये भद्रं हि रक्तं विंशपदात्मकम् ॥ तीर्यग्भद्रं नवपदैः पीतं चित्रे तु श्रृंखले ॥९८॥
द्वि द्वि पादात्मिके कार्ये शेषं सर्व हि पूर्ववत् ॥ रामतोभद्रमेतच्च केवलं रामतुष्टिदम् ॥९९॥ नत्वेशा-
नं राममानंदकंदं - मायातीतं निर्विकारं निरीहम् ॥ विद्याधीशं षड्गुणैकाश्रयं च - वक्ष्ये भद्रं रामनामां-

कितं यत् ॥१००॥ प्रागुत्तरा द्विशतमंक १ नवाधिकाश्च २९९ - रेखाः समाः सुपरिकल्प्य पदेषु तासां ॥ षट् षट् प
दांत उपरींदु १ शकुंतु २ संख्या २१ - पीताश्च ते परिधयः परिकल्पनीयः ॥ १ ॥ कोणाब्ज श्रृंखल लताः सितकृष्णनीलाः
भद्राणि भिन्नरचनान्यरुणानितानि ॥ मुद्राश्च तत्परिधयश्च सिताश्च रक्ताः - संपूरिताश्च जनयंति रतिं मुनी-
नाम् ॥ २ ॥ मुद्राविषष्ठिपद संवलिता च तत्र - पंक्ति विहाय यम वासव दिक् तनस्थे ॥ प्रत्येक कोणकपदा-
नि चतुष्टयानि - पंक्ति द्वयं रसतुरीयकमंजनाभम् ॥३॥ कृत्वा पदैकमधतस्त्वथ सप्तमाया- स्तेनातिसुंदर-
तरं परिभाति सारम् ॥ रामेति द्व्यक्षरमुमेशजपं निधानं - प्राण प्रयाणसमये जपतां महोदम् ॥ ४॥ रचयेदादितः
सम्यक् यावद्विंशस्थलावधि ॥ सर्वत्र सममुद्रासु मध्येषु परिधि द्वयम् ॥५॥ आदौ तत्वमिता मुद्रा स्त्रयोविंश
मिता स्ततः ॥ द्वाविंशैक विंश विंश त्रिषट् सप्तदशापरः ॥६॥ द्व्यष्ट चतुर्दश त्रयोदश द्वादश रुद्रकाः ॥ नवा-
ष्ट सप्त षट् तुर्य त्रिद्व्येकाश्चाप्यनुक्रमात् ॥७॥ भद्रं षोडशपादं च विंश त्रिंशतषडाग्निकम् ३६ ॥ चंद्रकलं १६
तत्वामितं २५ त्रिंशाक्षि सिंधु ४२ विंशकम् ॥८॥ तत्वं २५ षडग्नि ३६ नेत्रांबुनिधि ४२ विंश नभोग्निकम्
३० ॥ षट्त्रिंश ३६ षोडशपद तत्वं त्रिंशद्विसिंधुकम् ४२ ॥९॥ विंशकोष्ठ क्रमादेवं भवेत्पार्श्व चतुष्टये ॥
एकविंशपदे भद्रमंक कोष्ठं च वापिका ॥११०॥ चतुर्विंशपदा कार्या परिध्यंतोऽरुणांबुजम् ॥ भद्रोपरि यत्र
यत्र पदान्युर्वरितानि च ॥११॥ तिर्यग्भद्र श्रृंखलार्थे यथेच्छं पूरयेद्धिया ॥ सर्वत्र श्रृंखला पंचपदजैका-
दशीलता ॥१२॥ त्रिपदश्च शशी ज्ञेयः परिधयो बहिः क्रमात् ॥ कृष्ण रक्त शुक्ल पीतश्चत्वारश्च समंततः
॥१३॥ एतदष्टोत्तरदशशतं १००८ राम सुभद्रकम् ॥ अथवा मनु १४ रेखानां वृद्धिं कृत्वा प्रकल्पयेत् ॥ १४ ॥

परिधिस्तत्र लिंगानामेकविंशाधिकं शतम् ॥ वाप्यो भद्राणि चंद्रादि चतुःपार्श्वेषु योजयेत् ॥ १५॥ चतुर्विं-
शपदं लिंगं वाप्यष्टा दशपादिका॥ द्वे भद्रे नव नव पदे द्व्यष्ट द्व्यष्ट पदानि षट् ॥१६॥ त्रिंशल्लिंगानि वाप्य-
स्तु सप्तत्रिंशन्मिता मताः॥ एकस्मिन्पार्श्वके लिंगाधिक्ये भद्रे प्रकल्पयेत्॥१७॥ द्व्यष्ट द्व्यष्ट पदे शेषाण्यं-
क कोष्ठानि योजयेत्॥ लिंग कृष्णं सिता वाप्यः शेषं सर्वं पुरोदितम् ॥१८॥ पदानि शेषभूतानि यत्र य-
त्रेहतानि च ॥ भद्र श्रृंखल योग्यानि तदर्थे विनियोजयेत्॥१९॥ कृष्ण रक्त शुक्ल पीता अंते परिधयोमताः
एवं लिंगयुतं रामतोभद्रं परिकीर्तितम् ॥१२०॥ अनेन देवौ सुप्रीतौ रामेशौ भवतास्त्विह॥ रामस्य पूजना-
र्थे हि त्विदं प्रोक्तं वरासनम्॥२१॥ आचार्यान्ज्ञानसंपन्नान्नत्वा तेषां प्रसादतः॥ वक्ष्येहं रामतोभद्र कृ-
तिं च शंभुसंयुताम्॥२२॥ प्रकृतिं रामतोभद्रं विकृतिं लिंगसंयुता ॥अन्ये विकारा संज्ञेया ह्येवं कृति त्रि-
धोच्यते ॥२३॥ तिर्यगूर्ध्व मगन्यधिकाः शतरेखाः प्रकल्पयेत्॥ तत्पदेषु परिधयः षट् षडंते षडैव तु २४
पीताः कोणेषु त्रिपदः शुक्लेंदुः श्रृंखला सिता ॥ पंचपदैकादशिका वल्लरी भद्रकं क्रमात् ॥२५॥ सिंधु षो-
डश सूर्य१२ तु ६ युग ४ षोडश कोष्टकम्॥ कल्पयेत्षष्ठि कोष्ठेषु राममुद्रां हि पूर्ववत् ॥२६॥ अष्ट षट् च
पंच सिंधु ४ वन्हिं ३ चंद्र १ मिताः शुभाः॥ तासां सीमा परिधय स्त्वेकाधिकाः सुलोहिताः॥२७॥ रजनीश
१ नेत्र सिंधु पंक्तीषु मध्यमास्त्रयः॥ मर्यादाख्या परिधयो भवंति द्विगुणी कृता ॥२८॥ अंतिमे तु परिध्यं-
तः सर्वतोभद्रकं लिखेत्॥ विशेषस्तत्र वापि तु चतुर्विंश पदात्मिका॥२९॥ भद्रं नवपदं पद्मं परिध्यंतः सुलो-
हितम्॥ पीता तत्कर्णिका कार्या अंते परिधयोऽपि च ॥१३०॥ पीत शुक्ल रक्त कृष्णा यत्र यत्र पदानि च

॥ भद्रोर्ध्व शेषभूतानि तानि युक्त्या प्रपूरयेत् ॥३१॥ तिर्यग्भद्र श्रृंखलाद्यैः पीत चित्रे च ते स्मृते ॥ एत
दष्टोत्तरशतं रामतोभद्रभीरितम् ॥३२॥ एकं संसार शून्यं सकल सुखनिधिं सच्चिदानंदकंदं- यन्माया
योगेन विश्वात्मकमिदममलं ब्रह्म विष्णवीशसंज्ञम् ॥ सृष्टि स्थित्यंत हेतु निगमकविनुतं सर्व भूतात्म
भूतं- सर्वज्ञं सर्वशक्तीरणहरममृतं तन्महोभावयेहम् ॥३३॥ नत्वा श्रीदेशिकेंद्रस्य पादाब्ज अमरप्रद-
म् ॥ वक्ष्य अध्यात्मिकिं सूक्तिं स तां चित्तमत्कृतिम् ॥३४॥ पशूनां नरवरोदि सर्वमर्थाय कल्पते ॥ मृ-
तस्य नरदेहस्य स्पृष्टिर्दोषावहोदिता ॥३५॥ एकमेवामुनासाध्यं ज्ञानं साध्या स्वरूपदम् ॥ तद्विना तु
पशुभ्यश्च नरो हीनतरो मतः ॥३६॥ प्रतिभावान्पुण्यतमः श्रद्धावान्गुर्वधोक्षजे ॥ कोटिष्वेकः स्वयं साक्षा-
न्नरो नारायणो भवेत् ॥३७॥ केन चिद्रामतो भद्रं मुद्रा षष्ठिपदात्मिका ॥ रामांकिता च संक्लृप्ते विविच्ये-
ते च ते उभे ॥३८॥ लोकाः सप्त यथांडेऽस्मिन् तथा तत्र प्रकल्पिताः ॥ तेनेयं रचनातुल्या ज्ञात्वा हृ-
त्स्थमुदीर्यते ॥३९॥ ब्रह्मांडं रामतोभद्रं मुद्रा भूतानि संमताः ॥ रामचैतन्ययुक्तानि संमतानि तु सूरि-
भिः ॥१४०॥ तस्यांशान्मुद्रितं वस्तु सामुद्रेति निगद्यते ॥ मुद्रितं चिन्हितं चाथ पिहितं द्व्यर्थ तो भवे ॥४१॥
तद्वत्सर्वासु चैतासु ब्रह्म मुद्रित मुद्रिते ॥ तथाप्यासां सबाह्य तश्चैतन्यं संप्रकाशते ॥४२॥ आच्छादितोऽपि
कलशे स्फाटिकेंतर्बहिः किल ॥ दीपः प्रकाशेत कस्तं लोपयेच्चितयेष्यते ॥४३॥ मूषासिक्तं ताम्ररसं त
दाकारं प्रपद्यते ॥ तथा ब्रह्मनिराकारं मुद्राकारं विभासते ॥४४॥ पुरश्चक्रे प्रभुः सर्वाः पुरः पुरुष आविश-
त् ॥ इत्युक्तं कण्वशाखायामन्यत्रापि हि पठ्यते ॥४५॥ एकोवशि सर्वभूतांतरात्मेति श्रुतेः सर्ववचः ॥

एको देवः सर्वभूतेष्विती चैवापरा श्रुतिः ॥ ४६ ॥ परः सृष्टाः परेशेन नैव ताभि स्तुतोषसः ॥ सृष्ट्वेमां मानुषिं मुद्रां परंतोषमवापसः ॥ ४७ ॥ देवताश्चान्न भुक्त्यर्थं दृष्ट्वे मां पौरुषि तनुम् ॥ हर्षादाहुश्च सुकृतं बतेति श्रूयते स्फुटम् ॥ ४८ ॥ पुरुषत्वेवा विस्तरात्मात्मेत्याह श्रुतिस्वयम् ॥ पुरा सृष्टैः सर्वभूतैरतुष्ट हृदय स्वराट् ॥ ४९ ॥ ब्रह्मावलोकधिषणं नरं दृष्ट्वा मुदं गतः ॥ इत्यस्माभि र्विष्णुदास श्रूयते भगवद्वचः ॥ १५० ॥ मुदं करोति देवस्य द्रावये दुःखपातके ॥ इति मुद्रा निरुक्तिश्च मंत्रशास्त्रेऽपि श्रूयते ॥ ५१ ॥ अतः सर्वेषु देवेषु सत्सुपं ग्रहणं कृतम् ॥ स्वर्गापवर्गयोश्चैषोऽधिकारोन्नचेतरे ॥ ५२ ॥ लोके प्रसिद्धिर्यः कश्चिद्राजमुद्रांकिता नरः ॥ अधिकारीति मन्यंते पूजयंत्यादरादिभिः ॥ ५३ ॥ तथा नयांकितो जीवोधिकारी शास्त्रभूमिषु ॥ नानाभिर्योनिभिर्ज्ञातुं शक्यते स्वात्मनः पदम् ॥ ५४ ॥ तस्मिन् श्चा नरोपाधौ पदानि षष्टि संति हि ॥ तानि संक्षेपतः सम्यग्प्रदर्शत्येव बुद्धये ॥ ५५ ॥ अविद्या कामकर्माणि १ भोक्तृ १ भोगौ १ सुषुप्तिकम् ॥ षट्पदानि तु ज्ञेयानि देहकारणसंज्ञके ॥ ५६ ॥ तमोऽज्ञानमविद्येति शब्दा एकार्थ वाचि नः अता गुणाग्रहोनात्र दृश्यते षट्सु भो द्विज ॥ ५७ ॥ लिंगे पुर्येऽष्टके विद्या काम कर्म ग्रहः स्मृतः ॥ तथाप्यत्र तु हेतुत्वात्रयाणा ग्रहणं कृतम् ॥ ५८ ॥ कार्याभावेऽप्यवस्थानात्कारणे कारणात्मना ॥ कामश्च कर्मणश्चात्र विद्यते सूक्ष्मरूपताम् ॥ ५९ ॥ अविद्याया मुख्यतात्र विद्यते कारणात्मनि ॥ वस्तुतस्तु न कामोऽत्र कामना वा श्रुतेर्मतम् ॥ १६० ॥ अष्टत्रिंशत्पदानिह विद्यंते सूक्ष्मदेहके ॥ दशेंद्रियाणि पंचैव प्राणा बुद्धिर्मनस्त्विति ॥ ६१ ॥ सप्तदशात्मकं लिंगं प्रसिद्धं शास्त्रसंमितम् ॥ पंचविषयग्रहणं पंचकर्म क्रियास्तथा

पंचसं प्राणव्यापारा संकल्पो निश्चयस्त्विति॥सप्तदशाश्च वैध माः प्रसिद्धदाः शास्त्रसंमताः ॥६३॥
॥६२॥स्वप्नाभिमानिनौ भोगो रजश्चति-चतुष्टयम्॥ देवानामिंद्रियाणां च स्थानाभावे प्रवृत्तितः॥६४॥
स्थूलदेहे षोडशैव पदानि संमतानि हि॥गणः सप्तदशास्तेषामपान व्यानयोः पदे॥६५॥पायु त्वग्स्थानयो-
र्ज्ञेये वाचो रसनकेतने ॥ प्राणश्च मनसश्चापि बुद्धिस्थाने पदं त्विति ॥६६॥पदानि द्वादशेमानि भोक्तृ भो-
गौ तथा गुणः॥अवस्था जागृतिश्चेति कथितानि मनीषिभिः॥६७॥मुद्रामेतादृशीं प्राप्य वेद चेदात्म चित्प-
दम्॥तस्य जन्म कृतार्थस्यान्महतीनष्टिरन्यथा॥६८॥मुद्रारूपं विविच्यैवं यन्नाम्ना सांकितेति च॥उक्तं
तदधुना किंचित्संक्षेपेण निरुच्यते॥६९॥रामेति लोकरमणाद्रमंते योगिनोऽमले॥परानंद्रपदे नित्यं ते-
न राम इतीर्यते ॥१७०॥रसेनैवामुनासर्वे जीवा जीवंति नान्यथा ॥ इमं रसमयं लब्ध्वा मवंत्यानंदिनोखिलाः
॥७१॥विशतायेन विश्वेषु सर्वं चेतयते जगत्॥ नं तं चेतयते कश्चित्स राम इति कीर्त्यते ॥७२॥स ता यैना-
खिलं विश्वं स देवेति प्रतीयते ॥असत्सत्ताप्रद साक्षाद्राम इत्यभिधीयते॥७३॥ यथा प्रसिद्धं रामेति स
ब्रह्मह्यभिधानकम्॥ तथा लीयं चेति नाम रूपं च परमात्मनः॥७४॥ लीयंते यत्र भूतानि निर्गच्छंति यतः
पुनः॥ तेन लिंगं परं व्योम निष्कलः परमः शिवः॥७५॥ इति शास्त्रविदां वाणी श्रूयते तत्वदर्शिनाम्॥ अतः
सर्वाणि नामानि रूपाणि चांतरात्मनः॥७६॥ संति तेन शब्दभेदे रूपभेदेऽपि सर्वथा॥ तत्वतो नैवभेदेस्तिह्य-
र्थस्यैकस्य वस्तुनः॥७७॥स ब्रह्म स शिवश्चाथ स हरिः स सुरेश्वरः॥सो क्षरः परमश्चैव स स्वराडिति वेद-
वाक्॥७८॥यस्ये मे सच्चिदानंदाः स व्याप्ताः सर्ववस्तुषुः॥ तेनास्ति च प्रियं भाति वस्तुमात्रं प्रदृश्यते ७९
आम्नायेषु च सर्वेषु रामब्रह्मात्मकीर्तनम्॥ आदि मध्यावसानेषु श्रूयते गुर्वनुग्रहात्॥१८०॥ ऐतरेयक आ-

त्मा वा इदमेकः पुराजने ॥आसीतेनैव लोकानां पालानां सृष्टिरिच्छता ॥८१॥कृतार्थ सर्व देवानामन्नभु-
क्त्यर्थमिप्सितम् ॥ तदावायतनं चान्नं सृष्ट्वंतेभ्यस्ततः स्वयम् ॥८२॥ विचार्य स्वीय स्वामित्वं सीमाद्धारा प्रवि-
ष्टवान् ॥ तत्रात्मानं ब्रह्मततं दृष्ट्वैवापेंद्रतां किल ॥८३॥कोऽयमात्मेति संप्रश्ने येन पश्यंति जिघ्रति ॥ इ-
त्यादिभिर्विनिर्णितं यदेतद्धृदयादिभिः ॥८४॥ प्रज्ञानस्यास्य नामानि चोक्त्वा तत्सर्वता समा ॥ एष ब्रह्मे-
त्यादि शब्दैर्दर्शिता चाखिलं जगत् ॥८५॥ प्रज्ञानेत्रं च प्रज्ञाने प्रतिष्ठं चेत्यनेन हि ॥ प्रज्ञानं ब्रह्म श्रुत्यां
ते त्रिकालेष्विति दर्शितम् ॥८६॥ तद्धाम सच्चिदानंदघनानंत न संशयः ॥ तैत्तरीक शाखायां ब्रह्मणो
लक्षणं पुरा ॥८७॥ सत्यं ज्ञानमनंतं संकीर्त्य वेद गुहाहितम् ॥ यश्चासावश्नुते कामान्सर्वान्युगपदेन हि
॥८८॥ फलं ज्ञानस्य चोक्त्वाथ तस्माद्ब्रह्मात्मनः किल ॥ क्रमोत्पत्तिर्हि भूतानां कोशपंचक वेदनम् ८९
तत्फलं तदनात्मत्वं संप्रदर्श्यांतरत्वतः ॥ पुच्छं ब्रह्मेति निर्णीय तदसत्सत्प्रतीतितः ॥१९०॥ असत्सन्भव-
तीत्येवं स कीर्त्यैच ततः परम् ॥ का मयि तृत देवेह स्वात्मानं जगदात्मना ॥९१॥ कृत्वा तस्मिन्प्रविष्टेव
सच्च त्यच्चा भवत्किल ॥ अपान प्राणयोश्चेष्टा यस्यास्तित्वे प्रजायते ॥९२॥ आत्मैव रस एवैष आनंद
यति चाखिलान् ॥ भयहेतुस्त देवेह वातादिनां प्रदर्शितम् ॥९३॥ मानुषारभ्य ब्रह्माता आनंदाये शतो-
त्तराः ॥ बिंदवस्ते परं ब्रह्मानंदस्येति विनिश्चितम् ॥९४॥ स यश्चायं नरोपाधावादित्ये यश्च वर्तते ॥
स एक इतिज्ञातारं पापपुण्ये कृताकृते ॥९५॥ न संतापयतस्त्वेवं सम्यग्सर्व प्रकीर्तितम् ॥ यद्ब्रह्ममहि-
मापेक्ष्य तद्धामेति न संशयः ॥९६॥ छांदोग्योऽपि स देवेति ब्रह्मोपक्रम्य ब्रह्मणः ॥ तेजोबन्नादिका सृ-

ष्टिः सन्मूलासात्स्थिति र्हृतिः ॥९७॥ जीवात्मना प्रवेशश्च व्याकृतिर्नाम रूपयोः॥ श्वेतकेतोस्त्वंपद-स्य तत्पदेनैक्यतापि च ॥९८॥ सदसंभावनायां च सद्भावे च बहूक्तिता ॥ तदज्ञाने गुरोर्ज्ञानं ज्ञाना-न्मोक्षो पुनर्भवः ॥९९॥ सत्य ब्रह्माभिसंधस्येत्येवं सद्ब्रह्मकीर्तितम्॥ तद्ब्रह्मेति परब्रह्म सृष्टिस्थित्यं-तहेतुकम्॥२००॥ अन्यस्यामपि शाखायां प्रश्न प्रत्युक्तितः स्फुटम्॥ मनः प्राणेंद्रियाणां यन्मनः प्रा-णेंद्रियं हि सत्॥१॥ पूर्वेषामनु भूते सत् विदिता विदितात्परम्॥ विषयो नेंद्रियादीनामित्युक्त्वा त-स्य शोधनम्॥२॥ विद्यैव नान्यन्मानुष्यं प्राप्य जन्म न वेदचेत्॥ विनष्टिर्महति तस्य चेति प्रोक्तं त-तः परम्॥३॥ सर्वशक्ति सर्ववेतृ देवानां जयकारणम्॥ तदज्ञानं च देवानां गुरोर्ज्ञानमुपास्तिता॥४॥ अ-ध्यात्माधि देवभिदाविद्यासाधनमेवच॥ ब्रह्मज्ञानेन पापानां हानि स्तत्प्राप्तिरित्ययम्॥५॥ ब्रह्मणो महिमा श्रुत्या कीर्तितो व्यासतः स्वयम्॥ तद्ब्रह्मेति गुरोर्ज्ञेयं नान्यथा ग्रंथ कोटिभिः॥६॥ मुंडकेऽपि पराविद्या वि-षयौ ब्रह्म ब्रह्मणः॥ सृष्टिश्चानेक दृष्टांतैरुक्ता तस्मिंश्च संस्थिता॥७॥ लयश्चापि हि तत्रैव विश्वं सर्वं हि तन्मय॥ तारेण धनुषावेध्यं लक्ष्य आत्मार्पणं तथा॥८॥ महिमातिशयस्तस्य तद्भासाभात्यशेषकम्॥ अगोचरं च सर्वेषां ध्यायमानोनुपश्यतिम्॥९॥ वेदाहितं गुहायां योऽविद्याग्रंथिभिनातिसः॥ कृपयान्विणु तैर्ब्रह्म यं कचन सुसाधकम्॥२१०॥ तेनैव लभ्यते साक्षान्नान्यथा यत्नतोऽपि हि॥ अथवाऽयं परेशानं प्रा-प्तुमिच्छति साधकः॥११॥ तेनैव हेतुना लभ्यो नान्यथा साधनांतरैः॥ बलहीनादिभिर्नेदं लभ्यते तैऽस्तु लभ्यते॥१२॥ संन्यासयोगतः सत्वं शुद्धं येषां विचारतः॥ ते परां तेन कालेन परिमुच्यंति नान्यथा १३

यथा नद्यः समुद्रे स्तं गच्छंति नामरूपतः ॥ तथा विद्वान्कला देव प्रतिष्ठायां च संक्षये ॥ १४॥ प्रारब्ध
कर्मणां साक्षा मोक्षमेत्य पुनर्भवम् ॥ यो वेद परमं ब्रह्म स ब्रह्म भवतीति च ॥१५॥ सर्वं समुदितं यस्मा
तद्धाम ब्रह्मचिद्धनम् ॥ पूर्णमदः पूर्णमिति कंडिकायां समास तः ॥ १६॥ आदि मध्यावसानेषु पूर्णं ब्रह्मै-
व निश्चितम् ॥ पूर्णं पारोक्षरूपेण जातं तत्पद संज्ञितम् ॥१७॥ प्रत्यक्षं त्वंपदाख्येन स्थितं भूतमयेषु-
च ॥ पूर्णान्निरूपकात्पूर्णं सोपाधिकमिहोद्यते ॥१८॥ तत्पूर्णं शास्त्रशास्तृभ्यां स्वाविद्याहानतः स्वयम् ॥
स्वाखंडैकरसं लक्ष्यमादायो परिषद्धिरा ॥१९॥ निर्गतोपाधिकं पूर्वं पूर्णमेवावशिष्यते ॥ तद्धाम परमं
ब्रह्म योगिध्येयं सनातनम् ॥२२०॥ सर्वधर्म निषेधेन श्रुति गीतं परात्परम् ॥ अहं कृत्स्नस्य जगतः प्र-
भवः प्रलय स्तथा ॥२१॥ मतः परतरं नान्यत्किंचिंदस्ति धनंजय ॥ मयि सर्वमिदं प्रोक्तं सूत्रे मणिग-
णा इव ॥२२॥ इत्याह भगवान्साक्षाद्वेदेऽपि तज्जलानिति ॥ एवं सर्वासु श्रुतिषु स्मृत्यादिषु यदीरि-
तम् ॥२३॥ तद्धाम परमं ब्रह्म योगिगम्यमनामयम् ॥अनंत नामरूपैश्च विश्वाकारं स्वमायया ॥२४॥
भूत्वा सर्वेषु भूतेषु व्यापकं भूतचालकम् ॥ स्फुटमप्यस्फुटं तेषामज्ञानात्स्वात्मनः सदा ॥२५॥ ब्रह्माज्ञा-
ने परोहेतुः सर्वेऽपि ब.... रक्षकाः ॥ मानवाः संति तेनेदं चिद्ब्रह्म न प्रकाशते ॥२६॥ परांचि खानि प्र-
भुणा सृष्टानि चेक्षते पराक् ॥वीक्षतेनांतरात्मानं प्रसिध्दं श्रुत्यदीरितम् ॥२७॥ सर्वोऽपि मनुजो दासो
वित्त स्त्री तनुजात्मनाम् ॥ किंवा स्वः कामदाप्तोयं तेनां तश्चिन्नकाशते ॥२८॥ यदि भायात्सदानंदः
स्वात्मा साक्षि गुणात्परः ॥ तदा किं नाम रोचेत न्यासादन्य नरस्य हि ॥२९॥ आत्मानं चे द्विजानी

दयमस्मिति पूरुषः ॥ किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् ॥२३०॥ इत्याह च श्रुतिः साध्वी
बृहदारण्यगा स्वयम् ॥ यस्त्वात्मरतिरेवस्यादात्मतृप्तश्च मानवः ॥३१॥ आत्मन्येव च संतुष्टस्तस्य
कार्यं न विद्यते ॥ इति साक्षाज्जगन्नाथोऽर्जुनाय प्रोक्तवान्स्वयम् ॥३२॥ भोगासक्तः पुमान्पूर्वमेकाकि
रमते नच ॥ एषणात्रय संबद्धो यततेऽर्थाय नित्यदा ॥३३॥ न लोकः पुत्रिणं श्रुत्वा पुत्रोत्पादन तत्परः ॥
जाया संपादयेत्पादावति यत्नेन मूढधीः ॥३४॥ पुत्रानुत्पाद्य क्लेशेन देवतीर्थादि सेवया ॥ कुटुंब भरणा-
र्थंच यागार्थं वा धनेच्छया ॥३५॥ अनिशं दह्यते चित्ते न प्राप्नोति यथेप्सितम् ॥ शास्त्रज्ञोऽपि सत्क्रि-
यावानर्थदा सः प्रतिग्रहम् ॥३६॥ धनिनां यात्यवमतो ग्रामेकालय को यथा ॥ अव्युत्पन्नमतीनां तु
का वार्त्ता स्वात्मचिंतने ॥३७॥ अनेकपुण्यपुंजैः सत्कुले जन्माप्य साधुभिः ॥ सज्जते सद्भिरुक्तेन मा-
र्गेणेति यदा तदा ॥३८॥ राम ब्रह्म दर्शनार्थं मुद्रां स्वां पूरयेत्युत॥ युक्त्या च दत्तया सद्भिर्नस्वया मूल-
या क्वचित् ॥३९॥ तं पूरण प्रकारं तु संक्षेपेनोच्यतेऽधुना ॥ यथा लोकं जनं सम्यग्संपाद्य पूर्यतेद्विणि च
॥२४०॥ निधिः प्रत्यक्षत स्तस्य दर्शनं याति नान्यथा ॥ एवमत्रापिवत्तुल्यं साधनं यच्चतुष्टयम् ॥४१॥
संपद्य चेक्षते शुध्दं रामेति पदमव्ययम् ॥ मायाव्यसित वर्णं यद्ब्रह्म तत्साधनं तथा ॥४२॥ शुध्दा विद्या
मयं चेति प्रोच्यते तत्वदर्शिभिः ॥ शास्तृ शास्त्रं च शास्यश्च मिथ्याऽविद्यामयं त्रयम् ॥४३॥ ज्ञानोत्तर
मितिमतं तस्मातद्वर्णमीरितम् ॥ चतुष्पादं साधनं तत्पूर्णमित्यभिधीयते ॥४४॥ प्रत्येकं साधनं तच्च
चतुःसाधनमुच्यते ॥४५॥ विवेक वैराग्य शमादि षट्कं - मुमुक्षुता चेति प्रसिध्दमेतत् ॥ लक्ष्माणि प्रत्येक

मुशत्तमानि- प्रोक्तान्यमीषां स्मृतिभूमिकासु ॥ ४६ ॥ साधनानां चतुष्कं च ह्येषणा त्यागपूर्वकः ॥ संन्यासश्च गुरोः सेवा श्रवणादि त्रयं ततः ॥ ४७ ॥ पूर्वोत्तरे समाधी च पुंज एकादशात्मकः ॥ एतेषां तु मिथः साक्षात्प्रणाड्या संगतिर्मता ॥ ४८ ॥ मुमुक्षया तु न्यासादि षण्णां साक्षादिहोच्यते ॥ समाधिरुत्तरश्चापि पृथगेवेति संमतः ॥ ४९ ॥ पूर्वत्रयाणां नविना मुमुक्षां षड्भिरादरः ॥ एतैः साधन संघैश्च पदानि पूरयत्यलम् ॥ २५० ॥ तानि सर्वाणि प्रोच्यंते श्रोतृणामवबुद्धये ॥ दशेंद्रियाणि तेषां तु गोलकानि न वैव तु ॥ ५१ ॥ प्राणापानौ मनोबुद्धि तेऽस्माद्धर्माश्च तन्मिताः ॥ बुद्धेर्ज्ञानं यथासोश्च क्रिया तत्तंत्रता मता ॥ ५२ ॥ उभयेंद्रिय धर्माणामतोऽमीषामनुग्रहः ॥ सप्तविंशति संख्यानि पदानि मानि साधनैः ॥ ५३ ॥ योग्यानि लांछितुं सम्यक् पूरयत्येव सर्वथा ॥ तदा यत्परमं ब्रह्म रामेति पदमव्ययम् ॥ ५४ ॥ भाति प्रत्यक्षत स्तेन कृतकृत्यो हि जायते ॥ एतावताविगानेन रामतोभद्र मुद्रिके ॥ ५५ ॥ रामश्च कथितश्चाथ सर्वतोभद्रमीर्यते ॥ स्थानतो नाम तश्चापि संशयस्याप्यनुत्तये ॥ ५६ ॥ कल्याणं सर्वतः पूंसां चिंतनाद्य - स्य ब्रह्मणः ॥ तद्भद्रवाचकं मुख्यं मंगलानां च मंगलम् ॥ ५७ ॥ यत्र तव्द्यज्यते साक्षातन्नाम्ना तदुदीर्यते ॥ अधिदैवं तथाऽध्यात्मं सर्वतोभद्रमिष्यते ॥ ५८ ॥ विविच्य ऽत्रोभयं च प्रोच्यते वस्तु व्यक्तये ॥ अधिदैवे तु यद्भद्रं तदादावुच्यतेऽमलम् ॥ ५९ ॥ अंड ह्व द्ब्रह्मलोकस्तु सर्वतोभद्रमुच्यते ॥ तेनैवभद्रं सर्वेषां लोकानामिति हि स्थितिः ॥ २६० ॥ तत्र स्वर्णमयं वेश्मनिर्मितं प्रभुणा स्वयम् ॥ तप्त प्रमिति विज्ञेयं यत्र कार्य चिति स्वयम् ॥ ६१ ॥ न्यासेन सर्व सत्वानां गतानां तत्र योगिनाम् ॥ प्राणोपासन निष्ठानां ब्रह्म-

णा चित्प्रकाशत ॥६२॥ ब्रह्मणासह ते सर्वं इति स्मृतिरथागमः॥ क्रममुक्तस्त्वयं पंथाः श्रुति स्मृतिम-
तोमलः ॥६३॥ अध्यात्म्ये हृदयं यत्तत्सर्वतोभद्रमीर्यते ॥ तेन भद्रेण कल्याणं सर्वेष्ववयेष्विह ॥६४॥ त-
त्रयत्पुंडरीकं तद्ब्रह्मणः स्थानमुच्यते ॥ श्रुतावेवं प्रसिद्धिर्हि दहरांबुजवेश्मतः ॥६५॥ साधनसंपत्संयु-
-क्तास्तस्मिन्नेतु समाहिताः ॥ गुरुपदिष्टया युक्त्या तेषां ब्रह्म प्रकाशते ॥६६॥ परमः पुरुषोभू मा स एवा-
ध स्तथोपरि ॥ इत्यादि श्रुत्या यत्प्रोक्तं तन्नपारोक्ष्यमित्यपि ॥६७॥ आह चाहमे वाधस्तादित्यादि सम-
न्याप्तिताम् ॥ मूढानामपि सर्वेषां देहेहमिति दृश्यते ॥६८॥ माभूत्सम इत्यर्थमात्मैवेति पुनर्वचः ॥ एकात्म
रूपायोस्तयोर्भेद शंका निवृत्तये ॥६९॥ सर्वा सूपनिषस्त्वेवं ब्रह्माद्वैतं सुनिश्चितम् ॥ ब्रम्हैं वेदममृतमि-
त्याह चाथर्वणि श्रुतिः ॥२७०॥ तत् त्वमेव त्वमेवै तदिति कैवल्यगं वचः ॥ तत्वमसीति छांदोग्ये ब्रह्मात्मै-
क्यं नभेदधीः ॥७१॥ एकत्वं पदयो स्पष्टं श्रुत्या यत्प्रतिपादितम् ॥ साक्षान्मुक्तेः कारणं तद्बोध स्तेषां स
एव हि ॥७२॥ यच्च किंचिज्जगत्सर्वं दृश्यते श्रुयतेऽपि वा ॥ अंतर्बहिश्च तत्सर्वं व्याप्य नारायण स्थि-
तः ॥७३॥ इदं सर्वं यदयमात्मेकमेवा द्वितीयकम् ॥ सर्वं खल्विद मित्यादि श्रुतयो य द्वुवंति हि ॥७४॥
सर्वभूतेषु चात्मानं सर्व भूतानि चात्मनि ॥ संपश्यन्नात्मयाजीति परमार्थं मनोर्वचः ॥७५॥ एतादृशेन
बोधेन भूत्वा ब्रह्मात्म रूपकाः ॥ कृतकृत्याः स्वयंतीर्त्वा सच्छिष्यान्ग्राहयंति च ॥७६॥ अत्रोक्तं श्रुत्य-
भिप्रायं जानंति विदुषोखिलम् ॥ किंबहुक्ते नचोद्दिष्टं संक्षेपेणोपसंहृतम् ॥७७॥ नारायणाच्युत जना-
र्दन वासुदेव - गोविंद माधव मुकुंद रमेश वीश ॥ संकर्षणाज नरसिंह परावरात्मन् ॥ रामोरुगाया शि-

व वामन पाहि शिष्यम् ॥७८॥ येनेदं विकृतं विश्वं विशतायेन चेतनम् ॥ यत्स्थितं यत्प्रतिष्ठंच तस्मै
सर्वात्मनेनमः ॥७९॥ इदानिं रामतोभद्रंस्याष्टोत्तरशतस्य च ॥ नाना भेदाः प्रकथ्यंते लघुमुद्रान्वित-
स्य हि ॥२८०॥ पूर्वोक्तेऽष्टविंशति   रेखा वृद्धिः प्रकल्पयेत् ॥ परिधि द्वावधिकौतच्चयक्त्योर्लिंगानि योज-
येत् ॥८१॥ प्रथमे तिथि (१५) मितेशाश्च तुर्विंश पदात्मकाः ॥ वाप्यः षोडश संख्या तास्त्रयोदश पदात्मि-
काः ॥८२॥ भद्रं तत्व २५ मिता चाथ द्वितियेऽर्क मिताः शिवाः ॥ वाप्यस्त्रयोदशमिता अष्टादश पदात्मि-
काः ॥८३॥ भद्रमर्क पदं शेषं यथा पूर्व प्रकल्पयेत् ॥ एतद्रामलिंगतोभद्रं शतंच वसूत्तरम् ॥८४॥ अथवा-
द्येरस मुद्रारशेशा वापिकाश्च षट् ॥ त्रयोदशपदाः कार्या भद्रं चंद्रकलात्मकम् ॥८५॥ द्वितीये पंचमुदाश्च
लिंग षट्कं च वापिकाः ॥ तन्मिताश्च भद्रमर्क पदमग्रेऽष्टमावधि ॥८६॥ तुर्य पंच तुर्य नेत्र चंद्रसंख्याश्च
मुद्रिकाः ॥ षट् नेत्र नेत्र नयनेत्रेंदु शंकरा स्तथा ॥८७॥ भद्रं षड्दमर्काघ्रिं षड्दं विंशपादकम् ॥ षोडशांघ्रि
तत्वपादं क्रमात्ज्ञेयं विचक्षणैः ॥८८॥ अथवाऽष्ट पदे मुद्रां विधायतस्थ लिंगकम् ॥ रचयेत्स्थानके तुर्ये भ-
द्रं विंशपदात्मकम् ॥८९॥ सर्वत्र सममुद्रासु मध्ये च परिधिद्वयम् ॥ मुद्रा सीमा लिंग गता वाप्यर्द्धा तुर्य
कोष्ठका ॥२९०॥ लिंगस्कंध गता कोष्ठा वर्णैरिष्टैः प्रकल्पयेत् ॥ वह्निवाप्यो र्मध्यमानि पदान्युर्वरितानि तु
॥९१॥ भद्रं श्रृंखल योग्यानि तदर्थे विनियोजयेत् ॥ अथवाद्ये दशमुद्राः सीमा परिधयस्तथा ॥९२॥ भद्र-
मर्क पदं मध्ये परिधि द्वौ प्रकल्पयेत् ॥ एवमग्रे परिधयस्तृतियेऽष्टैव तु मुद्रिकाः ॥९३॥ चतुष्पादात्मकं
भद्रं पंच मुद्राश्च पंचमे ॥ अर्क पादात्मकं भद्रं नात्र द्वौ परिधि स्मृतौ ॥९४॥ सप्तमेऽग्निमिता मुद्रा भद्रं

॥श्रीगणेशायनमः॥ श्रीरामदासउवाच॥ पूर्वोक्त श्रेष्ठमुद्रियमतोभद्र सविस्तरान्॥ वदाम्यहं तवाग्रे
हि विष्णुदास श्रृणुष्व तान्॥१॥ तिर्यगुर्ध्व रक्तरेखा एकषष्ठिमिताः शुभाः॥अंतात्कृष्ण रक्त शुक्ल पी-
ताः परिधयः क्रमात्॥२॥ द्वादशांते पीत कृष्ण रक्त शुक्लाः पुनःस्मृताः॥ पंचमः पीतवर्णोऽपि सर्वतोभद्र-
मा लिखेत्॥३॥ बहिः पंक्तौ द्वादशांते सीमा परिधयः स्मृताः॥ पीता वा लोहिताः कार्या मध्ये द्वौ परिधि स्मृ-
तौ॥४॥ ततो मध्य गेहयोर्द्ध्वे मुद्रिके वेदवर्णके॥ चतुःपार्श्वेषु चत्वारि नामानि पूर्ववल्लिखेत्॥५॥ कोणगे-
हेषु कोणेंदुस्त्रिपदः शुक्लवर्णकः॥ एकादश पदा कृष्णा श्रृंखला पीतवर्णका॥६॥ दशपादा श्रृंखलान्या व-
ल्लरी हरिता स्मृताः॥ एकोनविंशत्पदजा भद्रं रक्तं नवात्मकम्॥७॥ त्रयोदश पदावापि सीतान्य त्रिपदा-
त्मकम्॥ रक्तभद्रं पीतभद्रं तिर्यग्नवपदात्मकम्॥८॥ भद्रयोः श्रृंखला रक्ता द्विपदैव समंततः॥ अष्टमु-
द्रात्मकं रामतोभद्रं ते मयोदितम्॥९॥ त्यक्त्वा पीतां श्रृंखलां वा लिंगं कृष्णं त्रिषट्(१८) पदम्॥ खंडवा-
प्यौ चतुःपादजौ भद्रं लोहितं रसैः(१)॥१०॥ तिर्यग्भद्रे पीतवर्णे निधिजं वेदजं तथा॥ लिंगोर्ध्वे मालिका रक्ता
त्रिपदा वा त्रिलोचनः॥११॥ अष्टमुद्रात्मकं चैतत्सलिंगं रामभद्रकम्(२)॥ तिर्यगूर्ध्वे त्रिपंचाशद्रेखा सर्वं हि
पूर्ववत्॥१२॥ मुद्रिका परिधीनां च षट्कं स्वेच्छा प्रपूरयेत्॥ चतुर्मुद्रात्मकं चैतत्सलिंगं वापि पूर्ववत्
३-४॥१३॥ तिर्यगूर्ध्वे त्रिसप्ता७३श्च रेखाः कार्याः सुलोहिताः॥ तासु चतुर्षु पार्श्वेषु कार्याः परिधयः
क्रमात्॥१४॥ कृष्ण रक्त शुक्लपीता द्वादशांते पदेषु च॥ कार्याः पुनश्चतुःपार्श्वे परिधिः पीतवर्णकः॥१५॥
तदग्रे रक्तवर्णश्च परिधिर्हि समंततः॥ ततोऽष्ट पदोपरितः परिधिः पीतवर्णकः॥१६॥ ततः षष्ठपदोर्ध्वे च

पुनः पीतः प्रकारयेत् ॥ आद्यस्थाने च सीमाख्याः पीताः परिधयोऽथवा ॥१७॥ रक्ता वेदमिताः कार्या द्वादशां-
ते पदेषु च ॥कोणगेहे पूर्ववच्च मध्येच मुद्रिका त्रयम् ॥१८॥ततो द्वितीयस्थाने हि चंद्रः कृष्णा च शृंखला
॥ सप्तपादा वल्लरी च चतुर्दश सुपादिका ॥१९॥ वल्योर्नियोजनं कार्यं रक्तं भद्रं हि षट्पदम् ॥ त्रयोदश पदाः
कार्या वाप्या वेदमिताः सिताः ॥२०॥ षड्विंशत्पदजा कार्यास्त्रि शिवाः कृष्णवर्णकाः ॥ वा त्रयोदश लेख्यानि
लिंग मध्यपदेषु च ॥२१॥ रामेति रामानामानि मध्यातत्कं तु कत्वपि ॥ मूर्द्धा चतुष्पदो ज्ञेयः पादाभ्यां क-
टि ईरितः ॥२२॥ चतुष्पदौ लिंगपार्श्वौ पादस्कंधौ हि षट्पदौ ॥ शिवनेत्रस्थले शुक्ले द्वे पदे रक्षयेद्धिया
॥२३॥ वाप्यूपरिष्टाच्छेषाणि यानि ह्यष्ट पदानि च ॥ तेषु रक्तानि त्रीण्यादौ पंचपीतानि चोपरि ॥२४॥ मध्ये-
ऽथ सर्वतोभद्रं पूर्ववच्चैव नोंतरम् ॥ सर्वलिंग रामभद्र त्रयमेके मयेरितम् ॥२५॥ एतद्द्वादशमुद्राभि राम-
लिंगात्मकं शुभम् ॥ अतिरम्यं विचित्रं च रामतुष्ट्यर्थमीरितम् ॥२६॥ (५) तिर्यगूर्ध्वमंकसप्त (७९) रेखाः सर्वं
हि पूर्ववत् ॥ चतुर्मुद्रात्मकं भद्रं यथा तद्वच्च मध्यमे ॥२७॥ आद्य तिस्रः स्थले मुद्राः सीमा परिधयस्तथा ॥
मध्ये त्रयस्त्रयो ज्ञेया अंते द्वौ द्वौ स्मृतौ शुभौ ॥२८॥ एतच्छोडश मुद्राभि रामतोभद्रमीरितम् ॥ (६) अंतगेहे
कृते लिंगे सलिंगं षोडशात्मकम् ॥२९॥ (७) तिर्यगूर्ध्व भूमिबाण वेद रेखाः ४-५१ सुलोहिताः ॥ अष्टमुद्रा-
त्मकं मध्ये रामतोभद्रकं लिखेत् ॥३०॥ तिर्यगूर्ध्व परिधयः पीताश्चैव समंततः ॥ द्वादशांते रचनीया बहिः
परिधयोऽपि च ॥३१॥ पूर्ववत्कोणगेहानि मुद्राणां चक्रमोऽधुना ॥ उक्ते द्वे मुद्रिके पूर्वं तदधो वेदमुद्रिकाः
॥३२॥ मध्ये सर्वत्र परिधि द्वयं नान्य स्थले कदा ॥ ततो रसमिता अष्ट विशेषः पंचमेस्थले ॥३३॥ षण्मु-

द्रिका वेदवाप्यश्चतुरशीति पादिका ॥ वाप्यंतर्गत कुंडं च कृष्णं द्वादशपादजम् ॥ ३४ ॥ वापिपार्श्वेषु भ-
द्राणि चत्वारि लोहितानि च ॥ पृथग्पृथक् पंचदश पदैर्ज्ञेयानि तानि हि ॥ ३५ ॥ षष्ठेस्थाने द्वादशैव मुद्रा अ-
ग्रे चतुर्दश ॥ षोडशाष्टादशैवाद्य विंश द्वाविंश मुद्रिकाः ॥ ३६ ॥ चतुर्विंशाथ षड्विंश ह्यष्टविंश सुमुद्रिकाः ॥ त्रिं-
श द्वात्रिंशन्मुद्राणां स्थाने षोडश मुद्रिकाः ॥ ३७ ॥ वाप्य षोडश विज्ञेया मध्ये वापि द्वयं स्मृत ॥ अष्टोत्तरसहस्रं
च रामतोभद्रमीरितम् ॥ ३८ ॥ (८) तिर्यगूर्ध्वं हि वन्स्वंक बाणरेखाः सुलोहिताः ॥ सर्वलिंग रामभद्र द्वयमे-
के पुरेरितम् ॥ ३९ ॥ तदत्र मध्ये लेख्यं हि मध्यमुद्रास्थले शिवः ॥ द्विसप्तति पदैः कार्यं कृष्णवर्णः प्रकार
येत् ॥ ४० ॥ षट्त्रिंशद्रामनामानि वा लेख्यां नि च हस्ततः ॥ कृष्णा तत्कंकणी कार्या चतुर्भिश्च शिरःस्मृ-
तम् ॥ ४१ ॥ कटिश्चतुः पदैः कार्यः पार्श्वे द्वादशपादजः ॥ स्कंधो विंशपदैर्ज्ञेयो मूलं विंशपदात्मकम् ४२
षड्विंशपदजेज्ञेये द्वेवापि शकले सिते ॥ द्वाभ्यां शिवस्य वै नेत्रौ सितौ शेषपदानि हि ॥ ४३ ॥ पंच रक्तानि
चत्वारि पीतानि शिवकर्णयोः ॥ स्थाने तृतीय मुद्राश्च तिस्रो द्वौ शंकरौ वरौ ॥ ४४ ॥ स्थाने चतुर्थे मुद्राश्च
चत्वारि त्रि शिवा स्मृताः ॥ ४४ ॥ एवमग्रे क्रमेणैव विशेषं कथयाम्यहम् ॥ स्थाने चतुर्दशे मुद्राश्चतुर्दश
शिवास्तथा ॥ ४५ ॥ पंचदशे हि विज्ञेया एवमग्रे धिया लिखेत् ॥ कोणस्थ गेहयोः कार्यौ द्वौ शिवौ च त्रिषट्
पदौ ॥ ४६ ॥ अष्टमुद्रात्मके भद्रे सलिंगे च कृतौ यथा ॥ मुद्राभ्यो लिंगवृद्धिर्हि कर्तव्या चरमावधि ॥ ४७ ॥
स्थाने ते द्वाविंशति मे मुद्रा द्वादशदीरिता ॥ त्रयोविंशाच्च लिंगानि बहिः परिधयस्ततः ॥ ४८ ॥ एवं युक्त्या
रचनीयं शेषं सर्वं पुरोदितम् ॥ अष्टोत्तरसहस्रं च रामलिंगात्मकं त्विदम् ॥ रामासनं वरिष्ठं हि राघवस्या-

ति तुष्टिदम् (९) ॥४९॥ तिर्यगूर्ध्वं बाणशास्त्र भूमि रेखाश्च पूर्ववत् ॥ अष्टमुद्रात्मकं मध्ये परिधयः समंततः ॥५०॥ तिर्यगूर्ध्वं द्वादशांते बहिः परिधयस्तथा ॥ मध्ये सीमा परिधि द्वयं नान्यस्थले कदा ॥५१॥ नेत्रस्थाने वेद मुद्रा विशेषश्च तृतीयके ॥ तिस्रो वाप्यस्त्रि मुद्राश्च अष्ट षष्ठ चतुर्थके ॥५२॥ पंचमे दश मुद्राश्च शेषं सर्वं पुरोदितम् ॥ अष्टोत्तरशतं रामतोभद्रं ते मयोदितम् (१०) ॥५३॥ तिर्यगूर्ध्वं त्रिपूर्णाक्षि रेखाः कार्याश्च पूर्ववत् ॥ सर्व लिंग रामभद्र त्रयमेके पुरेरितम् ॥५४॥ तदत्रमध्ये लेख्यं हि मध्य मुद्रास्थले सिता ॥ वापि कार्या द्वादशांते परिधयश्च पूर्ववत् ॥५५॥ तिर्यगूर्ध्वं शुभाः कार्या बहिः परिधयस्तथा ॥ स्थाने तृतीय मुद्राश्च तिस्रो द्वौ शंकरौ वरौ ॥५६॥ चतुर्थे वेदमुद्राश्च त्रयस्ते शंकरा स्मृताः ॥ पंचमे पंचमुद्राश्च चत्वारश्च हरा वराः ॥५७॥ षष्ठस्थाने च षण्मुद्राः शिवाः सप्त प्रकीर्तिताः ॥ कोणस्थ गेहयः कार्यौ द्वौ हरौ च त्रिषट्पदौ ॥५८॥ अष्टमुद्रात्मके भद्रे सलिंगे च कृतौ यथा ॥ स्थाने च सप्तमे मुद्राः सप्तलिंगानि चाष्ट वै ॥५९॥ कोणस्थ गेहयोः कार्यौ द्वौ हरौ च त्रिषट्पदौ ॥ एतदष्टोत्तरशतं रामलिंगात्मकं स्मृतम् (११) ॥६०॥ षष्ठे स्थाने कोणगेहेऽथवा शंभून कारयेत् ॥ स्थाने तृतीय मुद्रैका वाप्यौ द्वौ द्वौ हरावपि ॥६१॥ एतच्छतात्मकं प्रोक्तं रामलिंगात्मकं मया (१२) ॥ अष्टोत्तरशते रामतोभद्रे वन्हिसद्मनि ॥६२॥ षडैव मुद्राः कर्तव्या अंतेस्थाने हि पंचमे ॥ पंचमुद्राः पंचवाप्यः शतमुद्रात्मकं त्विदम् (१३) ॥६३॥ अष्टोत्तरसहस्रे श्रीरामतोभद्रके वरे ॥ बाणस्थाने हि षड्वाप्यो वेदमुद्राः प्रकारयेत ॥६४॥ सहस्र राममुद्राणां रामतोभद्रमीरितम् (१४) अष्टोत्तरसहस्रे श्रीरामलिंगात्मकासने ॥६५॥ स्थाने चतुर्दशे कोणगेहे शंभून कारयेत् ॥ मुद्रास्थाने

च द्वौ वाप्यौ मध्ये क्वापि प्रकारयेत् ॥६६॥ सहस्र राममुद्राणां रामलिंगात्मकं त्विदम् (१५) ॥ षोडश
रामतोभद्रे चाद्ये स्थाने त्रिदिक्षु च ॥६७॥ मध्ये मुद्रास्थले वाप्य स्तिस्रः कार्या महत्तमाः ॥ त्रयोदशात्म-
कं चैतद्रामतोभद्रमीरितम् (१६) ॥६८॥ अथवाऽद्यस्थले मध्य मुद्रासु वेद दिक्षु च ॥ वेदवाप्योऽपरेस्था-
ने तिस्रश्चैव त्रिदिक्षु च ॥६९॥ वाप्यश्चैतद्धि ज्ञातव्यं नवमुद्रात्मकं शुभम् ॥ रामतोभद्रकं रम्यं राघवस्या-
ति हर्षदम् (१७) ॥७०॥ तिर्यगूर्ध्वं बाणपूर्ण भूमिरेखाश्च पूर्ववत् ॥ त्रयोदशात्मकं मध्ये स्थानेंते मुद्रिका-
त्रयम् ॥७१॥ मुद्रामध्ये हि द्वौ वाप्यौ परिधयोऽर्के मध्यमाः ॥ द्वौ द्वौ सर्वत्र संयोज्यो तोषदं तत्ववादिना-
म् (१८) ॥७२॥ कोणगेहेषु लिंगानि नेत्रस्थाने हि पश्चिमे ॥ कार्यं वापिस्थले लिंगं पंचविंशतिमं वरम् ॥ पं-
चविंशति मुद्राभि रामलिंगात्मकं त्विदम् (१९) ॥७३॥ अथोच्यंते देवतानि रामासन भवानि च ॥ मध्येथ
सर्वतोभद्र समावाह्यात्र तत्सुरान् ॥७४॥ ततो बहिस्तु लिंगेषु रुद्रं वापिषु वै नलम् ॥ सुग्रीवं तत्र भद्रेषु
तिर्यग्भद्रेषु वै गवम् ॥७५॥ पीतासु च श्रृंखलासु ह्यंगदं परिचिंतयेत् ॥ पीतश्रृंखला भावे तं तिर्यग्भद्रे
चतुःपदे ॥७६॥ कृष्णवर्णं श्रृंखलासु समावाह्य बिभीषणम् ॥ वह्निषु च जांबवंतं मैंदं खंडेंदुषु स्मरेत् ७७
द्विविदं परिधिष्वेव मुद्रायां राघव स्त्रिया ॥ मुद्रायाः पश्चिमे चाथ दक्षिणे ह्युत्तरं पुरः ॥७८॥ लक्ष्मणं भरतं
चापि शत्रुघ्नं वायुनंदनम् ॥ पूज्य पुजक योर्मध्ये ज्ञेया पूर्वदिगत्र हि ॥७९॥ सीमा परिष्वत्रैव सुषेणं प-
रिचिंतयेत् ॥ सर्वत्र पदमात्रेषु चिंतये त्सर्ववानरान् ॥८०॥ बहिस्त्रि परिधिष्वेव त्रिवेणीं परिचिंतयेत्
॥ चतुर्दिक्पालाभिमुखाः हरा रुद्राश्च वापिकाः ॥८१॥ कर्तव्या वाऽत्माभिमुखाः कार्या वा पद्मसन्मुखाः ॥

चतुर्दिग्पालाग्निमुरवा एव भद्रेषु मे कथी ॥८२॥ पक्षत्रये वरिष्ठा स्ता वदंतीत्थं मुनीश्वरा ॥ पूर्वोक्त भद्र देवान्हि संपूज्यादौ ततः परम् ॥८३॥ समारभेद्राघवस्य श्रेष्ठा पूजां सविस्तराम् ॥ पद्मस्य कर्णिकायां च ससीतं राघवं न्यसे ॥८४॥ अष्टपद्मदलेष्वेव तस्यावरणदेवताः ॥ पूजयेदिति सर्वत्र बुधैस्तु परिकथ्यते ॥८५॥ पद्मसंकोचमालक्ष्य प्रकारांतर मुच्यते ॥ सर्वतोभद्रकमले धान्यराशौ घटं न्यसेत् ॥८६॥ जलपूर्णं च तस्यास्ये केतकीपत्र पूरिते ॥ ताम्रपात्रं विस्तृतं च न्यस्य तंदुल पूरितम् ॥८७॥ तत्र वस्त्रे सावरणं रामचंद्रं प्रपूजयेत् ॥शैली दारुमपि लौहि लेप्या लेरव्या च सैकति ॥८८॥ मनोमयि मणिमयि प्रतिष्ठय विधा स्मृता॥ सर्वेषु रामभद्रेषु मुद्रा पूज्यो रघूत्तमः ॥८९॥ पूजकश्च शिवो ज्ञेयो भद्राद्या रामपार्षदाः॥ श्रीरामलिंगतोभद्रमतएवोच्यते बुधै ॥९०॥ एवं नानाविधा भेदा बहवः संति भो द्विज ॥ श्रीमद्रामतोभद्राणां येषां संरव्या न विद्यते ॥९१॥ मया भेदाः कियंतोऽत्र तवाग्रे विनिवेदितः॥ नरैर्बुध्द्या प्रवर्तव्या पूजनार्थं रमापतेः॥९२॥ हेमतंतुभवं चैव कार्यमासनमुत्तमम् ॥ राघवार्थं महच्छ्रेष्ठं रौप्यतंतु भवंतु वा ॥९३॥ अथवा पट्टकूलस्य चैव कार्यं वरासनम्॥ अथवा लेरवयेत्पत्रे सर्वाभावे द्विजोत्तमैः ॥९४॥ भूर्जपत्रे विलिरवतं विशेषात्सिध्दिदं नृणाम्॥ वा वस्त्रोपरि लेरव्यं वा कर्तव्यं चित्रतंतुभिः ॥९५॥ विनासनेन या पूजा सा पूजा निर्फला भवेत् ॥ रामभद्रासने पूजा सा पूजाति फलप्रदा ॥९६॥ यद्यद्रामयदंकर्म तत्तच्च द्विजपुंगवैः॥ रामासन स्थितं राम पुरस्कृत्य समारभेत् ॥९७॥ रामभद्रासनैर्हीनं यत्कर्म तच्च निष्फलम् ॥ तस्मादेवं तस्यमेवै तत्कर्तव्यं रामपूजने ॥९८॥ अष्टोत्तरसहस्रं च रामलिंगात्मकं हि यत् ॥ आसनं तद्वरिष्ठं श्रीराघवस्याति तोषदम् ॥९९॥ तदधो रामतोभद्रमष्टोत्तर सहस्रकम् ॥ तदधो रामलिं-

गारण्यमष्टोत्तरशतात्मकम् ॥१००॥ तदधो रामतोभद्रमष्टोत्तरशतात्मकम् ॥ तदधो पंचविंशच्छ्रीराममुद्रासनं स्मृ-
तम् ॥१॥ तदधो रामतोभद्रं षोडशात्मकमीरितम् ॥ त्रयोदशात्मकं रामतोभद्रं तदधः स्मृतम् ॥२॥ द्वादशं च
नवाख्यं च ह्यष्टमुद्रात्मकं तथा ॥ चतुर्मुद्रात्मकं चापि पूर्वतश्चापरं ह्यधः ॥३॥ एवं क्रमेण ज्ञेयानि रामभद्रास-
नानि हि ॥ श्रेष्ठासनेषु या पूजा तस्याः श्रेष्ठं फलं स्मृतम् ॥४॥ लघ्वासनेषु या पूजा तादृशं तत्फलं स्मृतम्
॥ एवं ज्ञात्वा फलं बुद्ध्या श्रेष्ठमेवासनं शनैः ॥५॥ यत्नेनैव प्रकर्तव्यं रामोपासक मानवैः ॥ प्रतिवर्षे नविनं
च कार्यमासनमादरात् ॥६॥ एकस्मिन्ह्यासने पूजा न वर्षादूर्ध्वतः शुभा ॥ एवं शिष्यासनानां च भेदाः पृष्टा-
स्त्वया पुरा ॥७॥ तवाग्रे हि मयाः ख्याताः श्रीरामस्यातितोषदः ॥ त्वत्पृष्ठ रामतोभद्र वर्णनस्य प्रसंगतः ८
स्मरिता रामचंद्रस्य किंचिल्लीला ममाद्य हि ॥ वदाम्यहं तवाग्रे तां त्वं श्रृणुष्व द्विजोत्तम ॥९॥ प्रत्यब्दं श्रावणे
मासे गुरुवाक्याद्रघूत्तमः ॥ चत्वारिंशद्दृंकमित सुवर्णस्य पृथक्पृथक् ॥११०॥ प्रत्यहं लक्ष लिंगानि कृत्वा प-
त्न्यायुतोऽर्चयेत् ॥ अष्टोत्तरसहस्रैश्च लिंगैर्यद्भद्र मुत्तमम् ॥११॥ तच्छंभोरासनं ज्ञेयं महाप्रीति विवर्द्धनम्
तन्मध्यगतकमले चैकं लिंगं निवेश्य च ॥१२॥ षोडशैरुपचारैस्तु त्संपूज्य स रघूत्तमः ॥ हेममुद्रां दक्षिणार्थं
दत्त्वा संपूज्य भूसुरम् ॥१३॥ तस्मै लिंगं सासनं तददौ प्रत्येकमादरात् ॥ एवं सं कोटि लिंगानि त्रयस्त्रिंश-
द्दिनैर्ददौ ॥१४॥ एवं व्रतं श्रावणे हि प्रतिवर्षेऽकरोद्विभुः ॥ दिव्यैराभरणैर्वस्त्रै द्विजा राज्ञार्पितैर्बभुः ॥१५॥
हेमतंतु समुद्भूतान्यकरोदासनानि सः ॥ उद्यापनं च हवनं चकार रघुनंदनः ॥१६॥ विष्णुदास उवाच ॥
अष्टोत्तरसहस्रैर्यल्लिंगतोभद्रमीरितम् ॥ कथं कार्यं तस्य भेदा विस्तराद्वक्तुमर्हसि ॥१७॥ हेमतंतु समुद्भु-

तमकरोदासनं विभुः ॥ सहैमान्यपि लिंगानि चाकरोच्च वराणि हि ॥१८॥ दिव्यैराभरणैर्वस्त्रैरकरोत्स द्विजार्चनम् ॥ अशक्तौ तद्व्रतं सिद्धेत्कथं तद्वक्तुमर्हसि ॥१९॥ रामदास उवाच ॥ अशक्तौ पट्टकूलस्य कंबलस्याथवा नरैः ॥ कार्यं तदथवा वस्त्रे तंतुभिश्च प्रकारयेत् ॥१२०॥ लेख्यं वस्त्रेऽथवा रंगै लेख्यं पत्रादि सत्स्थले ॥ अशक्तौ रजतान्येव लिंगानि ताम्रजानि वा ॥२१॥ किंवा पारदभूतानि स्फाटिकान्या पलानि वा ॥ दारुजानि चंदनैर्वा गोमयेन मृदापि वा ॥२२॥ कृत्वा लिंगानि पूज्यानि स्वशक्त्या पूजयेद्द्विजान् ॥ इदानीं लिंगतोभद्र रचनां ते वदाम्यहम् ॥२३॥ तिर्यगूर्ध्वं रक्तरेखा द्वे शतेऽष्टादश स्मृताः ॥ तासां पदानामेको न पूर्वसंख्या भवेदिह ॥२४॥ पीताः परिधयः कार्याः षट्पदांतेत्र सर्वतः ॥ युगेंदु संमित स्तेषु लिंगादि रचयेद्धि-या ॥२५॥ चतुष्कोणेषु शशिनस्त्रिपदैः परिकल्पयेत् ॥ तदग्रे श्रृंखलाः पंचपादैः कार्याश्च सर्वतः ॥२६॥ एकादशपदावह्नि वापि त्रिदशपादिका ॥ अष्टादश पदैः शंभुः सर्वत्रैव लिखेत्क्रमात् ॥२७॥ तत्र प्रथम परिधेरर्वाक्-लिंगानि योजयेत् ॥ त्रिरेकादश (३३) संख्यानि वाप्यस्त्वेकाधिका (३४) ततः ॥२८॥ भद्रेऽर्कान्-र्कपदे कार्ये द्वितीये लिंगसंततिः ॥ एकत्रिंशन्मिता कार्या भद्रे नव नवात्मके ॥२९॥ संख्या भ षट् षट्पदे ॥ तुर्ये षड्विंश लिंगानि भद्रेऽर्कान्-र्कपदे मतम् ॥१३०॥ पंचमे तुर्यनेत्रेशा भद्रे नव नवात्मके ॥ षष्ठे द्वादश लिं-गानि भद्रे षट् षट्पदे स्मृते ॥३१॥ सप्तमे लिंगसंततिरेकोनविंशसंख्यका ॥ भद्रेऽर्कान्-र्कपदे ज्ञेये ऽष्टमे सप्त दशेश्वराः ॥३२॥ भद्रे नव नव पदे नवमे मनु (१४) शंकराः ॥ भद्रे शशिकला (१६) संख्ये दशमेऽर्कमिताः शिवाः ॥३३॥ भद्रेऽर्कार्कपदे ज्ञेये तथा त्वेकादश पदैः ॥ शिवा नव नव पद भद्रे ज्ञेये मनोरमे ॥३४॥ द्वादशे सप्तलिंगा-

नि भद्रे चंद्रकलात्मके ॥ त्रयोदशे पंच हरा भद्रेऽर्कार्कि पदे मते ॥३५॥ चतुर्दशे त्रिलिंगानि भद्रे नव नवा-
त्मके ॥ चरमेंतस्तु रचयेत्सर्वतोभद्रमुत्तमम् ॥३६॥ खंडेंदु त्रिपदः कोणे श्रृंखला षट्पदात्मिका ॥ त्रयोद-
श पदा वह्नि वा पीतत्वतिर्मता ॥३७॥ भद्रे षोडश षोडश पदेंऽतः परिधिर्भवेत् ॥ तदंतरे पंच पंच पदैः पद्मं
समुध्दरेत् ॥३८॥ विचित्रं चित्रवर्णं वा श्वेतेंदुः श्रृंखला सिता ॥ वापि शुक्ला सितः शंभु रक्तभद्रं प्रकल्प-
येत् ॥३९॥ नीला वह्नीश्वरः स्कंध कोष्ठाश्चित्रा यथा रुचिः ॥ यत्र यत्र पदानिह शेषभूतानि तु ····· ॥१४०॥ य-
थायोग्यं धिया तत्र श्रृंखलार्थे नियोजयेत् ॥ शुक्ल रक्त कृष्ण वर्णा अंते परिधयस्त्रयः ॥४१॥ वा पूर्व पीत परि-
धिं दत्वा देयास्त्रयस्ततः ॥ एतेषा परिधिनां वै पदान्यष्टाधिकानि हि ॥४२॥ नोक्तानि पूर्वसंख्यायां ज्ञात्वे-
त्थं वृध्दिमाचरेत् ॥ अग्रेऽप्येव हि बोध्दव्यंपरिधीनां चतुष्टये ॥४३॥ एतदष्टोत्तर दशशतं लिंगोभ्दवं स्मृ-
तम् ॥ एकस्त्वयं प्रकारो हि प्राकारांतरमुच्यते ॥४४॥ द्वे शते सप्तपंचाशद्रेखा पूर्वोत्तरा स्मृताः ॥ पीता प-
रिधयः कार्या षट्पदांतेऽत्र सर्वतः ॥ ४५ ॥ सप्तेंदु संख्या (१७) रचये ह्लिंगानां पतयो ···· धि ॥ सर्वतस्तन्मि-
ता (१७) आद्या नवनेत्रमिता (२९) ऽपरा ॥ ४६ ॥ सप्ताक्षि संमिता त्वन्या वक्ष्यमाणानि बोधयेत् ॥ बाणाक्षा
(२५) ऽग्निनयना च (२३) नेत्रनेत्राथ विंशति (२२) ॥४७॥ गजेंदु (१८) गिरिचंद्रा च (१७) बाणेंदु (१५) हुत
भुक् शशि (१३) ॥ रुद्रा दशान्याष्टमिता षट्चत्वारि त्रिचंद्रमा ॥ ४८ ॥ प्रतिपंक्तिमेक वापि लिंगेभ्यस्त्वधि-
का भवेत् ॥ चतुर्विंश पदं लिंगं वापिवस्वींदुपादिका ॥ ४९ ॥ भद्रसंख्या क्रमेणैव जानीयाद्वक्ष्यमानतः ॥
पूर्व पंक्तौ च पंचम्यां नवम्यां हि तथैव च ॥१५०॥ त्रयोदश सप्तदश्योर्भद्रं विंशपदैः स्मृतम् ॥ द्वितीया-

यां च षष्ठ्यां च दशम्यां च ततौ तथा ॥५१॥ चतुर्दश्यां स्मृतं भद्रं पंचविंशपदैः स्मृतम् ॥ तृतीयायां च सप्तम्या-
मेकादश्यां तथैव च ॥५२॥ पंचदश्यां हि पंक्तौ च भद्रं त्रिंशपदात्मकम् ॥ षट्त्रिंशद्भिःपदैर्भद्रं चतुर्थ्यां च ततौ
स्मृतम् ॥५३॥ वस्वर्क षोडशीष्वेह भद्रं षोडशपादजम् ॥ सर्वकोणेषु त्रिपदश्चंद्रः श्रृंखलिका पदैः ॥५४॥ पं-
चभिरेकादशभिर्लता कार्या ततोऽतरे ॥ सर्वतोभद्रकं रम्यं चतुर्विंशैस्तु वापिका ॥ ५५ ॥ भद्रं नवपदं सर्वपार्श्वेष्वे-
वं प्रकल्पयेत् ॥ परिध्यंतर्भवेत्पद्मं रक्तं चित्रं यथारुचि ॥५६॥ कृष्णं लिंगं श्रृंखलापि भद्रं रक्तं च वापिका ॥
श्वेता शशी शिशो ज्ञेयस्तथा नीला स्मृता लता ॥५७॥ शिष्टानीह पदान्येव भद्राद्यर्थं नियोजयेत् ॥ पीत शु-
क्ल रक्त कृष्णा अंते परिधयः स्मृताः ॥५८॥ अष्टोत्तरसहस्राख्यं लिंगतोभद्रकं त्विदम् ॥ एवं विकल्पतः
प्रोक्ता रचना द्विविधा मया (२) ॥५९॥ अथान्यत्ते प्रवक्ष्यामि प्रकारांतरमुत्तमम् ॥ सैकविंशच्छतै लिंगै लिंगतो-
भद्रमादरात् ॥१६०॥ अष्टाष्ट (८८) रेखाः प्राक् याम्य पश्चिमोत्तर दिक्षु च ॥ सप्ताशीति पदेष्वेव लिंगानां
पंचपंक्तयः ॥६१॥ तासु प्राथमिकायाश्च विस्तारः कथ्यतेऽधुना ॥ पृथक्कोणे त्रिपदैः शशीश्वेतस्तदग्रतः ६२
श्रृंखला कृष्णवर्णा च पदैः पंचभिरुत्तमा ॥ तस्याः पार्श्वद्वयोः कार्ये वल्ल्यौ हरितवर्णके ॥६३॥ पृथगेकादशपदै
स्ततः पीते तु श्रृंखले ॥ षड्भिः पदैरुभयतो भद्रं षोडशपादजम् ॥६४॥ आरक्तं हि सितावाप्यो दशाष्टा दश-
पादजाः ॥ कृष्णान्यष्टादशपदे नव लिंगानि कारयेत् ॥६५॥ मस्तकोपरि भद्रस्य लोहिते श्रृंखले शुभे ॥ द्वा-
भ्यां पदाभ्यां च पृथक् मद्ये हरितश्रृंखला ॥६६॥ रचिता त्रिपदा रम्या वापीनां मस्तकोपरि ॥ आरक्ते द्वे पदे का-
र्ये चैकं हरितमुत्तमम् ॥६७॥ उभयोः पार्श्वयो लिंगमस्तकस्य सिते पदे ॥ एवं सर्वत्र बोध्दव्यं परिधिः पीतवर्ण-

कम् ॥६८॥सप्ताशीति पदैश्चेयं समाप्ता प्रथमाततिः॥प्रोच्यतेऽग्रे द्वितीया तु पंक्तिस्त्रिसप्तपादजा ॥६९॥
शशी च श्रृंखला वल्यौ श्रृंखले द्वेऽत्र पूर्ववत् ॥भद्रे विंशपदैर्ज्ञेयं नववाप्यस्त्रयोदशै ॥१७०॥पदैरष्टात्र लिंगानि
भद्रयोर्मस्तकोपरि ॥द्वाभ्यां कार्ये श्रृंखलेऽत्र लोहिते ह्यंतरे तयोः॥७१॥* पूर्ववत्सकलं ज्ञेयमेकषष्ठि पदैः शुभः
॥ परिधिः पीतवर्णैश्च जाता पंक्ति द्वितीयका ॥७३॥ऊनैकेन पदाषष्ठि पदैः पंक्तिस्तृतीयका॥ भद्रं षड्भि पदैः
प्रोक्तं सप्तलिंगानि कारयेत् ॥७४॥वसुवाप्यः स्मृताः शेषं पूर्ववच्च प्रकीर्तितम्॥सप्तचत्वारिंशपदैः परि-
धिश्च प्रकीर्तितः ॥७५॥जाता तृतीयापंक्ति र्हि चतुर्थार्थं निगद्य ते ॥ पंचचत्वारिंश पदैरियं पंक्तिरुदाहृता ७६
भद्रमर्कपदैर्ज्ञेयं पंचवाप्योत्र कीर्तिताः॥तुर्य लिंगानि कार्याणि भद्रस्य मस्तकोपरि ॥७७॥आरक्ता षड्दाव-
ल्लि परिधिस्त्रि त्रिभिः पदैः ॥ जाता चतुर्थ पंक्ति र्हि पंचमैक त्रिभिः पदैः॥७८॥भद्रं नवपदं ज्ञेयं त्रिवाप्यौ द्वौ हरौ
स्मृतौ ॥त्रिपदा श्रृंखला रक्ता भद्रस्योपरिकीर्तिता ॥७९॥ एकोनविंशपदजः परिधिः संप्रकीर्तितः ॥जातेयं पं
चमा पंक्तिस्त्वग्रे सप्तदशैः पदैः ॥१८०॥चतुष्कोण समंतत्र सर्वतोभद्रमालिखेत् ॥तस्यापि क्रम एवायं त्रिप-
दश्च शशी सितः ॥८१॥कृष्णाः पंचपदैः कार्याः श्रृंखलाः सर्वतः शुभाः ॥ पदैरष्टादशै र्लिंगे पश्चिमे तस्यपार्श्व-
योः ॥८२॥त्रयोदशपदै वाप्यौ भद्रे तुर्य पदात्मके॥ याम्य प्रागुत्तरेष्वेव मध्यस्तिस्त्रश्च वापिकाः ॥८३॥ भद्रं
नवपदैः कार्यं वल्यो दशपदात्मिकाः॥ वल्योः स्थाने पश्चिमेऽत्र आद्यंते हरिते पदः॥८४॥ मध्येत्र त्रुटिता वल्लि
भद्रं यच्च नवात्मकम् ॥ तस्योपरि पदाभ्यां हि रक्तात्र श्रृंखला स्मृता ॥८५॥वापिनां मस्तके कार्यं पदं रक्तं च
पार्श्वयोः॥ सिते द्वे द्वे पदे कार्ये परिधिः पंचपादजः ॥८६॥ रक्तमष्टदलं मध्ये कार्यं नवपदात्मकम् ॥ कर्णिका

---

* द्विपदा श्रृंखला पीता हरिता त्रिपदास्मृता ॥ आरक्तं च पदं कार्यं वापिनां मस्तकोपरि ॥७२॥

पीतवर्णा च बाह्या परिधयः क्रमात् ॥८७॥ पीत शुक्ल रक्त कृष्णाः सैकविंश शतात्मकम् ॥ कथितं लिंगतोभ-
द्रं सर्वेषां मुकुटोपमम् (३) ॥८८॥ प्रकारांतरमन्यच्च शृणु शिष्य ब्रवीमिते ॥ तिर्यगूर्ध्वं कृता रेखास्त्र्यधिका शत-
संख्यकाः ॥८९॥ शतं द्व्यधिक कोष्ठेषु रचयेल्लिंग पंक्तयः ॥ नवाष्ट रसचत्वारि व्द्येकसंख्याश्चतुर्दिशम् ॥१९०॥
लिंगसंख्याधिका वापि प्रतिपंक्ति भवेदिह ॥ षट्सु परिधय स्तत्र षड्भदांते तु वापिकाः ॥९१॥ कोणेष्विंदुः शृंख-
ला च वल्ली च रचये क्रमात् ॥ त्रिपंचैकादशपदै र्लिंगं त्र्यष्ट (२४) मितं त्रिषट् ॥९२॥ वापि भद्राणि क्रमशः ष-
ट्त्रिंश विंश तत्वजम् (२५) ॥ त्रिं (३०) षट्त्रिंश (३६) विंशच्चांतिम पंक्तेश्च पार्श्वके ॥९३॥ एकस्मिन्रचयेल्लिंग
द्वयं भद्रे रसात्मके ॥ तस्योपरि भवेत्सर्वतोभद्रं तत्र वापिका ॥९४॥ चतुर्विंश पदाभद्रमंकसंख्यं (९) ततः प-
रम् ॥ परिध्यंते तुर्य तुर्य (१६) पदै पद्मं समुध्दरेत् ॥९५॥ चित्रं वा लोहितं लिंगं शृंखले कृष्णवर्णके ॥ हरिता
वल्लरी भद्रं रक्तं शुध्दे ऽब्जवापिके ॥९६॥ एकविंशोत्तरशतं लिंगतोभद्रमीरितम् (४) ॥ प्रकारांतरमन्यच्च शृणु
शिष्य ब्रवीमिते ॥९७॥ षष्ठाधिकाशीति रेखा स्तिर्यगूर्ध्वं प्रकल्पयेत् ॥ पंचाशीति पदानिस्युः पंक्तयेस्तत्र
सर्वतः ॥९८॥ तत्र षड्भदांतेस्यात्परिधिः पीतवर्णकः ॥ सर्वतो ऽनेन विधिना चतुः परिधयः क्रमात् ॥९९॥ तासु
वै कोष्ठ पंक्तिषु लिंगादि रचयेद्धिया ॥ कोणेषु त्रिपदश्चंद्र स्तदादि शृंखलामता ॥२००॥ ततो वल्लि ततो भद्रं
वापि लिंग क्रमाद्भवेत् ॥ तत्र प्रथमपंक्तौ तु शृंखला पंचपादिका ॥१॥ एकादशपदा वल्ली शृंखला षट्पदा-
त्मिका ॥ भद्रमर्क पदं वापि त्रिषट् कोष्ठैः प्रकल्पयेत् ॥२॥ ईशानस्तन्मितः कार्य एवं ते नवसंख्यया ॥ भवंति वा-
प्यो दशता भद्र द्वयमभिप्सितम् ॥३॥ द्वितीय पंक्तौ वापि तु त्रयोदश पदामता ॥ भद्रं तु षट्दशपदं शेषं पूर्व

समीरितम् ॥ ४ ॥ अष्टौ लिंगानि वाप्यस्तु भवंति नवसंमिताः ॥ तृतीयायां तुर्यपदं भद्रं शेष तु पूर्ववत् ॥ ५ ॥ अ-
ष्टौ वाप्यः सप्त हराः क्रमशस्युः समुद्धृता ॥ द्वे वाप्यावंतिमे न्यूने त्रिभिः कोष्ठैस्तु संस्मृते ॥ ६ ॥ चतुर्थ पंक्तौ
वाप्यस्तु चतस्त्रः शंकरत्रयम् ॥ भद्रं द्विदशकं ज्ञेयं शेषं पूर्ववदुद्धरेत् ॥ ७ ॥ चतुर्थ परिध्युपरि बाणांते परि-
धिर्भवेत् ॥ तत्पंक्तौ श्रृंखले न्यूने पदेनैकेनवल्लरी ॥ ८ ॥ द्वाभ्यां पदाभ्यां चंद्रस्तु यथापूर्वं प्रकल्पयेत् ॥ भद्र
द्वयं षट्षट्पदे त्वन्ये भद्रे नवात्मके ॥ ९ ॥ त्रयोदशपदैर्वापि त्रयं तत्र प्रकल्पयेत् ॥ भद्रयोरूर्ध्वस्याभ्दद्रद्वयं ष-
ट्षट्पदं शुभम् ॥ २१० ॥ संशिष्टानि पदान्येव श्रृंखलार्थे नियोजयेत् ॥ तस्योपरि परिधिस्तु बाणांते परिकल्प-
येत् ॥ ११ ॥ उभयोरंतरे वापि त्रयोदश पदात्मिका ॥ १२ ॥ भद्रद्वयं षट्षट्पदं शेषं सर्वं यथोदितम् ॥ अंतिमेतः
पंच पंच पदै पद्मं समुद्धरेत् ॥ १३ ॥ रक्तं वा चित्रवर्णं च श्वेतश्चंद्रोऽसितामता ॥ श्रृंखला हरिता वह्निपीतं
तच्छुंखला द्वयम् ॥ १४ ॥ रक्तं भद्रं सिता वापि लिंगं कृष्णं प्रकल्पितम् ॥ लिंगस्कंधगताः कोष्ठाः शोभा को-
ष्ठाः प्रकल्पयेत् ॥ १५ ॥ पदानि शेषभूतानि यत्र क्व च भवंति वै ॥ तानि तत्र यथायोग्यं धिया सम्यग्नियो-
जयेत् ॥ १६ ॥ यद्वा तूर्य परिध्यूर्ध्वं त्वेकादश पदात्परम् ॥ परिधिःस्यास्तयोर्मध्ये कोणे चंद्रो यथोदि-
तः ॥ १७ ॥ श्रृंखला दशपादास्या द्वल्लीस्यादेकविंशतिः ॥ श्रृंखलान्या रुद्रपदा भद्रं त्रिंशपदात्मकम् ॥ १८ ॥
एकषष्ठि पदैर्वापि सम्यग्बुद्ध्या प्रकल्पयेत् ॥ अथवा द्वे पदे चान्ये संयोज्य गिरि हस्तिषु (८७) ॥ १९ ॥ पदे-
षु रचयेब्दुद्ध्या लिंगानां पदयः क्रमात् ॥ नवाष्ट रसत्रिण्येकाः शेषं पूर्व यथोदितम् ॥ २२० ॥ विशेषस्तत्र
भद्रेषु षट्लिंगे षोडशात्मकम् ॥ एकलिंगे विंशपदं द्वाभ्यामन्यत्र चाधिकम् ॥ २१ ॥ पूर्ववत्सर्वतोभद्रं पद्मं

॥आ·रा·॥
मनोहरकांड

सर्गः ५
॥३७॥

वर्णास्तु पूर्ववत् ॥ पीत शुक्ल रक्त कृष्णा बहिः परिधयः स्मृतः ॥२२॥ एतदष्टोत्तरशत लिंगतोभद्रमीरि-
तम् (५) ॥ प्रकारांतरमन्यत्ते शृणु शिष्य ब्रवीमियत् ॥२३॥ तिर्यगूर्ध्वं गता रेखा नवाष्ट । लोहिताःस्मृताः ॥ त-
त्कोष्ठेष्वब्धि (४) नेत्राग्नि(३) कोष्ठकै रचयेद्धिया ॥२४॥ सर्वतोभद्रकं रम्यं परितः परिधिर्मतः ॥ ततो रस र-
सांतेस्युश्चतुः परिधयः शुभाः ॥२५॥ तत्र चतुर्षु पार्श्वेषु कोणेंदुस्त्रिपदः स्मृतः ॥ शृंखला पंचभिर्वल्लि त्वेकादश
पदामता ॥२६॥ लिंगं चतुर्विंशपदं वापि त्वष्टादशाभवेत् ॥ नवसप्त तथा पंच युग (४) नेत्र (२) मिताः शिवाः ॥२७॥
पंचपंक्तय एवस्युर्वापिकै काधिका ततः ॥ तुर्य (४) लिंगाति मे वाप्यौ त्रयोदश पदात्मिके ॥२८॥ षडंकार्क रस ६
रसभद्र संख्या क्रमाद्भवेत् ॥ सर्वतोभद्रके वापि युग नेत्र मिता तथा ॥२९॥ नवकोष्ठमितं भद्रं शेषं सर्वं तु पूर्वव-
त् ॥ ततोऽतः परिधिः कार्यस्तत्र पद्मं समुद्धरेत् ॥२३०॥ श्वेतोऽब्जः शृंखला कृष्णा नीला वल्लरिकारुणम् ॥ भ-
द्रं वापि सिता कृष्णं लिंगं परिधयोंतिमाः ॥३१॥ पीत शुक्ल रक्त कृष्णा ज्ञेयाः पीताश्च मध्यमाः ॥ एतदष्टोत्त-
रशतं लिंगतोभद्रमीरितम् (६) ॥३२॥ तिर्यगूर्ध्वं पंचपंच रेखाः कार्या सुलोहिताः ॥ तत्कोष्ठेषु परिधयः षट्
षडंते त्रयः स्मृताः ॥३३॥ त्रिद्व्येक लिंगरचना चतुर्विंशति पादिका ॥ वापि त्वष्टादशपदा षट्त्रिंश द्विदशांक-
कम् (९) ॥३४॥ भद्रं भद्रं पीतमन्यद्भद्रपार्श्वे प्रकल्पयेत् ॥ प्रथमं नवपादास्या द्वितीयं षड्पदात्मकम् ॥३५॥ वा
पि पार्श्वे च त्रिपदा शृंखला लोहिता भवेत् ॥ प्रतिपार्श्वं भवेदेतच्छृंखला पंचपादिका ॥३६॥ अेकादश पदावल्लि
त्रिपदश्चंद्र ईरितः ॥ चतुर्विंशपदैर्ज्ञेयं लिंगं परमसुंदरम् ॥ मध्ये चंद्रः शृंखला च त्रिपदा षट्पदालता
॥३७॥ भद्रमर्कपदं लिंगमष्टाविंश पदात्मकम् ॥ लिंगमस्तकपार्श्वस्थे पदानि पीतकानि तु ॥३८॥ लिंगं कृ-

ष्णं सिता वापि भद्रं रक्तं सितः शशी ॥ श्रृंखला कृष्णा हरिता वल्लीवर्णास्त्वितीरिताः ॥३९॥ परिधिः पीतव-
र्णस्यात्पदान्युर्वरितानि तु ॥ यथेष्टं रंजयेदेतद्बाणाक्षि लिंग२५ साधनम् ॥२४०॥ पीत शुक्ल रक्त कृष्णा
बाह्याः परिधयः क्रमात् ॥ प्रकारांतरमन्यद्वा श्रृणु शिष्य ब्रवीम्यहम् (७) ॥४१॥ चंद्राब्धि ४१ पद संख्य-
सु सर्वतस्तत्व संमितम् ॥ लींगपीठं विरचयेत् षडंते परिधीमतौ ॥४२॥ तयोन्तरर्वाक् लिंगपंक्ति द्वयं स-
म्यक् प्रकल्पयेत् ॥ अष्टादशपदं लिंगं बापि त्रिदशपादिका ॥४३॥ त्रिपदोऽब्जः श्रृंखला च पंचपादैश व-
१३
ल्लरी ॥ प्रथमा युगलिंगान्या पंक्तिर्लिंगद्वयान्विता ॥४४॥ आदौ भद्रं नवपदं परं भद्रं तु षट्पदम् ॥ परिद्ध्यं-
ते त्रयस्त्रिंशत्कोष्ठै लिंग प्रकल्पयेत् ॥४५॥ मूलस्कंधौ सप्तसप्त पदजौ षट्पदैः शिरः ॥ पंचपंचपदैः पार्श्वौ
कटिः शंभोस्त्रि पादजः ॥४६॥ चतुर्दिक्षु हरस्या च चतुर्भद्रं नवांघ्रिकम् ॥ चंद्रोत्र त्रिपदो ज्ञेयः श्रृंखला द्वि-
पदा स्मृता ॥४७॥ वल्लरी पंचपादास्याच्छृंखलान्या त्रिपादजा ॥ लिंगस्कंध गता कोऽपि पीताः कार्याः
शुभावहाः ॥४८॥ अन्यानि शेषभूतानि पदानि पूरयेद्धिया ॥ यथेच्छं वै परिधयः कार्या वेदमिता बहिः
॥४९॥ पंचविंशच्छिवै रेतौ प्रकारौ द्वौ मयोदितौ ॥ अतिप्रियौ शंकराय ज्ञातव्यौ द्विजसत्तमा ॥२५०॥ नम-
स्कृत्वा महद्ब्रह्म गुरुपाद सरोरुहम् ॥ संसारतारकं वक्ष्ये कथामध्यात्मसंग्रहम् ॥५१॥ पंचविंशति संख्या-
कं लिंगतोभद्रमीप्सितम् ॥ केनचित्कल्पितं तत्किं तत्वं तत्कथ्यते स्फुटम् ॥५२॥ लिंगतोभद्रमित्येतो नि-
रुक्तमर्थवद्भवेत् ॥ लिंगगमकमित्याहु ज्ञानं ज्ञापकमित्यपि ॥५३॥ पीयूषवापनाद्वापि भद्रंभद्र समीक्षणात्
साध्य शद्बो प्रसिध्दं हि वर्तते साधनेष्वपि ॥५४॥ तद्ब्रह्म परमं लिंगं मंगलं भद्रवाचकम् ॥ मंगलं मंग-

लानां च शिवं शांतमितिस्फुटम् ॥ ५६॥ लीयंते यत्र भूतानि निगच्छंति यतः पुनः॥ तेन लिंग परं व्योम निष्कलः परमः शिवः ॥५७॥ सत्वं रज तमो वर्णत्रय माया सुवेष्टितम्॥ तमश्चंद्रो महामोह श्रृंखला स्नेह वल्लिका ॥५८॥ तैरिदं सर्वतस्तत्वं वेष्टितं घटव्योमवत्॥ तिर्यगूर्ध्वमहंकारः प्रसृतः पट तंतुवत् ॥५९॥ तेन स्थानानि जातानि लक्षाणांचतुरष्ट ८४ हि ॥ गुणास्तेषु प्रपुर्यंते यथा चित्रपटोभवेत् ॥२६०॥ आसीदेकं पुरा तत्वं तस्मिन्मायानुयोगतः॥ कामो बहुधा भवति भवेयमिति सादरम् ॥६१॥ एकः सन्नीति चात्मानं स्वयमकुरु तेतिच ॥ इंद्रो मायाभिरिति च एकधा बहुधेति हि ॥६२॥ ऊचुश्च श्रुतयः साध्व्यो ब्रह्मणाभवनं प्रति ॥ तज्जलानिति च श्रुत्या न ततोऽस्ति हि किंचन ॥६३॥ यद्यप्येवं यथाप्यस्मिन्न स्थितिर्मोहतो भवेत्॥ यावदहं कृतो भाव स्तावत्संसार आयतः ॥६४॥ भिन्ने हेमिदृढग्रंथौ न संसारस्तदाश्रयः ॥ गते तेजस्यंबुधया स्वप्नो निद्रानुगो यथा ॥६५॥ एतदर्थं विरक्तः सन् जिज्ञासुः श्रेयमुत्तमम्॥ आश्रयेत्सद्गुरुं साक्षाद्ब्रह्मभूत निरामयम्॥६६॥ तेन प्रबोधितः सिद्धमात्मानं संतमात्मनि ॥ जानियाद्ब्रह्मभावेन जगच्चित्रे स्थितः सदा ॥६७॥ ईश्वरः सर्वभूतानां हृद्देशे संस्थितोमलः॥ एको द्वितीयःपरमोनांतः प्रज्ञादि लक्षणः॥६८॥ अक्षर सच्चिदानंदोऽमरोजर उशत्तमः॥ निर्विकारो निराकारो निरामय उदीरितः॥६९॥ अलिंगो रूप एवासावेकत्व गणनात्परः॥ मायया लिंगरूपीव ह्येक एत्यभि धीयते ॥२७०॥ पुरुषश्च प्रकृतिश्च व्यक्तोऽहंकार एव च ॥ चतुर्लिंगानि प्रोक्तानि लक्षकानि शिवस्य च ॥७१॥ कार्यकारण भूतानामेकमेव हि पंचकम् ॥ सत्वं रजस्तम इति वसु लिंगानिचात्मनः॥७२॥ दशेंद्रियाणि च मनोबुद्धि द्वादशकं स्मृतम्॥ लिंगानां परमे-

शस्य विवेकोत्र प्रतिष्ठितः ॥७३॥ इति कारण लिंगानि कार्य लिंगान्यनेकशः ॥ शतं सहस्रमयुतं कोटिशः
संति संख्यया ॥७४॥ सर्वाणि ज्ञापकान्येव शिवस्य परमात्मनः ॥ वस्तुतस्तु परं तत्व सजातीयादि हीनकम्
॥७५॥ विचारे वर्तमाने तु तंत्वाद्येव पटादि न ॥ एवं सर्वं शिवो भाति न सर्वं शिव एव हि ॥७६॥ बिंदुनाद
मकारादि मात्रा त्रयमुदीरितः ॥ आत्मैव पंचधा साक्षात्तथा ब्रह्मेश्वरोहरिः ॥७७॥ विधि रुद्रौ हरिः पंच स-
द्योजातादि रूपकः ॥शुद्धेः साक्षि तथा प्राज्ञस्तैजसो विश्व एव च ॥७८॥ सच्चित्सुखत्रयं नाम रूपे ब्र
ह्मैव केवलम् ॥जातं पंचात्मकं नान्य ब्रह्मे वेदमिति श्रुतिः ॥७९॥ प्रधानं महदहं च पंचतन्मात्रकं ततः ॥
अष्टप्रकृति ते तच्छास्त्रेषु परिगीयते ॥२८०॥ अष्टमूर्ति स्वरूपं सद्भव सर्वादि नामभृत् ॥ वस्वाष्टक स्वरू-
पेण मायया भाति सर्वतः ॥८१॥ ज्योतिर्लिंग द्विषड्कं च द्वादशादित्य नामकम् ॥ दशेंद्रिय मनोबुध्दि नाम-
भिर्भाति सस्फुटम् ॥८२॥ दशेंद्रियाणि च प्राणपंचकं भोगपंचकम् ॥ चतुश्चतुष्कमात्मैव पंचविंशे मतो बुधैः
॥८३॥ लक्षाणां चतुरशीति भोगायत विस्तरः ॥तस्यैव कल्पते भ्रांत्या कर्मभिर्गुणभेदतः ॥८४॥ जाग्रत्स्व-
प्न सुषुप्तं च भोगस्थानानि स्वात्मतः ॥ भोगो भोक्ता भोजयिता सर्वं ब्रह्मैव न पृथक् ॥८५॥ अध्यात्ममधिदै-
वं च ह्यधिभूतमिति त्रिधा ॥ स्थूलं सूक्ष्मं कारणं च सर्वं ब्रह्मैव न पृथक् ॥८६॥ एतज्ज्ञानं च ध्यानं च विवे-
कश्च विरागता ॥जीवेश्वर जगद्ज्ञानमात्मैवेति न तु पृथक् ॥८७॥सर्वं खल्विदमिति-चेदं सर्वं पदयमात्मा॥ ब्रह्मै-
वेदं सर्वमिति श्रुतयः प्रवदंति हि ॥८८॥ अयं सिध्दस्य विषयो यत्सर्वात्म नि दर्शनम् ॥ आरुरुक्षुः शांत दांत
तितिक्षुः सर्वतो भवेत् ॥८९॥ स्वदेशे पाप्त पुरुषं निबध्नंति वशीकृतम् ॥ तेमामि विषयाः प्रोक्ता मुमुक्षु

स्तान् विवर्जयेत् ॥२९०॥ विविशे‥ विलध्वाशीत्यादि भागवतं वचः॥ किंबहुक्तेन विधिना समाशास्त्रं ‥ हृद्गतम् ॥९१॥ दत्तं मे गुरुणा किमप्य जडमानंदात्मवस्त्वद्वयं - यत्सेवा तददं तदात्मकमहं त्वंचाशु नष्टंतमः॥ आःपूर्णं सहसोदितं महऋतं गंभीरमव्याकृतं - येनाच्छादितमिंदु सूर्य पवनं विश्वं विशेषात्मकम् (८)॥९२॥ तिर्यगूर्ध्व गता रेखा चत्वारिंशत्समाशुभाः॥ तासामंक ९ त्रिकोष्ठेषु ३१ परिधि द्वौ प्रकल्पयेत् ॥९३॥ सप्तांते प्रथमा न्यस्तु ततो बाणांत कोष्ठके॥ तन्मध्ये रुद्ररुदेषु १२१ पदेष्वष्टादशैः पदैः॥९४॥ लिंगमेकं खंडवाप्यौ तुर्यतुर्य पदात्मिके॥ अष्टकोष्ठात्मकं भद्रं पोक्तं पार्श्वचतुष्टये॥९५॥ श्रृंखला द्विपदा चंद्रस्त्रिपदो वल्लरी तथा॥ पंचपादैः स्मृता वल्यौ त्रिपार्श्वेषु निमीलयेत् ॥९६॥ द्वितीये त्रिपदश्चंद्रः श्रृंखला वेदपादिका॥ वल्ली नवपदा भद्र त्रयं नवनवात्मकम् ॥९७॥ त्रयोदशपदं वापि द्वयं पार्श्वे तु श्रृंखले ॥ द्विपदे रक्तवर्णे च भद्रं तुर्य पदं हरित् ॥९८॥ प्रतिपार्श्वे भवेदेतत्प्रथमाद्यः सुयोजयेत् ॥ प्रतिपार्श्वे चतुर्लिंगं वापीनां पंचकं तथा॥९९॥ अष्टादशपदं लिंगं वापि त्रयोदशात्मिका॥ भद्रं रसपदैर्ज्ञेयं वह्नि रुद्र ११ पदात्मिका ॥३००॥ श्रृंखला पंचभिः पादैस्त्रिपदश्चंद्र ईरितः॥ लिंगोपरि तनावीथि नीलावल्या नियोजयेत् (९) ॥१॥ यद्वारसांते परिधि विधाय तदनंतरम् ॥ त्रिलिंगान्येक लिंगं च द्वयोः पंक्त्योः प्रकारयेत् ॥२॥ आदौ चंद्रकलं भद्रं परमर्कपदैः स्मृतम् ॥ श्रृंखला पंचभिर्वह्नि रुद्रकोष्ठा समीरिता॥३॥ वापि चतुष्टयं पूर्वं परं वापि द्वयं स्मृतम् ॥ पूर्ववत्सकलं ज्ञेयं बाह्याः परिधयः क्रमात् ॥४॥ पीत शुक्ल रक्त कृष्णा ज्ञेयाः सांख्यधिकाः शुभाः॥ एतत्सप्तेंदु लिंगाख्यं पीठं सम्यगुदाहृतम् (१०) ॥५॥ अथवास्मिन् त्रिकोष्ठानि व-

र्द्धयित्वा क्रमेण तु ॥ षष्ठांते परिधी कार्यौ तत्र लिंगानि योजयेत् ॥६॥ प्रथमे त्रिणि लिंगानि द्वितीये चैकमीरितम् ॥ चतुर्विंशपदैर्लिंगं वाप्यष्टादशपादजा ॥७॥ आदौ वेदमिता पादे द्वे वाप्यौ च द्वितीयके ॥आदौ नवपदं भद्रं द्वितीयेऽर्कपदं स्मृतम् ॥८॥ चंद्रावल्यादि पूर्वोक्तं मध्ये लिंगं प्रकारयेत॥ अष्टाविंशपदैर्ज्ञेयं चतुःपादै शिरःकटिः ॥९॥ अर्कह्यर्क पदे खंड वाप्यौ द्विपद श्रृंखलाः ॥ पंचपादा स्मृता वल्ली त्रिपदा पीत श्रृंखला ॥१०॥ अर्कपादैश्च तुर्दिक्षु मध्ये भद्रचतुष्टयम् ॥ चंद्रश्च त्रिपदः कोणे शिवमस्तक पार्श्वके ॥३११॥ नेत्रार्थं द्वे पदे शुक्ले शेषानि च पदानि हि ॥ लिंगपार्श्वे पंचपंच येथेच्छ तानि पूरयेत् ॥१२॥ पीत शुक्ल रक्त कृष्णा बहिः परिधयो मताः ॥ एतत्सप्तादश लिंगै लिंगतोभद्रमीरितम् ॥१३॥ दशकं करणानां च प्राणानां पंचकं मतः ॥ षोडशेमाः कला आत्मा साक्षी सप्तादश स्मृतः (११) ॥१४॥ अर्कलिंगात्मकं भद्रं श्रृणु शिष्य मयोच्यते ॥ प्रागुदिच्याय तारेखाः षट्त्रिंशद्धि प्रकल्पयेत् ॥१५॥ पदानि द्वादश शतं पंचविंशतिरेव च ॥ खंडेंदुस्त्रिपदः कोणे श्रृंखला षट्पदा स्मृता ॥१६॥ त्रयोदश पदावल्लि भद्रं तु नवभिः पदैः ॥ भद्रोर्ध्व त्रिपदा ज्ञेया द्वितीया पीतश्रृंखला ॥१७॥ त्रयोदश पदा वापि लिंगमष्टादशै स्मृतम् ॥ लिंगं नियम्य पंक्तौ तु शोभा काष्ठश्चतुर्दश ॥१८॥ तेषामुपरि पंक्तौ तु कोष्ठाः सप्तादशैव तु ॥ पूजा पंक्तिः सिता ज्ञेया परितः परिकल्पिता ॥१९॥ पूजा पंक्त्यंतरा पंक्तौ कोष्ठा अशीतिसंख्यया ॥ परिधिः स च विज्ञेयो मंडलांतर यो द्वयोः ॥३२०॥ परिध्यंतर कोष्ठेषु सर्वतोभद्रमालिखेत् ॥ विशेषश्चाति विज्ञेयोः श्रृंखला षट्पदं भवेत् ॥२१॥ त्रयोदश पदावल्लि भद्रं तु द्वादशै पदै ॥ पंचविंशत्पदा वापि परिधिः षोडश-

त्मकः ॥२२॥ मध्ये नवपदैः पद्मं कर्णिका केसरान्वितम्॥ सत्वं रजस्तमो वर्णाः परितो मंडलस्य च ॥२३॥ त्रयः
परिधयः कार्यास्तत्र द्वाराणि कारयेत्॥ सितेंदुः शृंखला कृष्णा वल्ली नीला प्रपूरयेत्॥२४॥ भद्र रक्तं शृंखलान्या
पीता वापि सिता स्मृता ॥ लिंगानि कृष्णवर्णानि पार्श्वेषु द्वादशैव तु ॥२५॥ परिधिः पीतवर्णस्यात्कमलं चंचवर्ण-
कम्॥ कर्णिका च केसराणि पीतवर्णानि कारयेत्॥(१२) ॥२६॥ प्रकारांतरमन्यं ते शृणु शिष्य मयोच्यते ॥ पूर्वोत्त-
रगता रेखाः सप्तत्रिंशान्मिताः शुभाः ॥२७॥ तच्छट्त्रिंशत्पदेष्वेव सर्वतोभद्रमुत्तमम्॥ अब्धि४ नेत्रा२ग्नि
कोष्ठैश्च रचयेत्पूर्ववच्छुभम्॥२८॥ परिधिस्तत्समंताच्च प्रकल्पः पीतवर्णकः॥ अष्टोत्तरशते लिंगतोभद्र कथि-
तं यथा ॥२९॥ तस्य चतुर्षु पार्श्वेषु रचयेदर्क लिंगकम्॥ कोणे कोपो त्रिपदोऽब्जः शृंखला सप्तपादिका ॥३०॥
वल्ली मनुपदाभद्रं षट्त्रिंशेंदु वापिका ॥ लिंगं षड्विंशपदजं भद्रस्याद्वापिकोपरि ॥३१॥ लिंगपार्श्वपदान्येव षट्
पीतानि प्रकल्पयेत्॥ लिंगोपरि तनावीथि नीलावल्यो नियोजयेत्॥३२॥ चतुःपदैलिंगशीरस्तथा परिधयो
बहिः॥ सर्वाणि तु यथापूर्व मुक्तैर्वर्णैः सुरंजयेत्॥(१३) ॥३३॥ चतुर्विंशति रालेख्या रेखाः प्राग्दक्षिणायताः॥
कोणेषु शृंखला पंचपदावल्यश्च पार्श्वतः ॥३४॥ पदैर्नवभिरालेख्याश्चतुर्भिर्लघु शृंखला॥ लघुवल्यः पदैः ष-
ड्भिस्ततोऽष्टादशभिः पदैः ॥३५॥ कृत्वा लिंगानि वाप्यस्तु त्रयोदशभिरंतरा॥ ततो वीथिद्वये नैव पीठं कुर्या
द्विचक्षणः ॥३६॥ तस्य पादाः पंचपदाः द्वाराण्यपि तथैव च ॥ एकाशीतिपदं मध्ये पद्मस्वस्तिक मिष्यते॥३७॥
कोणेषु शृंखलाः कार्याः पदैस्त्रिभिरतःपरम्॥ पदैश्चतुर्भिर्दिक्षुस्युर्भद्राण्येषां समंततः ॥३८॥ एकादश पदावल्यो
मध्येऽदलमालिखेत्॥ पद्मं नवपदं ह्येतल्लिंगतोभद्रमिष्यते ॥३९॥ शृंखलाः कृष्णवर्णेन वल्ली नीलेन पूरयेत्

॥ रक्तेन श्रृंखला लघ्वी वल्ली पीतेन पूरयेत् ॥ ३४० ॥ लिंगानि कृष्णवर्णानि श्वेतेनाथवा पिका ॥ पीठं स्वपादं
श्वेतेन पीतेन द्वारपूरणम् ॥ ४१ ॥ मध्येस्युः श्रृंखला रक्ता वल्ली नीलेन पूरयेत् ॥ भद्राणि पीतवर्णानि पीता
पंकज कर्णिका ॥ ४२ ॥ दलानि श्वेतवर्णानि यद्वा चित्राणि कल्पयेत् ॥ तिस्रो रेखा बहिः कार्याः सित रक्ता सिताः
क्रमात् (१४) ॥ ४३ ॥ ऊर्ध्व लिंगोद्भवं ह्यष्ट लिंगतोभद्र मुच्यते ॥ अन्यन्मयातिरम्यं तच्छृणु शिष्यत्र कौतुका
त् ॥ ४४ ॥ अष्टाविंशति रेखाश्च तिर्यगूर्ध्व समंततः ॥ सप्तविंशति कोष्ठेषु षडंते परिधिः स्मृतः ॥ ४५ ॥ कोणेषु
त्रिपदैश्चंद्रः श्रृंखला पंचपादिका ॥ वल्यर्क पादजाभद्र षट्कं षट्पदात्मकम् ॥ ४६ ॥ ऊर्ध्वे भद्रे रविपदे पदैरष्टा-
दशैः शिवा ॥ आत्मनोऽभिमुखाः सर्वे कार्या अष्ट शुभावहाः ॥ ४७ ॥ त्रयोदशांघ्रिजा वापि तत्रयं पश्चिमे स्मृतम्
॥ पूर्वे त्वेका द्वे शकले शेषं सर्वं तु पूर्ववत् ॥ ४८ ॥ तिर्यग्भद्रे वेदपदे पदन्यूनोर्ध्व वल्लरी ॥ दक्षिणोत्तर पश्चा-
पि ...... नां शकलाष्टकम् ॥ उभयोर्लिंगयोर्माला स त्रिभिर्नयनै स्मृता ॥ ४९ ॥ सर्वत्र नेत्रौ द्वौ ज्ञेयौ दक्षिणो-
त्तरयोस्त्रिभिः ॥ पृथग्चत्वारि भद्राणि ह्यधोभद्रे चतुःपदे ॥ ३५० ॥ दक्षिणोत्तर दिग्भागे पूर्ववल्यौ च संधयेत्
॥ त्र्यंते मध्ये तु परिधिः ॥ पंचविंशैर्जलेरुहम् ॥ ५१ ॥ श्रृंखला द्विपदामध्ये वल्ली षट्पदजा स्मृता ॥ वाप्यै पंच-
पदै ज्ञेया भद्रं वेदपदात्मकम् ॥ ५२ ॥ सिता वापि शिवः कृष्णः पद्मभद्रे च लोहिते ॥ तिर्यक्भद्रे लिंगमाले परि-
धी पीतवर्णके ॥ ५३ ॥ नेत्रेंदु धवलौ कृष्णा श्रृंखला हरिता लता ॥ पद त्रयं हि वाप्यूर्ध्वं तद्यथारुचि पूरयेत् ५४
पीत शुक्ल रक्त कृष्णा बहिः परिधयः स्मृताः ॥ अष्टलिंगात्मकं ज्ञेयं लिंगतोभद्रमुत्तमम् (१५) ॥ ५५ ॥ अथवान्यौ
द्वौ प्रकारौ तौ प्रोच्येते श्रृणुतावपि ॥ द्वात्रिंशच्चरणेष्वेवं चतुर्लिंग तथाऽष्टकम् ॥ ५६ ॥ युक्त्या विरचये-

त्तत्र विशेषोथ निगद्यते ॥ अद्ये लिंग चतुर्विंश पदमष्टेंदु १८ वापिका ॥५७॥ भद्रं विंशपदं चान्ये लिंगमष्टादशात्मकम् ॥ भद्रं नवपदं शेषं यावदवधि योजयेत् (१६-१७) ॥५८॥ रेखात्वष्टादशा प्रोक्ताश्चतुर्लिंग समुद्भवे ॥ कोणेंदु स्त्रिपदः श्वेतस्त्रिपदैः कृष्ण श्रृंखला॥५९॥ वल्ली सप्तपदा नीला भद्रं रक्तं चतुष्पदम् ॥ भद्रपार्श्वे महालिंगं कृष्णमष्टादशैः पदैः ॥३६०॥ शिवपार्श्वे तु वापिं च कुर्यात्पंचपदां सिताम् ॥ पदमेकं तथा पीतं भद्रं वाप्यस्तु मध्यतः ॥६१॥ शिरसि श्रृंखला पार्श्वे कुर्यात्पीतं पदत्रयम् ॥ लिंगानां स्कंधतः कोष्ठा विंशति रक्तवर्णकाः ॥६२॥ परिधिः पीतवर्णस्तु पदैः षोडशभिः स्मृतः ॥ पदैस्तु नैवभिः पश्चात्पद्मं चित्रं सकर्णिकम् (१८) ॥६३॥ तिर्यगूर्ध्वगता रेखाः कार्या स्निग्धास्त्रयोदश ॥ कोणेंदुस्त्रिपदः कार्यः श्रृंखला त्रिपदा स्मृताः ॥६४॥ वल्ली च षट्पदा नीला भद्रं रक्तं प्रकल्पयेत् ॥ पदैर्द्वादशभिः स्पष्टं उत्तरे पूर्व दक्षिणे ६५ पश्चिमायां महारुद्रमष्टाविंशति कोष्ठके ॥ लिंगपार्श्वे तथा मूर्ध्नि ह्यष्ट कोष्ठास्तु पीतकाः ॥६६॥ लिंगमेकं तथा गौर्यास्तिलकं प्रोक्त मंडले ॥ पूजयेन्मंडलं चैव तस्य गौरी प्रसीदति (१९) ॥६७॥ प्रागुदिच्यां गता रेखाः कुर्यादेकोनविंशतिः ॥ खंडेंदुस्त्रिपदः कोणे श्रृंखला पंचभिः पदैः ॥६८॥ एकादशपदावल्ली भद्रं तु नवभिः पदैः ॥ चतुर्विंश पदावापि परिधिर्विंशतिः पदैः ॥६९॥ मध्ये षोडशभिः कोष्ठैः पद्ममष्टदलं स्मृतम् ॥ श्वेतेंदुः श्रृंखला कृष्णा वल्ली नीलेन पुरयेत् ॥३७०॥ भद्रारुणां सिता वापी पीता परिधिकर्णिके ॥ रक्तं वा चित्रितं पद्मं बाह्याः सत्वरजस्तमाः ॥ सर्वतोभद्रकं चेदं कर्तव्यं सर्वकर्मसु (२०) ॥७१॥ एवं लिंगतोभद्राणां रचनाः कथिता मया ॥ एताः शिव परा ज्ञेया न योग्या विष्णुपूजने ॥७२॥ रामलिंगात्मकं योग्यं ........ विष्णोर्हरस्य च

पूजने त्वेक एवात्र तद्विस्तारेण कथ्यते ॥७३॥ शिवस्य पूजने लिंगमुपास्यं परिचिंतयेत् ॥ उपासिका राममु-
द्रा ज्ञेया स्तद्दैवतान्यपि ॥७४॥ लिंगतोभद्र वच्चात्र समावाह्य निबुद्धितः ॥ रामतोभद्रकं यच्च ज्ञेयं वि-
ष्णु परं हि तत् ॥७५॥ रमारामेति वर्णैर्यच्चिन्हितं भद्रकं कृतम् ॥ धिया देवी परं तच्च ज्ञातव्यं सर्वकर्मसु
॥३७६॥ इति श्रीशतकोटि रामचरितांतर्गत श्रीमदानंदरामायणे वाल्मीकिये मनोहरकाण्डे रामदास-
विष्णुदास संवादे रामलिंगतोभद्राणां तथा लिंगतोभद्राणां रचना नाम पंचमः सर्गः ॥ शुभं भवतु ॥ ६ ॥
श्रीसीतारामचंद्रार्पणमस्तु ॥

नागपूर

माघ शु॥ १३ रोज मंगळवार शके १८७४

॥ श्रीगणेशाय नमः ॥ अथ सर्वतोभद्र देवता लिख्यते ॥ आचम्य० ॥ प्राणानायम्य ॥ देशकालौ स्मृत्वा ॥
रामतोभद्र देवतास्थापनं वा रामलिंगतोभद्र देवता स्थापनं वा रमानामतोभद्र देवतास्थापनं वा रमारामतो
भद्र देवता स्थापनं करिष्ये ॥ इति संकल्प ॥ ब्रह्मजज्ञानमिति मंत्रस्य वामदेव ऋषिः ॥ ब्रह्मादेवता ॥ त्रिष्टुप्
छंदः ॥ ब्रह्मा स्थापने विनियोगः ॥ ब्रह्मजज्ञानं० ॥ सर्वतोभद्र मध्ये ब्रह्माणमावाहयामि ॥ १ ॥ उत्तरे वापि प्रांत-
भागे ॥ आप्यायस्व० ॥ सोममावाहयामि ॥ २ ॥ ईशान्यां खंडें दौ ॥ तमीशानं० ॥ ईशानाय नमः ॥ ईशानमावा० ॥
॥ ३ ॥ पूर्वे वें वाप्यां ॥ त्रातारमिंद्र० ॥ इंद्रमा० ॥ ४ ॥ आग्नेयां खंडें दौ ॥ अग्निं दूतं० ॥ अग्निमावा० ॥ ५ ॥ दक्षिणावा-
प्यां ॥ यमाय त्वां० ॥ यममावा० ॥ ६ ॥ नैऋत्यां खंडें दु ॥ असुन्वतं ॥ निऋतिमावा० ॥ ७ ॥ पश्चिमे वाप्यां ॥ तत्वा
यामि० ॥ वरुणमावा० ॥ ७ ॥ वायव्ये खंडें दौ ॥ आनोनि युद्भिः ॥ वायुमावा० ॥ ९ ॥ वायु सोम मध्ये भद्रे निवेशनः
० ॥ ध्रुवं अध्वरं सोमं आपं अनिलं अनलं प्रत्युषं प्रभासमित्यष्ट वसूनावा० ॥ १० ॥ सोम ईशान मध्ये भद्रे ॥
नमस्ते रुद्र वीरभद्रं ॥ शंभु गिरीशं अजैकपदं अहिर्बुध्नं पिनाकिनं भुवनाधीश्वरं कपालिनं दिक्पतिं
स्थाणु रुद्रमित्येकादश रुद्रानावा० ॥ ११ ॥ ईशानेंद्र मध्ये भद्रे अकृष्णेन० ॥ भगं वरुणं सूर्यं वेदांगं भानुं
रविं ॥ गभस्तिं हिरण्यरेतसं दिवाकरं मित्रं आदित्यं विष्णुमितिद्वादशादित्यानावा० ॥ १२ ॥ इंद्राग्नि
मध्ये भद्रे अश्विना तेजसा ॥ अश्विनावा० ॥ १३ ॥ अग्नि यम मध्ये भद्रे ॥ ॐ समश्वर्णणिघृत ॥ सपैतृकान्वि-
श्वान्देवानावा० ॥ १४ ॥ यम नैऋति मध्ये भद्रे ॥ अभित्यं देवꣳस० ॥ यक्षानावाहयामि ॥ १५ ॥ नैऋति वरुण
योर्मध्ये भद्रे ॥ अयंगौः० ॥ भूता नागानावा० ॥ १६ ॥ वरुण वायु मध्ये भद्रे ॥ नदीभ्यः पौंजिष्टं० ॥ गंधर्वाप्स-

रसं आवा॰॥१७॥ब्रह्म सोम मध्ये वाप्यां ॥ यदक्रंदः॥स्कंदमा॰॥ नमः शंभवेति नंदीश्वरमावाह॰॥भद्रं-कर्णेभिरिति शूलमावा॰॥विश्वकर्माह्यजिष्ठमिति महाकालमावा॰॥१८॥ ब्रह्म ईशानमध्ये वल्लीषु अदि-तिर्द्यौः ऋक्षादीनावा॰॥१९॥ब्रह्मेंद्र मध्ये वाप्यां श्रीश्चते दुर्गामावा॰॥इदं विष्णुमावा॰॥२०॥ ब्रह्मा-ग्नि मध्ये वल्लीषु उदीरता स्वधामावा॰॥२१॥ ब्रह्म यम मध्ये वाप्यां परं मृत्यो मृत्युनावा॰॥२२॥ ब्रह्म निऋति मध्ये वल्लीषु गणानां त्वां॰ गणपतिमावा॰॥२३॥ब्रह्म वरुणमध्ये वाप्यां शन्नोदेवी॰ आपं आवाहयामि ॥२४॥ब्रह्म वायुमध्ये वल्लीषु मरुतोयस्य॰मरुतमावा॰॥२५॥ब्रह्मणः पादमूले कर्णिका अधः स्योना पृथिवी॰ पृथ्वीमावा॰॥ तत्रैव पंचनद्य गंगादि सर्व नदीमावा॰॥ तत्रैव धाम्नो धाम्नोराजं स्त-तो॰ सप्तसागरानावा॰॥२६॥ततः कर्णि परिनम मंत्रेण मेरुमावा॰॥२७॥ततः पीत परिधौ सोमादि सन्निधौ क्रमेण आयुधानिधानि ॥ सोम समिपे गदामावा॰॥२८॥ईशान समिपे त्रिशुलमावा॰॥२९॥इंद्र समीपे वज्रमावा॰॥३०॥अग्नि समीपे शक्तिमावा॰॥३१॥यम समीपे दंडमावाहयामि॥३२॥निऋतिसमीपे खड्गमावा॰॥३३॥ वरुणसमीपे पाशमावा॰॥३४॥ वायुसमीपे अंकुशमावा॰॥३५॥ पुनः सोमस्योत्तरे गदस-मीपे गौतममावा॰३६ ईशान्यां भरद्वाज मावा॰॥३७॥ पूर्वे विश्वामित्रमावा॰॥३८॥ अग्नेय्यां कश्यपमावा॰ ॥३९॥ दक्षिणे जमदग्निमावा॰॥४०॥ नैऋत्यां वसिष्ठमावा॰॥४१॥पश्चिमे अत्रिमावा॰॥४२॥ अग्नेय्यां कौ-मारीमावा॰॥४३॥ दक्षिणे ब्राम्हीमावा॰॥४४॥ नैऋत्यां वाराहीमावा॰॥४५॥पश्चिमे चामुंडामावा॰॥४६॥वाय-व्ये वैष्णवीमावा॰॥४७॥उत्तरे माहेश्वरीमावा॰॥४८॥ईशान्यां वैनायकीमावा॰॥४९॥अष्ट दलमध्ये सूर्य-

मावा०॥ बाह्यपूर्वाद्यष्टदिक्षु यथास्थानेषु पूर्वे सोममावा०॥५१॥ आग्नेय्यां भौममावा०॥५२॥ दक्षिणे बुधमावा०॥५३॥ नैऋत्यां बृहस्पतिमावा०॥५४॥ पश्चिमे शुक्रमावा०॥५५॥ वायव्यां शनिश्चरमावा०॥५६॥ उत्तरे राहुमावा०॥५७॥ ईशान्यां केतुमावा०॥५८॥ एताः देवताः सर्वतोभद्र प्रतिष्ठाप्य॥ परिधि भूत पंक्तौ ॥ सुषेणमावा०॥५९॥ सर्वेषु लिंगेषु रुद्रमा०॥६०॥ सर्वासु वापिषु नलमावा०॥६१॥ सर्वेषु भद्रेषु सुग्रीवमावा०॥६२॥ सर्वेषु तिर्यक्‌भद्रेषु गवयमावा०॥६३॥ सर्वासु पीतश्रृंखलासु अंगदमावा०॥६४॥ सर्वासु कृष्णवर्ण श्रृंखलासु बिभीषणमावा०॥६५॥ सर्वासु वल्लीषु जांबवंतमावा०॥६६॥ सर्वेषु खंडेषु मैंदमावा०॥६७॥ सर्वेषु परिधिषु द्विविदमावा०॥६८॥ मुद्रायां रामंजानकी मावाह०॥६९॥ मुद्रायाः पश्चिमे पीतपरिधौ लक्ष्मणमावा०॥७०॥ मुद्रायाः उत्तरे भरतमावा०॥७१॥ दक्षिणे शत्रुघ्नमावा०॥७२॥ मुद्रायाः पुरतः वायु पुत्रमावा०॥७३॥ बहिस्त्रिपरिधिषु श्वेतपरिधौ भागीरथी मावा०॥७४॥ रक्तपरिधौ सरस्वतीमावा०॥७५॥ कृष्ण परिधौ यमुनामावा०॥७६॥ एवमेव रमाराम सर्वतोभद्रेऽपि आवाहनं कार्यम्॥७७॥ रमानामभद्रे मुद्रायामे विशेषः ॥ आदौ रमामावाह्य राममावाह्येत्॥७८॥ एवमावाहनं कृत्वा षोडशोपचारैः पूजयेत्॥ शेषान्येन दिग्बलिः कार्यः॥ ६ ॥ ६ ॥ × × ॥ × × ॥ × × ॥

इति आनंदरामायणांतर्गत रामतोभद्र देवता स्थापनम्॥

॥श्रीगणेशायनमः॥ श्रीरामदासउवाच ॥शिष्य यद्यत्प्रियं तस्मै रामाय तद्वदाम्यहम्॥मासेषु चैत्रमासस्तु राघवस्यातिवल्लभः॥१॥पक्षयोः सीतपक्षस्तु प्रियोस्ति राघवस्य हि॥सर्वासु तिथिषु श्रेष्ठा नवमी राघवप्रिया॥२॥सूर्यवंशसमुद्भूतस्तस्माच्च भानुवासरः॥प्रियोऽति राघवस्यैव नक्षत्रेषु पुनवर्सु॥३॥
चंपकः पुष्पजातौ हि तुलसी च तथैव च॥अथवा नवकं चापि पुष्पाणां राघवप्रियम्॥४॥जाति चंपक मंदारौ तुलसी मुनिमालति॥दमनः केतकी सिंहि पुष्पाणां नवकं स्मृतम्॥५॥तथा नवविधं चान्नं राघवस्यातिवल्लभम्॥मोदको लडुको मंडो पूर्णगर्भाथि फेनिका॥६॥वटकः पर्पटः खाद्य घृतपक्वो नवत्विति॥
एतानि नवभक्षानि राघवस्य प्रियाणि हि॥७॥अथवाऽन्यत्प्रवक्ष्यामि दिव्यान्ननवकं शुभम्॥मोदको लडुको मंडो वटकः फेनिका तथा॥८॥वरान्नमोदनः शाकं पायसं नवकं स्मृतम्॥अन्यच्छ्रुणुष्व भो शिष्य नवान्नं राघवप्रियम्॥९॥एकाशिति कुडवं च गोक्षीरं तंदुलास्तथा॥सपाद द्वि कुडवाश्च मुद्गाश्च वितुषास्तथा॥१०॥कुडवस्त्वेक एवाथ शर्करा कुडवा नव॥त्रि कुडवं मधु प्रोक्तं घृतं च कुडवद्वयम्॥११॥
मरिचं कुडवाष्टांशमितं नारिफलं तथा॥कुडवस्त्वेक एवाथ जातिपत्रि तथैव च॥१२॥ग्राह्या मरिच मानेन नवान्नं नवभिस्त्विदम्॥तोषदं रामचंद्रस्य भक्त्या कार्यं सदा नरैः॥१३॥लघु नवान्नं वक्ष्यामि नैवेद्यार्थं निरंतरम्॥कुडवा नव गोक्षीरं तंदुलाः कुडवस्य च॥१४॥चतुर्थांश मिता ग्राह्याः कुडवाष्टांश संमिताः॥ग्राह्या वितुष मुद्गाश्च कुडवार्द्धा सिता स्मृता॥१५॥घृतं मुद्गसमं ग्राह्यं तावन्मानं मधु स्मृतम्॥तावन्मानं श्रीफलं च मरिचं टंकसंमितम्॥१६॥टंकार्द्धा जातिपत्री च नवान्नं लघुकीर्तितम्॥

कुडवोऽर्क ढब्बुकश्च टंको माष चतुष्टयम् ॥१७॥ लघु नवान्न मेतच्च राघवाय निवेदयेत् ॥ निरंतरं हिं पूजायां राघवस्याति हर्षदम् ॥१८॥ च्यूत जंबू कपित्थाश्च बीजपूरं च दाडिमम् ॥ खर्जुरी नारिकेलं च कर्दलिफलमेव च ॥१९॥ पनसं चेति रामाय फलानि नव सर्वदा ॥ एतान्यति प्रियाण्यत्र पूजायां तन्न्यवेदयत् ॥२०॥ सीताफलं च जंबीरं नारंगं स्निग्धमज्जकम् ॥ जातिफलं मातुलिंगं तथा द्राक्षाफलं शुभम् ॥२१॥ उर्वारुकं तथा धात्रीफलं चेतानि वै नव ॥ फलानि रामपूजाया मुक्तानि मुनिभिः सदा ॥२२॥ नवोपचारस्तांबूलो राघवाय निवेदयेत् ॥ नागवल्लि क्रमुकं च खदिरः सौध एव च ॥२३॥ जातिपत्रि लवंगं च जातिफल वरांगके ॥ एला चेति नवविध तांबूलः कीर्त्यते बुधैः ॥२४॥ नव राजोपचाराश्च राघवाय न्यवेदयत् ॥ छत्रं सिंहासनं यानं चामरं व्यजनं तथा ॥२५॥ पान तांबूलपात्रे च पात्रं निष्ठिवनस्य च ॥ वस्त्रकोशश्चेति राज्ञामुपचारानव स्मृताः ॥२६॥ नवाथ भोग्यवस्तूनि राघवाय निवेदयेत् ॥ चंदनं पुष्पमालां च द्रव्यं परिमलं तथा ॥२७॥ अवतंसो फलं चापि तथा रक्ताक्षताः शुभाः ॥२८॥ एतानि भोग्यवस्तूनि राघवाय निवेदयेत् ॥ नवोपचारा शय्यापि राघवाय समर्पयेत् ॥२९॥ पर्यंक तिलका रम्या वितानं चोपबर्हणम् ॥ आदर्शौ दीपिका तोयपात्रं प्रावरणं शुभम् ॥३०॥ व्यजनश्चेति शय्यायाश्चोपचारा नव स्मृताः ॥ नववस्त्राणि रामाय देयान्यतिमहंति च ॥३१॥ पीतांबर मुत्तरीयं चोष्णीषं कंचुकं तथा ॥ उष्णीषोर्ध्वस्थितं दिव्यं तथाच कटिबंधनम् ॥३२॥ मुखशोधनवस्त्रं च त्रिमुखं ह्यंक योग्यकम् ॥ तथा प्रावरणं दिव्यं नव वस्त्राणि भो द्विज ॥३३॥ नवदिव्यास्त्वलंकारा देयाः श्रीराघवाय हि ॥ कुंडलं

कंकणं मालां केयूरं नूपुरं तथा ॥३४॥ पदकं कटिसूत्रं च शृंखला मुद्रिकेति च॥ एते नवत्वलंकारा देया
रामाय भक्तितः ॥३५॥ एवं शिष्य मया राम प्रीतिदानि महंतिच॥ नवकान्यतिरम्याणि तवाग्रे कीर्तिता-
नि हि ॥३६॥ मुख्यास्त्वर्थ पदार्था हि नवकेषु मया स्मृताः॥ येभ्यस्त्वन्य पदार्थाश्च ये ये संति सहस्र-
शः ॥३७॥ ते सर्वे राघवायाति भक्त्या देयास्तु पूजने ॥ प्रत्यहं रामचंद्रस्या त्रिकालं पूजयन्नरैः॥३८॥ का-
र्यं वित्तानुसारेण न कदा शाठ्यमाचरेत्॥ प्रतिपद्दिनमारभ्य यावच्च नवमी तिथि ॥३९॥ तावद्विशेषतः कार्यं
प्रत्यहं रामपूजनम्॥ विचित्रैर्मंडपाद्यैश्च संपूज्य रघुनंदनम्॥४०॥ पारायणं तदग्रे हि कर्तव्यं नवभिर्दिनैः
॥ आनंदरामचरितं पठनीयं तु सर्वदा॥४१॥ नवम्यां राघवं रामतीर्थे वाहनसंस्थितम्॥ नीत्वा मंग-
लतुर्याद्यै र्ध्वजाद्यै र्दुंदुभिस्वनैः॥४२॥ अभिषेकस्तत्र कार्यो रुद्रसूक्तैः सुपुण्यदैः॥ तथा पुरुषसूक्ते-
न श्रीसूक्तेन तथैव च ॥४३॥ विष्णुसूक्तादिभिः सूक्तैरभिषिच्य रघूत्तमम्॥ पूजनं विस्तरेणाथ कृत्वा
गेहं समानयेत्॥४४॥ ततो हरेः कीर्तनानि स्वयं कार्याणि वा परैः॥ गायकैः कारणीयानि वेश्याभिर्न-
र्तनान्यपि ॥४५॥ ततः स्वयमुपोष्याथ भक्त्या विप्रप्रपूजनम्॥ ........................ पूजनं विस्तरेणहि ४६
रात्रौ जागरणं कार्यं कथाभिर्गीत नृत्यकैः॥ दशम्यां प्रातरुत्थाय स्नात्वा संपूज्य राघवम्॥४७॥ माध्या-
न्हे रामचंद्रस्य पूजनं ब्राह्मणेषु हि ॥ कार्यं तस्य विधानं ते वदाम्यद्य शृणुष्व तत्॥४८॥ एकं युग्मं तु
विप्रस्य विप्रा अष्ट निमंत्रयेत्॥ भूमिं गृहे विलेप्याथ गोमयेनाति विस्तृताम्॥४९॥ रंगवल्ल्याश्च
पद्मानि नील पीतादि वर्णकैः॥ तत्र समंततः कृत्वा मध्ये सिंहासनं शुभम्॥५०॥ स्थाप्य तत्र महाव-

स्त्रैरासनं परिकल्पयेत्॥ अष्टोत्तरसहस्त्रं वै रामलिंगात्मकं शुभम्॥५१॥अथवाऽष्टोत्तरशतं रामलिंगात्मकासनम्॥ अष्टोत्तरसहस्त्रं वा रामतोभद्रमुत्तमम्॥५२॥अथवाऽष्टोत्तरशतं रामतोभद्रमुत्तमम्॥ सिंहासने निधायाथ रामस्यासनमुज्वलम्॥५३॥ भद्रोपरि सपत्नीकं तत्र विप्रं निवेशयेत्॥ पश्चिमाभिमुखं वामभागे तत्स्त्रीं न्यवेशयत्॥५४॥सीतारामो तु दंपत्योरावाह्य तदनंतरम्॥ तत्पृष्ठे लक्ष्मणं विप्रेच्चिंतयच्च ततः परम्॥५५॥ भरतं रामसव्ये तु आवाह्य भूसुरे तथा॥रामवामे तु शत्रुघ्नमावाह्य भूसुरे तथा॥५६॥ विप्रेंऽजनिसुतं चापि रामस्याग्रे विचिंतयेत्॥ रामस्य वायुदिग्भागा सुग्रीवाद्यान्विचिंतयेत्॥५७॥चतुष्कोणेषु विप्रेषु ततः पूजनमाचरेत्॥ नवायतन पूजेयं ज्ञेया श्रीराघवस्य हि॥५८॥अथवा पंचायतनं पंचविप्रेषु चिंतयेत्॥ससीतं शक्तिहीनेन नरेण सर्वदा भुवि॥५९॥ अथवा यतीनं रामस्थाने भक्त्या निवेशयेत्॥ पूगीफलमयी सीतां पतिवामे निवेश्य च॥६०॥ कार्यं सम्यक् पूजनं च ततो गेहे सुवासिनिम्॥ सीतां मत्वा पुनः पूज्य भोजनीया सविस्तरम्॥६१॥ आदौ सीताराघवयोः कृत्वा पूजनमुत्तमम्॥ ततः पूजा तु सर्वेषां कार्या नानोपचारकैः॥६२॥ क्रमेण लक्ष्मणादिनामुपचारैस्तु षोडशैः॥अथवा सहतंत्रेण रामात्पूजनमाचरेत्॥६३॥आदावावाह्य विप्रेषु देयमासनमुत्तमम्॥ ततः प्रक्षाल्य पादौ च सर्वेषां च पृथक् पृथक्॥६४॥ यतिपादोदकं भिन्नं स्थापनीयं नरोत्तमैः॥ ततः पृथग्पृथगार्घ्यानि दत्त्वा सुचंदनादिभिः॥६५॥ ततः आचमनं दत्वा स्नानार्थं जलमुत्सृजेत्॥ ततो वस्त्रं समर्प्याथ देयान्याभरणानि च॥६६॥समर्प्य ब्रह्मसूत्राणि गंधं देयं मनोरमम्॥ ततो रक्ताक्षता देयाः पुष्पमालास्तथापरम् ६७

ततो मांगल्यवस्तूनि ततः छत्रं च चामरम् ॥ व्यजनं च ततो देयं देयस्तूणीर एव च ॥६८॥ देया बाणाश्च चापा-
नि देयानि हि पृथक् पृथक् ॥ दत्वा परिमलादिनि भोग्यवस्तूनि विस्तरात् ॥६९॥ धूपौ देयस्तथा दीपौ नैवे-
द्यो दीयतां ततः ॥ अथवान्यच्छर्करादि नैवेद्यार्थं समर्प्य च ॥७०॥ नारिफलानि देयानि देयस्तांबूलमुत्तमः
॥ दक्षिणांच ततो दत्वा देयो मुकुरमुज्वलम् ॥७१॥ नीराजनं ततः कृत्वा मंत्रपुष्पाणि दीयताम् ॥ प्रदक्षिणा
नमस्कारान्नवं कृत्वा ततः परम् ॥७२॥ नृत्यगीतादिकं कृत्वा प्रार्थये द्रघुनायकम् ॥ विनिमिल्य करौ पा-
दौ रामाग्रे संस्थितै र्नरैः ॥७३॥ वामे भूमिसुता पुरस्तु हनुमान्पृष्ठे सुमित्रासुतः- शत्रुघ्नो भरतश्च पार्श्व-
दलयोर्वायव्य कोणादिषु ॥ सुग्रीवश्च बिभीषणश्च युवराट् तारासुतो जांबवान्- मध्ये नीलसरोज कोमल
रुचिं रामं भजे श्यामलम् ॥७४॥ रामो हत्वा दशास्यं द्विजवचन गुरुत्वेन यात्राश्च यज्ञान्- कृत्वा भुक्त्वा-
ति भोगानवनितल विंशतिं गृहित्वाथ सीताम् ॥ लब्ध्वा नानास्नुषास्तास्त्ववनितलगता न्पार्थिवादिंश्च जि-
त्वा- कृत्वा नानोपदेशा न्गजपुर निकटे स्वीयलोकं जगाम ॥७५॥ नवकांडमयः श्लोकः पठित्वायं हरेः पुरः
॥ ततः क्षमाप्य श्रीरामं पूजां तस्मै समर्पयेत् ॥७६॥ मया मासव्रते राम नवम्यां यत्प्रपूजनम् ॥ पारायणादि-
कं सर्वं नवरात्रेऽपि यत्कृतम् ॥७७॥ तत्सर्वं तेऽर्पितं त्वद्य प्रसन्नो भव मे प्रभो ॥ नवायतन पूजेयं यावकृ-
द्दशमी दिने ॥७८॥ नवविप्रेषु साप्यद्य तेऽर्पिता राम वै मया ॥ त्वं गृहाण यथाशक्त्या कृतां तां त्वं प्रसीद
मे ॥७९॥ एवं समर्प्य रामाय सकलं पूजनादिकम् ॥ ततो भोजन रित्या तान्सन्निवेश्याथ भोजयेत् ॥८०॥
पुनर्दत्वा तु तांबूलं दक्षिणां तु विसर्जयेत् ॥ ततः स्वयं विप्रतीर्थं गृहित्वा वै ततः परम् ॥८१॥ यतिपादोद-

कं प्राश्य देवतीर्थे ततः परम् ॥ गृहित्वा भोजनं कार्यं सुहृन्मित्रजनैः सह ॥८२॥ समर्पितं यद्यतयेतत्तच्च ब्राह्मणाय हि ॥ देयं स्वगुरुवे सर्वं ब्रह्मसूत्रादिकं शुभम् ॥८३॥* मासे मासे सर्वदैव रामोपासक मानवैः ॥ एवं मासव्रतं प्रोक्तं राघवस्याति तोषदम् ॥८५॥ संति व्रतान्यनेकानि जगत्यां पुण्यदानि हि ॥ तथाप्यनेन सदृशं नभूतं न भविष्यति ॥८६॥ व्रतानमुत्तमं चेतद्भुक्तिमुक्ति प्रदायकम् ॥ अवश्यमेव वर्तव्यं रामोपासक मानवैः ॥८७॥ एवं शिष्य मया प्रोक्तं व्रतानामुत्तमं व्रतम् ॥ सविस्तारं तवाग्रे हि राघवस्याति तोषदम् ॥८८॥ *विष्णुदास उवाच* ॥ श्रीरामनवमी मासव्रतउद्यापनं वद ॥ कदा कार्यं कथं कार्यं गुरो कृत्वा कृपां मयि ॥८९॥ *रामदासउवाच* ॥ सम्यक् पृष्टं त्वया वत्स सावधान मनाः शृणु ॥ नवसंवत्सरं मास नवमी व्रत मुत्तमम् ॥९०॥ कृत्वा चोद्यापनं कार्यं चैत्रे श्रीरामजन्मनि ॥ नवम्यां समुपोष्याथ कर्तव्यमधिवासनम् ॥९१॥ गृहे वृंदावने वाथ गोष्ठे देवगृहादिषु ॥ संमार्जनं गोमयेन कार्यं वा चंदनादिभिः ॥९२॥ ततः पाषाणचूर्णैश्च नानापद्मादिकानि हि ॥ भुवि संलेखनीयानि नील पीतादि वर्णकैः ॥९३॥ रंजनीयानि रम्याणि ततः पत्रादि सत्स्थले ॥ पूर्वोक्त रामभद्राणां मध्येत्वेक वरासनम् ॥९४॥ लिखित्वा चित्रवर्णैश्च प्रोक्तैरेव सुरंजयेत् ॥ तस्योपरि महान् रम्यश्चित्र वर्णश्च मंडपः ॥९५॥ देयो द्वाराणि चत्वारि कार्याणि तोरणानि च ॥ कदलीस्तंभयुक्तानि हीक्षुदंड युतानि च ॥९६॥ नाना घंटा किंकिणी भिर्ध्वनिता न्युज्वलानि च ॥ रम्यादर्शैर्मंडितानि विचित्राणि शुभानि च ॥९७॥ चित्रध्वजर्वितानैश्च मुक्ताहारैर्युतान्यपि ॥ अथ तद्रामभद्रस्थे कलशेवारिपूरिते ॥९८॥ ताम्रपात्रे



---

* ॥ एवं व्रतं राघवस्य पक्षे पक्षे प्रकारयेत् ॥ अथवा शुक्लपक्षे हि कार्यं व्रतमिदं शुभम् ॥८४॥

रामचंद्र नवायतन चिन्हितम् ॥ सीतया पूजयद्रात्रौ महोत्साह पुरःसरम् ॥९९॥ नवपलमिता मूर्ति है-
मिं कृत्वा प्रपूजयेत् ॥ सीता हैमी प्रकर्तव्या शुभाष्टपल संमिता ॥१००॥ रजतास्ते लक्ष्मणाद्याः पृथग्पं-
चपलैः स्मृताः ॥ अशक्तौ च तदर्द्धेन तदर्द्धार्द्धेन वा पुनः ॥१॥ तस्याप्यर्द्धं तदर्द्धार्द्धं वित्तशाठ्यं न
कारयेत् ॥ षोडशैरुपचारैश्च पूजोक्ता निशिजागरः ॥२॥ दशम्यां प्रातरुत्थाय स्नात्वा संपूज्य राघवम् ॥
राममंत्रेण हवनं कार्यं नवसहस्त्रकम् ॥३॥ तिलाज्य पायसाद्यैश्च नवान्नेनाथवा स्मृतम् ॥ तद्दशांशेन
क्षीरेण तर्पणं हि प्रकारयेत् ॥४॥ तस्यापि च दशांशेन मार्जनं द्विजभोजनम् ॥ कर्णमुद्रां हस्तमुद्रां वसने
ब्रह्मसूत्रकम् ॥५॥ चित्रासनमुत्तरीयं मुकुटं झर्झरीं तथा ॥ कास्यपात्रं भोजनस्य नवान्नेन प्रपूरितम्
॥६॥ घृतपात्रं कास्यमयं नवान्नोपरिसंस्थितम् ॥ पादुके पुस्तकं दिव्यं यत्किंचिद्राघवस्य च ॥७॥ तां-
बूलं दक्षिणां चापि प्रत्येकं भूसुराय हि ॥ अर्पयेत्सकलं चेत्थंमेवं सर्वान्समर्पयेत् ॥८॥ ततो गुरुं समभ्य-
र्च तस्मै धेनुः समर्पयेत् ॥ तामर्चामर्पयेत्सर्वां गुरवे दक्षिणान्विताम् ॥९॥ ततो गुरुं प्रार्थयेत्तं प्रणम्य च
पुनः पुनः ॥ मासे मासे नवम्यां तु सोद्यापन व्रतं मया ॥१०॥ यत्कृतं नववर्षाणि तेन तुष्यंतु राघवः ॥ अग्रे-
ऽपि यावज्जीवामि तावत्कालं करोम्यहम् ॥१११॥ व्रतानामुत्तमं चेदं तुष्ट्यर्थं राघवस्य च ॥ गुरो त्वत्कृप-
या रामो मां प्रसीदतु सीतया ॥१२॥ एवं संप्रार्थ्य स्वीयं तं गुरुं नत्वा विसर्जयेत् ॥ ततः स्वयं हि भुंजीत
सुहृन्मित्र सुतादिभिः ॥१३॥ एवमुद्यापनं कृत्वा कार्यमग्रे व्रतं पुनः ॥ मासे मासे राघवस्य न त्याज्यं स-
र्वथा नरैः ॥१४॥ एकादशीव्रतं नित्यं यथा तत्क्रीयते नरैः ॥ तथा मासव्रतं चेदं नित्यमेव स्मृतं बुधैः १५

अशक्तेन यथा शक्त्या कार्यमुद्यापनं व्रतम् ॥ उपोष्या नवमी शुक्ला सर्वदैव नरैर्भुवि ॥१६॥ नवम्यां शुक्लपक्षेयो भुक्तन्नं मूढधीर्नरैः ॥ रौरवे कल्पपर्यंतं तस्यवासः स्मृतो बुधैः ॥१७॥ एवं शिष्य त्वया यच्च पृष्टं त्वत्ते निवेदितम् ॥ का तेऽन्या श्रोतुमिच्छामि तावदस्व वदामि ते ॥१८॥ विष्णुदासउवाच ॥ गुरो त्वया राघवस्य श्रीरामनवमीव्रतम् ॥ मासे मासे प्रकर्तव्यमिति प्रोक्तं ममाग्रतः ॥१९॥ तत्केनाचरितं पूर्वं सिद्धिर्लब्धात्र केन हि ॥ तत्सर्वं विस्तरेणैव वद कृत्वा कृपां मयी ॥१२०॥ अन्यत्ते प्रष्टुमिच्छामि तत्त्वं मां वक्तुमर्हसि ॥ अशक्तेन नरेणेदं व्रतं कार्यं कथं महत् ॥२१॥ श्रीरामदास उवाच ॥ सम्यक्पृष्टं त्वया शिष्य सावधानमनाः श्रृणु ॥ आसीत्पुरा कश्चित्केरळे रामतत्परः ॥२२॥ नाभूत्तस्य विवाहोत्र निर्धनस्य द्विजस्य च ॥ नासी तस्मै गेहमपि न माता न पिताऽपि च ॥२३॥ तस्यैको नियमश्चासी द्दरिद्रस्य च तं श्रुणु ॥ नित्यं प्रातः समुत्थाय कृतमाला नदीजले ॥२४॥ स्नात्वा नदीसिकतायां सिकता वेदिका नव ॥ कृत्वा तत्र जनकजासहितं रघुनंदनम् ॥२५॥ पत्रनिर्मित श्रीरामलिंगात्मक वरासने ॥ मध्यमायां वेदिकायां संस्थाप्य धातुनिर्मितम् ॥२६॥ अष्टदिक्षु वेदिकासु तरुपत्रासने पृथक् ॥ समंततो राघवस्य लक्ष्मणादिन्न्यवेशयत् ॥२७॥ ततः स राघवं प्राह राम राजीवलोचन ॥ कर्तुमवश्यकं कर्म गंतुमर्हसि सत्वरम् ॥२८॥ इत्युक्त्वा तं स्वीय पृष्ठे निवेश्य रघुनंदनम् ॥ कियद्दूरं रहो वृक्षखंडे गत्वा द्विजोत्तमः ॥२९॥ रामं तृणभुविस्थाप्य तदग्रे पात्रमुत्तमम् ॥ सजलं मृत्तिकां चापि संस्थाप्य हि जवेन वै ॥१३०॥ किंचिद्दूर स्वयं गत्वा स्थितवान् स कियत्क्षणम् ॥ रामांतिकं पुनर्गत्वा पादप्रक्षालनादिकम् ॥३१॥ अकरोन्मृत्तिका शौचं स तस्य स्वकरेण हि ॥ दत्वाऽ

न्य पात्र तोयेन रामायाचमनं तथा ॥३२॥ दंतकाष्टेन तद्दंतान्संशोध्य भक्तिपूर्वकम् ॥ गंडूषार्थ जलं दत्वा क-
वोष्णं शीतलं पुनः ॥३३॥ समर्प्याथ सिंचनार्थं वस्त्रेणार्थं प्रमार्जयत् ॥ संमार्ज हस्तौ पादौ च रामस्य वाससा-
द्विज ॥३४॥ तं विगृह्य पुनः पृष्ठे नम्रीभूत शनैः शनैः ॥ सिकता वेदिकायां च पूर्वस्थाने न्यवेशयत् ॥३५॥
एवं सीतां लक्ष्मणं च भरतं लवणांतकम् ॥ सुग्रीवादिन्पृथक् नीत्वाऽवश्यकादिन्यकारयत् ॥३६॥ ततः पृ-
थक् कवोष्णेन तैलाभ्यंगान्विधाय सः ॥ नीरेण स्नापयत्सर्वान्कृत्वा चोद्वर्तनान्यति ॥३७॥ ततो भूर्जादि
पत्राणि वस्त्रार्थं स पृथक् ददौ ॥ ततः पत्रैः फलैः पुष्पैर्लब्धैस्तानर्चयत्क्रमात् ॥३८॥ ततः स स्थल व्रीहि-
णां कृत्वौदनमनुत्तमम् ॥ स्नात्वा माध्यान्हिकं कृत्वा पुनः संपूज्य राघवम् ॥३९॥ दत्वौदनस्य नैवेद्यं वैश्वदे-
वं विधाय च ॥ किंचिद्भिक्षामतीथये मत्स्यान्गा मंडजादिकान् ॥१४०॥ दत्वा पृथक्पृथक् विप्रश्चक्रे रामा-
ज्ञयाशनम् ॥ ततो रामं पुनः पृष्ठे समारोह्य यदादरात् ॥४१॥ ततः सीतां ततः सर्वान्लक्ष्मणादिन्क्रमेण हि
॥ पूजोपकरणं सर्वं पेटिकायां निधाय सः ॥४२॥ कृत्वा तां पेटिकां कक्षे जगामोथ शनै द्विजः ॥ स वना रामोप-
वनान्गत्वा रामं वचोऽब्रवीत् ॥४३॥ रामराजीवपत्राक्ष वना रामादि कौतुकम् ॥ जानकीसहितः पश्य नानांऽ
डज मृगादिकान् ॥४४॥ ततो ययौ ग्रामहट्टं दर्शयत्कौतुकं विभुम् ॥ संमर्दे ताडयामास मार्गार्थि यान्स यष्टि-
ना ॥४५॥ तेऽपि तत्कौतुकाविष्टा जनाः कोपं न मेनिरे ॥ एवं नानाकौतुकानि दर्शयामास राघवम् ॥४६॥
ततः शून्ये तृणगृहे रामं तानवरुह्य च ॥ काष्टनिर्मितपर्यंके कारयामास निद्रितान् ॥४७॥ ततो वेगाद्धट्टमध्ये
गत्वा स ब्राह्मणोत्तमः ॥ यांच्येया तंदुलान्तैलं घृतं शाकं फलानि च ॥४८॥ नागवल्लि दलादिनि क्रमुकं कुंकु-

मादिकम् ॥ लब्ध्वा ताम्रमयं किंचित् द्रव्यं रामांतिकं ययौ ॥ ४९॥ तत् ग्रामवासिनः सर्वे ये ये हट्टे स्थिता ज-
नाः ॥ स्व स्व नाना व्यवसाय तत्परा स्ते द्विजोत्तमम् ॥ १५०॥ श्रीरामनिष्ठं तं दृष्ट्वा ददुस्तद्याचितं मुदा ॥ त-
तो विप्रः शून्य गेहे रामाग्रे दीपमुत्तमम् ॥ ५१॥ प्रज्वाल्यारार्तिकं कृत्वा गंधाद्यैः परिपूज्य च ॥ वीजयामास
श्रीराम पल्लवेन मुदान्वितः ॥ ५२॥ ततस्तुत्वा मुहुर्नत्वा कृत्वा चापि प्रदक्षिणाः ॥ चकार कीर्तनं वक्ष्यमाणैः
सन्मनुभिर्द्विजः ॥ ५३॥ ततस्तान्याचितान्येव वस्तूनि मिश्रितानि हि ॥ पृथक्कृत्वा तु सर्वेषां त्रीन्भागान्
चकार सः ॥ ५४॥ द्वौ भागौ स्व स्व निकटे स्थाप्यैकं भागमुत्तमम् ॥ मित्रगेहे न्यासभूतं नवम्यर्थे चकार सः
॥ ५५॥ ततः स्वयं द्वारमध्ये चकार शयनं द्विजः ॥ पुनः प्रभाते चोत्थायाचम्य गीतादिभिः प्रभुम् ॥ ५६॥ ताल-
वाद्यैः प्रबोध्याथ तान्पृष्ठे स्थाप्य पूर्ववत् ॥ नदीतीरं ययौ विप्रः पूजयामास पूर्ववत् ॥ ५७॥ एवं नित्य पूजनं
स चकारा दृतमानसः ॥ नवम्यां च विशेषेण पूजयित्वाथ राघवम् ॥ ५८॥ स्वयमुपोषणं कृत्वा स्वयं चक्रे स
कीर्तनम् ॥ रात्रौ जागरणं चापि राघवं पूज्य वै पुनः ॥ ५९॥ चकार कीर्तनैश्चाथ नर्तनाद्यैः स्वयं कृतैः ॥ ततः
प्रभाते श्रीरामं दशम्यां परिपूज्य च ॥ १६०॥ प्रतिपद्दिनमारभ्य नवरात्रेथ यत्कृतम् ॥ आनंदरामचरित पा-
रायणमनुत्तमम् ॥ ६१॥ तत्समाप्य पूजयित्वा पुस्तकं ब्राह्मणान्नव ॥ निमंत्रितां समाहूय तेष्वेवैकं सपत्नि-
कम् ॥ ६२॥ द्विजमाकारयामास ततः संचित तंदुलाः ॥ मित्रगेहे न्यासभूता स्तेषां कृत्वौदनं शुभम् ॥ ६३॥
तथा संचित शाकादि तथा लब्धानि यानि सः ॥ तानि सर्वाणि संस्कृत्य वरान्नादिनि चाकरोत् ॥ ६४॥ वा-
लुका वेदिकायां हि मध्ये पत्नीयुतं द्विजम् ॥ अष्टकोणेषु विप्रान्स संनिवेश्य वै क्रमात् ॥ ६५॥ षोडशैरुप-

चारैस्तान्पूजयामास भक्तितः ।। रंभादलेषु च ततो विस्तीर्णेषु द्विजोत्तमः ।। ६६।। चकार तैः कृतैरन्नैः
स मुदा परिवेषणम् ।। ततस्ते भोजनं चक्रुस्तद्भक्त्यातिमुदान्विताः ।।६७।। ततो दत्वाति तांबूलं दक्षि-
णां तान्प्रणम्य च ।। विसर्जयामास विप्रान् ततश्चक्रेऽशनं द्विजः ।।६८।। एवं विप्रो मासि मासि नवाय-
तन पूजनम् ।। नवम्याः पारणायाश्च दिवसे दशमीदिने ।।६९।। चकार नवविप्रेषु यांच्यान्नैरपि भक्ति-
तः ।। एवं गतानि वर्षाणि नव तस्य द्विजन्मनः ।।१७०।। एकदा श्रावणेमासि तत् ग्रामं सेनया नृपः ।। कश्चि-
द्ययौ तदा विप्रः स्वस्थले निशिनिद्रितः ।। ७१।। एतस्मिन्नंतरे वृष्टिपीडिता नृपसेवकाः ।। ग्रामे गेहानि
विविशु शून्यगेहं ययुर्दश ।।७२।। अश्वारूढाः सशस्त्रास्ते द्वारमध्ये द्विजोत्तमम् ।। दृष्ट्वा विनिद्रितं प्रोचुर्द्वि-
जोत्तिष्ठ जवेन हि ।।७३।। मार्गं देहि वयं वृष्ट्या पीडितास्मश्चिरं बहिः ।। शून्य गेहेऽत्र स्थास्यामः सुखं
साश्वाः ससेवकाः ।।७४।। तत्तेषां वचनं श्रुत्वा संभ्रमेण द्विजोऽब्रवीत् ।। रामचंद्रः सीतयाऽत्र निद्रितोऽस्ति स्व-
बंधुभिः ।।७५।। न वर्ततेऽत्र युष्माकं स्थलं सत्यं वचोमम ।। गच्छध्वं नगरे नाना स्थलान्यन्यानि संति हि
।।७६।। तत्तस्य वचनं श्रुत्वा राजदूताः पुनः द्विजम् ।। प्रोचुः कस्तेति श्रीरामः सोऽपि निर्यातु यो बहिः ।।७७।।
सीतया बंधुभिर्युक्तः स्थलं नो देहि भो द्विजः ।। पुनराह द्विजस्तान्स कथं रामं विनिद्रितम् ।।७८।। प्रबुद्धं
वै करोम्यद्य निशायां राजसेवकाः ।। युष्माकं प्रार्थना त्वद्य क्रीयते वै मया मुहुः ।।७९।। प्रणम्य विधिवद्यूयं
गच्छध्वं वै स्थलांतरम् ।। ततस्तान्निग्रहं दृष्ट्वा तेऽतिवृष्ट्या प्रपीडिताः ।।१८०।। तं विप्रं ताडनं चक्रुस्तदा प्रा-
ह द्विजोत्तमः ।। रामं बहिः करोम्यद्य तिष्ठध्वं राजसेवकाः ।।८१।। इत्युक्त्वाऽचस्य श्रीरामं भूसुरो वाक्यम-

ब्रवीत् ॥ रामोत्तिष्ठ बहिर्दुष्टाः स्थिताः संत्यश्वसंस्थिताः ॥८२॥ तस्यां वस्तुं स्थलं देहि वयं यामो बहिर्नि-
शि ॥ इत्युक्त्वा निजपृष्ठे तानारोहय स पूर्ववत् ॥८३॥ ततः कृत्वा महाकोशं वस्त्रादिनां द्विजोत्तमः ॥ धृ-
त्वा कक्षे तोयकुंभं धृत्वा वामकरेण सः ॥८४॥ यष्टिं धृत्वा सव्यहस्तेन शनैर्द्वाराद्बहिर्ययौ ॥ ते द्विजं ता-
दृशं दृष्ट्वा भ्रांतं तं मेनिरे खलाः ॥८५॥ ततो दृष्ट्वातिवृष्टिं स गेहाग्राधो बहिर्द्विजः ॥ नम्रीभूतस्तदा त-
स्थौ गेहे संविविशुः खलाः ॥८६॥ ततोऽति श्रमितो विप्रश्चिंतयामास चेतसि ॥ पुराणे वायुपुत्रस्य म-
यासारं श्रुतं बहु ॥८७॥ तत्सर्वं तु मृषा त्वद्य किमस्यात्र प्रयोजनम् ॥ इति निश्चित्य विप्रः स क्रोधेन म-
हतावृतः ॥८८॥ शीघ्रं घटं भुवि स्थाप्य वामहस्तेन मारुतेः ॥ पृच्छं धृत्वा प्रक्षिपत्तमाकाशे वेगवत्तरः
तदा सा मारुतेर्धातुमयि मूर्तिः शुभावहा ॥ गत्वाऽकाशे गर्जनां वै चकाराति भयंकराम् ॥१९०॥ तां गर्ज-
नां महावीरां ग्रामस्थाश्च बहिःस्थिताः ॥ श्रुत्वाऽतिभयभीता स्ते मृताः सर्वे क्षणेन हि ॥९१॥ अश्वा ना-
गा वृषाद्याश्च मृताः सर्वे तदा क्षणात् ॥ यद्यद्ग्रामे बहिर्वापिचरं पुरुषसंज्ञितम् ॥९२॥ पुत्रगर्भाश्च नारीणां
सर्वे प्रापुः क्षयं तदा ॥ तदा स पुरुषत्वेको न मृतो ब्राह्मणोत्तमः ॥९३॥ कृपया रामचंद्रस्य मारुते कृप-
यापि च ॥ ततः प्रभाते ता नार्यः सर्वान्स पुरुषान्मृतान् ॥९४॥ दृष्ट्वाति विस्मयं प्रापुस्ताभिर्नैव श्रुतोध्व-
निः ॥ तदा विप्रं जीवितं तं दृष्ट्वा पंकेऽपि मारुतिम् ॥९५॥ पतितं विस्मयोविष्टाः पप्रच्छु स्तं द्विजोत्तमम्
ततः स सकलं वृत्तं नारिः संश्रावयत्तदा ॥९६॥ तत स्ताः प्रार्थयित्वा तं चक्रुः स्वीय पुराधिपः ॥ सोऽपि
रामाज्ञया राज्यं चकार तत्पुरस्य च ॥९७॥ पुरस्थितानां नारीणां स एवासीत्पति स्तदा ॥ तन्मारुतेर्ग-

र्जितं हि काले काले तु पूर्ववत् ॥९८॥ अद्यापि श्रूयते तस्मिन्नगरे घनशब्दवत् ॥ तच्छ्रुत्वा पुत्रगर्भाश्च
प्रस्खलंति हि योषिताम् ॥९९॥ स्त्रियः सहस्रशश्चासन् पुरुषस्त्वेक एव स ॥ तदारभ्य तत्स्त्रीराज्यं
कथ्यते मानवोत्तमैः ॥२००॥ ततः कालांतरेणैव स विप्रश्च मृतो यदा ॥ तदा स्व पूर्वपुण्येन विष्णुसायुज्य-
मापसः ॥१॥ ततस्ताभिस्तु नारिभिः कश्चित्पांथः समागतः ॥ स एव क्रीयते भर्ता न तं ता मोचयंति हि २
ज्ञात्वा तं गर्जनाकालं पुरुषान्विवरेषु हि ॥ गोपयित्वा तु दुंदुभिनां भेरीणां निःस्वनादिभिः ॥३॥ न श्रावयं-
ति तेषां तं ध्वनिं मारुतिसंभवम् ॥ अतिक्रांतेथ तत्काले तान्पुनर्जीवितानिति ॥४॥ मत्वा नानोत्सवैः पूज्य
तै र्भोगं ताः भजंति हि ॥ नार्या तत्शास्यते राज्यं सदैव द्विजसत्तम ॥५॥ स्त्रीणामेव सदोत्पत्तिर्जायते
पुरुषस्य न ॥ तद्राज्य निकटस्थाय देशास्तेष्वपि भो द्विज ॥६॥ मारुतेःश------ संस्पृष्ट वायुना स्पर्शिता
नराः ॥ अशक्ता एव जायंते न तेष्वासी सुपौरुषम् ॥७॥ अतस्तेषामशक्तानां वीर्यक्षीणतया द्विज ॥ भवंति
दुहिता एव क्वचित्पुत्रः प्रजायते ॥८॥ आधिक्ये रजसः कन्या शुक्राधिक्ये सुतो भवत् ॥ नपूसक सम-
त्वेन यथेच्छा पारमेश्वरी ॥९॥ अन्य ते कारणे वच्मि न भवंति सुताय तः ॥ कारणं श्रृणु तत् त्वं भो विष्णु-
दास द्विजोत्तम ॥२१०॥ तेषु देशेषु नार्यश्च निजराज्यमदेन हि ॥ रतिकालेऽधः पुरुषं कृत्वा क्रीडा भजंति
ताः ॥ ११॥ न स्वीयां रतिकाले ताः पृष्ठिं भूमिं स्पृशंति हि ॥ अतएव रतिकाले शुक्रं तु स्त्रवते बहिः ॥१२॥
सूक्ष्म छिद्र यथा गर्भस्थाने तन्नैव गच्छति ॥ नासा नयन कर्णाणां द्वे द्वे रंध्रे प्रकीर्तिते ॥१३॥ मेहनापा-
न वक्त्राणांमेकैकं रंध्रमुच्यते ॥ दशमं मस्तके प्रोक्तं रंध्राणीति नृणां विदुः ॥१४॥ स्त्रीणां त्रिण्यधि-

कानिस्युस्तनयोर्गर्भवत्मनः॥ सूचिकाग्र समान्येव तानि छिद्राणि संति हि ॥१५॥ गर्भछिद्रं रतिकाले
किंचिद्विकसितं द्विज॥ भूत्वा मार्गं तु वीर्याय ददाति पुरुषस्य च ॥१६॥ तन्मार्गेण गतं वीर्यं चेत्सम्यक्
पुरुषस्य च॥ गर्भस्थाने तदा पुत्रो जायते नात्र संशयः॥१७॥ स्वल्प प्रविष्टं वीर्यं चेत्तदा कन्या प्रजायते॥
रजसश्चाधिकत्वेन जानीह्येनं विनिश्चयम्॥१८॥ तस्माद्यदाधः शेते वै तद्देशेषु नरोत्तमाः॥ रतिकाले तस्य
वीर्यमूर्ध्वं गच्छति नैववत्॥१९॥ यदि दैववशात्किंचिद्गतं स्त्रीरंध्रमार्गतः॥ तदा दैववशात्पुत्रो जायते सो-
ऽपि षंढवत्॥२२०॥ अतएव हि तद्देशे बहुकन्या भवंति हि॥ एवं ते कारणं प्रोक्तं कन्योत्पत्ते द्विजोत्तम
॥२१॥ एवं सर्वेषु देशेषु चेन्नार्यारधिकं बलम्॥ अस्ति तर्हि भवेन्कन्या पुत्रः पुरुषसारतः॥२२॥ त-
स्मात्पुत्रार्थिना नारि पोषयेन्न कदाच न॥ पोषयेच्च सदाऽऽत्मानं नाना खाद्य रसायनैः॥२३॥ अत-
एव हि वैद्याश्च पालनीयाः सदा नरैः॥ बलाबल प्रवेत्तारस्तैर्ज्ञेयं स्वबलाबलम्॥२४॥ पुष्टं देहं निरीक्ष्या-
थ न ज्ञेयं त्वधिकं बलम्॥ वातेनापि तनुः पुष्टा जायतेत्र सदैव हि॥२५॥ अतो वैद्यं विना तच्च नज्ञास्य-
ति बलाबलम्॥ अतो वैद्यास्ते प्रष्टव्याः सदा भक्ति पुरःसराः॥२६॥ मंत्रे तीर्थे द्विजे देवे वैद्येथ गणके
गुरौ॥ यादृशी भावना स्वीया सिद्धिर्भवति तादृशी॥२७॥ अतो वैद्योक्त मार्गेण सदा ····गन्नरोत्तमैः॥
बलाबल विचारेण पुत्रा एव भवंति हि॥२८॥ एक एव वरो पुत्रः किं जाता दशकन्यकाः॥ पुन्नामा नरका-
त्पुत्रस्तारयेत्स्वकुलं क्षणात्॥२९॥ कन्या स्वीय दुराचारा क्षणान्निजपितुः कुलम्॥ तथा भर्तुकुलं चापि
नरके पातयेच्च सा॥२३०॥ तस्मान्नरैश्च पुत्रार्थं यत्नः कार्यस्त्वहर्निशम्॥ यषव्या बहवः पुत्रा य-

द्येः कोऽपि गयां व्रजेत् ॥ यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥ ३१॥ जीवितो वाक्यकरणात्प्रत्य-
ब्दं भूरिभोजनात् ॥ गयायां पिंडदानेन त्रिभिः पुत्रस्य पुत्रता ॥ ३२॥ एवं शिष्य त्वया पृष्टमशक्ते-
न कथं व्रतम् ॥ कार्यं तच्च मयासर्वं भूसुरस्य कथानकम् ॥ ३३॥ तवाग्रे कथितं रम्यं त्वत्तोषा-
र्थमनुत्तमम् ॥ तस्य व्रतस्य सामर्थ्यात्स दरिद्रि द्विजोत्तमाः ॥ ३४॥ लब्धा तद्विपुलं राज्ये भुक्त्वा
भोगान्मनोरमान् ॥ सायुज्यं प्राप विष्णोश्च स्वायुषश्च क्षये द्विजः ॥ ३५॥ एवं तद्रामचंद्रस्य व्रतं को-
ऽत्र तु नाचरेत् ॥ सुखेन भुक्तिदं चात्र परलोके विमुक्तिदम् ॥ ३६॥ मुनिभिश्च सुरैर्नागैर्गंधर्वैः किन्न-
रैः नृपैः ॥ सदाऽनुभवितं चेदं व्रतानामुत्तमं व्रतम् ॥ ३७॥ स्त्रीपुत्रधनदं चैतत्सर्वं सौख्यप्रदं नृणा-
म् ॥ इहलोके परे चापि विष्णोः सायुज्यदायकम् ॥ ३८॥ संति व्रतान्यनेकानि स्वर्गे मर्त्ये रसात-
ले ॥ तथापि मासनवमी समानं व्रतमुत्तमम् ॥ ३९॥ विष्णुदास द्विजश्रेष्ठ न भूतं न भविष्यति ॥ त-
स्मात्सदा नरैः कार्यं व्रतं चेदं महत्तरम् ॥ २४०॥ एवं त्वया यथा पृष्टं तथा ते विनिवेदितम् ॥ किम-
न्या श्रोतुमिच्छामि तद्वदस्वं वदामि ते ॥ २४१॥ इति श्रीशतकोटि रामचरितांतर्गत श्रीमदा-
नंद रामायणे वाल्मीकिये मनोहरकांडे नवमीव्रतकथावर्णनं नाम षष्ठः सर्गः ॥ ॥ ॥
शुभं भवतु ॥ श्रीसीतारामचंद्रार्पणमस्तु ॥

आकोला

फाल्गून वद्य ११ शके १८७४

॥ श्रीगणेशायनमः ॥ अन्यद्गुरो राघवस्य तुष्टिद किं वदस्व तत् ॥रामदासउवाच ॥ शृणुष्व वि-
ष्णुदास त्वं यत्तेहं प्रवदाम्यहम् ॥१॥ तुष्ट्यर्थं रामचंद्रस्य नित्यं पत्रे तु मानवैः ॥लेखनीयं राम ना-
म शतानि नव प्रत्यहम् ॥२॥अथवाऽष्टोत्तरशतं पूजनीयं सविस्तरम् ॥ एवं कोटिमितं लेख्यं
लक्षं वा तु ततः परम् ॥३॥हवनं हि दशांशेन कर्तव्यं विधिपूर्वकम् ॥इदं विष्णुरिति ऋचा तिलाज्यै
पायसेन वा ॥४॥नवान्नेनाथवा कार्यं राघवं परिपूज्य च ॥हवनांगे राघवादि देवानां पूजने नरैः ॥
आसमर्थं तु भद्रं च स्थापनीयं प्रयत्नतः ॥५॥अष्टोत्तरसहस्रं च रामलिंगात्मकं शुभम् ॥अथवाऽ
ष्टोत्तरशतं रामलिंगात्मकं शुभम् ॥६॥अष्टोत्तरसहस्रं वा रामतोभद्रमुत्तमम् ॥ अथवाऽष्टोत्तरशतं राम-
तोभद्रमुत्तमम् ॥७॥ एवं होमं लेखनं च पूजनादि च यत्कृतम् ॥अर्पयेद्रघुनाथाय तत्सर्वं त्वति भक्तितः
॥८॥ विष्णुदासउवाच ॥त्वया गुरो शुभं प्रोक्तं रामनाम प्रलेखनम् ॥ न तस्योद्यापनं प्रोक्तं तद्वदस्व
ममाधुना ॥९॥ रामदासउवाच ॥ शृणु शिष्य भा विनिते कथां वक्ष्यामि भूतवत् ॥रामनामोद्यापनस्य
विस्तारेण मनोरमाम् ॥१०॥ पंडुपुत्रो महावीरो बंधुभिश्च युधिष्ठिरः ॥ स्त्रिया मात्रा राज्यभ्रष्टो वने
वासं करिष्यसि ॥११॥ तं द्रष्टुं द्वापरे कृष्णः कदा गच्छति वै वने ॥तं कृष्णं पूजयित्वा स तस्मै प्र-
श्नं करिष्यति ॥१२॥ युधिष्ठिरउवाच ॥ देव देव जगन्नाथ भक्तानां वरदायक ॥ किंचित्त्वां प्रष्टु
मिच्छामि मयि तुष्टोसि चेत्प्रभो ॥१३॥ लक्ष्मी प्राप्तिकरं पुण्यं पुत्रपौत्र प्रवर्द्धनम् ॥ व्रतमाख्या-
हि देवेश राज्यभ्रष्टस्य मेऽधुना ॥१४॥ श्रीकृष्णउवाच ॥गुह्याद्गुह्यतमं श्रोतुं यदि वांछसि

भूपते ॥ तदा निगदतो मत्तः सकाशा श्रृणु सादरम् ॥ १५॥ राम नाम्ना परं नास्ति मोक्ष लक्ष्मी प्रदायकम् ॥ तेजोरूपं यदव्यक्तं रामनामाभि धीयते ॥१६॥ तस्मात्तन्नाम जप्त्वा वै रामरूपो भवन्नरः॥ एतदेव हि रामेण मारुतिं प्रति भाषितम् ॥१७॥ युधिष्ठिर उवाच ॥ कस्मिन्काले हनुमते रामेणैवोपदेशितम् ॥ एतद्विस्तारितोऽब्रू[illegible] सुमते रुक्मिणीपते ॥१८॥ श्रीकृष्णउवाच ॥ पुरा रामावतारे च सीता नीता सुरारिणा ॥ हनुमंतं समाहूय रामचंद्रोऽब्रवीद्वचः ॥१९॥ श्रीरामउवाच ॥ वायुसूनो महावीर सीतान्वेषण हेतवे ॥ समस्तां दक्षिण दिशं गत्वा शुद्धिं समानय ॥२०॥ हनुमानुवाच ॥ रघुनाथ जगन्नाथ दक्षिणस्यां हि सागरः ॥ बहवो राक्षसाः संति तत्र शक्तिः कथं मम ॥२१॥ श्रीरामचंद्रउवाच ॥ मारुते रावणादीनां राक्षसानां निवारकम् ॥ मंत्र ददामि सुगमं येन सर्व जयो भवेत् हनुमान उवाच ॥ महाराज कृपासिंधो दीनानां त्वं सुतारकम् ॥ उपदेशोऽधुना कार्यस्तस्य मंत्रस्य तत्वतः ॥२३॥ इति श्रुत्वा च तद्वाक्यं रहस्याहूय सत्वरम् ॥ मारुते र्दक्षिणे कर्णे श्रियमत्युपदेशितम् ॥२४॥ तस्य मंत्रस्य सकलं पुरश्चरणमुत्तमम् ॥ लक्ष संख्यं विधायाशु तस्थे तु दक्षिणां दिशम् ॥२५॥ तन्मंत्रस्य प्रभावेन नानाजलचराकुलम् ॥ दुर्गमं सागरं तीर्त्वा लंकामध्ये समाययौ ॥२६॥ न स लभे तत्र शुद्धिं अशोकाख्य वनं गतः ॥ वृक्षमूले स्थितां सीतां दूरतोऽग्रे ददर्श सः ॥२७॥ तां दृष्ट्वा शीघ्रमागत्य हर्षनिर्भर मानसः ॥ सीतायाश्चरणौ नत्वा दंडवत्पतितो भुवि ॥२८॥ अत्यंत सूक्ष्म वपुषं बालकाकार संयुतम् ॥ तं भूमौ पतितं दृष्ट्वा सीता वचनमब्रवीत् ॥२९॥ आगतो बाल कुत्रत्यः ......

को ९४

कस्य बालकः ॥ हनुमान उवाच ॥ सीता माता पिता रामो रामचंद्र समीपतः ॥३०॥ समागतोऽस्मि हनुमान् ग्राह्ययं मुद्रिका त्वया ॥ रामनामांकिता मुद्रां शुध्दकांचन निर्मिताम् ॥३१॥ ज्ञात्वा रामस्य सा सीता परमं तोषमाययौ ॥ तां ज्ञात्वा तोषसहितामंजनेयोऽब्रवीद्वचः ॥३२॥ मातः क्षुधास्त्यति मम त्वद्यादि क्लेशकारिणी ॥ अस्मिन् वनेऽति मधुरः फलसंघोऽति दुर्लभः ॥३३॥ तवाज्ञयाऽहं सीतेऽद्य करिष्ये भक्षणं ध्रुवम् ॥ सीता उवाच ॥ भो बालक महावीर रावणोस्ति वनाधिपः ॥३४॥ न शक्तिर्नच शक्यं ते कथं त्वं भक्षयिष्यसि ॥ हनुमान् उवाच ॥ श्रीरामेति परो मंत्र शस्त्रं मे हृदयांतरे ॥३५॥ तेन सर्वाणि रक्षांसि तृणरूपाणि सांप्रतम् ॥ इत्युक्त्वाथ तदीयाज्ञां गृहित्वा वनभूरुहान् ॥३६॥ उन्मूलनं चकाराथ श्रुत्वा रक्षांसि चाययुः ॥ युध्दं च तुमुलं जातं पश्चान्मंत्रप्रभावतः ॥३७॥ दलितं राक्षसबलं दग्धा लंका हनूमता ॥ पुनर्गत्वाऽशोकवनं सीतां नत्वा च मारुतिः ॥३८॥ तद लंकामादाय रामचंद्रःसमाययौ ॥ रामायालंकृतिं दत्वा तस्थौ तत्पादसन्निधौ ॥३९॥ रामोऽलंकृतिमादाय तच्छुत्वा मुदितो भवत् ॥ रामनाम प्रभावोऽयं महाराज युधिष्ठिर ॥४०॥ तस्मात्त्वमपि रामनाम जपं कुरु ॥ युधिष्ठिर उवाच ॥ कथंजपो विधेयोऽस्य पुरश्चरण कं फलम् ॥४१॥ कथ मुद्यापनं चैव सर्वमाख्या हि यत्नतः ॥ श्रीकृष्ण उवाच ॥ स्नात्वा शुचिस्थल जाप्यो तुलसी मालयेति च ॥४२॥ अथवा पुस्तके लेख्यं स्मरणं हृदयेऽथवा ॥ कोटिसंख्या परिमितमथवा लक्षसंमितम् ॥४३॥ मंत्रा नानाविधाः संति शतशो राघवस्य च ॥ तभ्यस्त्वेकं वदाम्यद्य तव मंत्रं

युधिष्ठिर ॥ ४४॥ श्रीशब्द पूर्वं जय शब्द मध्यं- जयद्वयेनापि पुनः प्रयुक्त ॥ त्रिःसप्त कृत्वा रघु-
नाथ नाम-जपो निहन्या द्विजकोटि हत्या ॥ ४५॥ अनेनैव च मंत्रेण जपः कार्यः सुमेध सा ॥ लक्ष-
संख्ये कृते तस्मिन्नुद्यापनविधिं चरेत् ॥ ४६॥ जपाच्छतगुणं पुण्यं रामनाम प्रलेखने ॥ लक्षे ल-
क्षे पृथक्कार्यमुद्यापनमनुत्तमम् ॥ ४७॥ उद्यापन विधानं च संक्षेपेण वदामि ते ॥ पूर्वेद्युरुपवास-
स्याद्धात्री मंडपिकांतरे ॥ ४८॥ रामलिंगात्मके भद्रे रामतोभद्रके ऽथवा ॥ अष्टोत्तर सहस्राख्ये
ह्यष्टोत्तरशते ऽथवा ॥ ४९॥ धान्यराशौ मध्यदेशे कलशं स्थापयेत्ततः ॥ तन्मुखे पात्रेवैव वरवस्त्रोप-
शोभते ॥ ५०॥ सीता लक्ष्मण संयुक्तां राघव प्रतिमां शुभाम् ॥ आमाषात्पलपर्यंतां सौवर्णी प्रतिमां
यजेत् ॥ ५१॥ राजतीं वा ताम्रमयिं वित्तशाठ्यं न कारयेत् ॥ उपचारैः षोडशभिः पूजयेत्सुसमाहि-
तः ॥ ५२॥ रामनामांकितं हेमपत्रं तत्पुरतोऽर्चयेत् ॥ कथां श्रुत्वा च विधिवद्देवदेवं क्षमापयेत् ॥
५३ सापराधं च शरणं त्वद्भक्तिनिरतं हि माम् ॥ दीनानाथ कृपासिंधो त्राहि संसारसागरात् ५४
रात्रौ जागरणं कृत्वा गीतवादित्र मंगलः ॥ ततः प्रभातसमये स्नात्वा होमं समारभेत् ॥ ५५॥ दशां-
शेनैव होमस्यात्तद्दशांशेन तर्पणम् ॥ गव्येन पयसा कार्यं राममंत्रेण यत्नतः ॥ ५६॥ तस्यापि च द-
शांशेन कुर्याद्ब्राह्मणभोजनम् ॥ आचार्याय सवत्सागां सालंकारां सवाससाम् ॥ ५७॥ भक्त्यार्पयेत्स-
सुवर्णां व्रतसंपूर्णहेतवे ॥ अन्यानपि द्विजान्तोष्य राज्यं लक्ष्मीं समाप्नुयात् ॥ ५८॥ पुत्रार्थी लभते पुत्रं
धनार्थी लभते धनम् ॥ नानादानानि तीर्थानि प्रदक्षिण तपांसि च ॥ ५९॥ तानि सर्वाणि लक्षांशं समा-

न्यस्य भवंति च ॥ निःकामो [illegible] वास कामो वा यः कुर्याद्भक्तिसंयुतः ॥ ६०॥ तस्य सर्वेऽपि का-
मास्यु रिहलोके परत्र च ॥ लिखित्वा पुस्तकं वापि वर रामायणस्य च ॥६१॥ एवमुद्यापनं कार्यं श्लो-
कसंख्या दशांश तः॥ पूर्ववध्धवनं कार्यं तद्दशांशाच्च तर्पणम् ॥ ६२॥ तस्यापि च दशांशेन कुर्याद्ब्रा-
ह्मणभोजनम् ॥ पूर्व श्लोके नवात्सेन हवनादिं प्रकीर्तितम् ॥ ६३॥ अथवा ग्रंथश्लोकानां दशांशै र्हवनं
स्मृतम् ॥ अथवाग्रे वक्ष्यमाण रीत्या वै शकुनस्य च ॥६४॥ श्लोकं निष्काष्य वै ग्रंथादाचरेद्धवनादिक
म् ॥ अथवा रामगायत्र्या राममंत्रैस्तु वाचयेत् ॥ ६५॥ हेमपत्रस्त्वेक एव लेख्यो श्लोकः शुभावहः ॥ अर्च-
यित्वा पूर्ववच्च हेमपत्रं सविस्तरम् ॥ ६६॥ राममूर्ते पुरः स्थाप्य सर्वं तद्गुरवेऽर्पयेत् ॥ श्रीराम क-
विता कृत्वा त्वेवमुद्यापनं नरैः ॥६७॥ अवश्यमेव वर्तव्यं कविताफलमिप्सुभिः ॥ देवालय गजाश्वा-
नां वृक्षाणां वापि कूपयोः ॥६८॥ सर्वापणानामन्यानां चिन्हार्थे योषितां नृणाम् ॥ काव्यानां च कवि-
नां च पश्वादिनां च सर्वशः ॥६९॥ राजप्रासाद वास्तुनां नामकर्म विशेष्यते ॥ विना कर्णोपदेशेन
स्थावराणां विधानकम् ॥७०॥ कृत्वा नामकर्मणश्च कार्यमुद्यापनं ततः ॥ लक्षपुष्पैः पूजनादि यद्यच्छ्री-
राघवस्य च ॥७१॥ संतोषार्थं कृतं तस्य कार्यमुद्यापनं वरम् ॥ एवं राजन्मया सर्वं तवाग्रे विनिवेदि-
तम् ॥ ७२॥ रामनाम प्रभावेन स्वीयं राज्यं लभिष्यसि ॥ रामदासउवाच ॥ युधिष्ठिरस्तु तच्छ्रुत्वा
करिष्यति यथाविधि ॥७३॥ मास त्रयेण तस्यैव राज्य प्राप्तिर्भविष्यति ॥ अंते च परमस्थानं गमि-
ष्यति मनोबलात् ॥७४॥ एवं कथा भविष्या च तवाग्रे विनिवेदिता ॥ रामनाम महिमानमिमं-

नरः - सं श्रृणोति परमभक्तिसमेतः ॥ पुत्रपौत्रजनसुखं भुवि भुक्त्वा - प्राप्नुयात्परममोक्षपदं तु सः ॥७६॥ नित्यं व्याख्या श्रीरामाग्रे कर्तव्यो त्वतिभक्तितः ॥ आनंदरामचरितस्याथवाऽन्यस्य विस्तरात् ॥७७॥ सर्गस्य वाऽर्द्धं सर्गस्य पादसर्गस्यवा तथा ॥७८॥ श्लोकार्धं श्लोकपादं वाऽऽनंदरामायण स्थितम् ॥ ये पठंति नरा नित्यं ते नरा मुक्तिभागिनः ॥७९॥ येऽश्वत्थमूले मुनिवृक्षमूले - तथा तुलस्याश्च समीपदेशे ॥ पुण्यस्थलेमस्करि भूसुराग्रे - श्रीरामचंद्रस्य पुरः सदैवम् ॥८०॥ तथा सभायां द्विजवृंदमध्ये - नद्यास्तटे वा रघुनायकस्य ॥ आनंदरामायणमादरेण - पठंति धन्या भुवि मानवास्ते ॥८१॥ रामायणं लिखित्वा तु दातव्यं भूसुराय हि ॥ समग्रं वा कांडमेकं सर्गो वाऽति सुपुण्यदः ॥८२॥ सर्गस्त्वेकं प्रत्यहं हि लिखित्वा भूसुराय हि ॥ संपूज्य देयश्चानंदरामायण समुद्भवः ॥८३॥ अशक्तेन नव श्लोकाः सदा देया विलेख्य च ॥ प्रीत्यर्थं रामचंद्रस्य विप्रेभ्यः परिपूज्य वै ॥८४॥ नित्य दानमेतदेव कर्तव्यं सर्वदा नरैः ॥ नित्यं सुवर्णमुद्राया दानेन यत्फलं स्मृतम् ॥८५॥ तत्फलं प्रत्यहं सर्गदानेन लभ्यते नरैः ॥ नानेन सदृशं दानं राघवस्यातितोषदम् ॥८६॥ तस्मादवश्यमेवैव दानं कार्यं निरंतरम् ॥ श्रीरामचंद्रस्य तुष्ट्यर्थं नवभिश्च पूगिफलैः ॥८७॥ नागवल्ली नवदलैस्तांबूलः सोपचारकः ॥ पृथग्नव भूसुरेभ्यो देया नित्यं स दक्षिणः ॥८८॥ अशक्तेनैव एवापि देयस्तांबूल उत्तमः ॥ न तांबूल समं दानं किंचिदस्ति जगत्त्रये ॥८९॥ तांबूलः शुद्धिदः प्रोक्तस्तांबूलो मंगलप्रदः ॥ तांबूलः श्रीकरो ज्ञेयस्तांबूलो राघवप्रियः ॥९०॥ तस्मात्प्रयत्नतस्त्वत्र देयस्तांबूल

उत्तमः ॥ सदा रामं पूजयेच्च सदा रामं विचिंतयेत् ॥९१॥ श्रीरामस्मरणं नित्यं कार्यं भक्त्या मुहुर्मुहुः ॥ यस्य वाण्यां रामनाम हस्तौ पूजन तत्परौ ॥९२॥ श्रीरामचरितान्येव श्रोतुकामा च यच्छ्रुतिः ॥ रामतीर्थानि रामेशान्रामक्षेत्राणि यानि च ॥९३॥ यदंघ्रिणी गंतुकामौ रामपूजो स वान्वरान् ॥ स द्रष्टुकामौ यन्नेत्रौ स धन्यः पुरुषः स्मृतः ॥९४॥ राम रामेति रामेति ये वदंति जना भुवि ॥ महापातकिनस्तेऽत्र मुक्तिं यांति न संशयः ॥९५॥ रामचंद्रेति मंत्रोस्ति वागस्ति वशवर्तिनि ॥ तथापि नरके घोरे पतंतित्यद्भुतं महत् ॥९६॥ श्रीरामनामामृत मंत्रबीज-संजीवनी चेन्मनसि प्रविष्टा ॥ हालाहलं वा प्रलयानलं वा-मृत्योर्मुखं वा विशदां कुतोभिः ॥९७॥ आसने शयने निद्राकाले भोजन कर्मणि ॥ क्रीडने गमने नित्यं राम एव विचिंतयेत् ॥९८॥ श्रवणीयः कीर्तनीयश्चिंतनीयो सदा नरैः गेयस्त्वन्यानुपदेश्यो राम एवावनीतले ॥९९॥ स्वर्गसुराणाममृतं यथास्ति परमं शुभम् ॥ रामनामामृतं भूम्यां क्षयं नाप्नोति वै कदा ॥१००॥ गोपिचंदन लिप्तांगो राममुद्रांकितो नरः ॥ रामनामोच्चारकश्च तुलसीकाष्टमालिकाः ॥ १०१ ॥ शंख चक्र गदा पद्म धारको राममानसः ॥ यस्त्वत्र स नरो धन्यो नेतरश्च कदाच न ॥२॥ स एव पुरुषोग्नेयो यो रामेति सदा वदेत् ॥ स एव पुरुषो निंद्यस्त्वत्र रामं स्मरेन्नय ॥३॥ ये नराः शिवसद्भक्तिं कृत्वा निंदति राघवम् ॥ पूर्ववच्च खरास्तेऽपि नरा ज्ञेयोऽवनीतले ॥४॥ राम एव हरो ज्ञेयः शिव एव रघूत्तमः ॥ उभयोर्नांतरं ज्ञेयं भेद दृक् नारकी नरः ॥५॥ राम शंकरयोरत्र भिन्नत्वं येन मानितम् ॥ अजागल स्तनवच्च तस्य जन्म वृथा गतम् ६

शंभोश्च हृदयं रामो रामस्य हृदयं शिवः॥ नैवांतरं कल्पनीयं कुतर्कै विविधैर्नरैः ॥७॥ रामेति द्व्यक्षरं नाम ये वदंतित्वहर्निशम्॥ न कस्यापि भयं तेषां जीवन्मुक्ताश्च ते नरः ॥८॥ राममुद्रांकितं दृष्ट्वा नरं ते यमकिंकराः॥ पलायंते दशदिशो सिंहं दृष्ट्वा गजो यथा ॥ ९ ॥ ललाटे पृष्ठदेशे च कुक्षोर्द्वै जठरे तथा ॥ हृदये भुजयोर्द्वै हि मस्तके त्विति वै नव ॥१०॥ राममुद्रा धारणीया गोपिचंदन चिन्हिताः॥ राममुद्रा महाश्रेष्ठा सर्वदोष निकृंतनि ॥१११॥ सदा गेहे नरैर्धार्या गोपिचंदन चिन्हिताः॥ राम मुद्रा—स्ति यद्देहे तं पापं स्पृशते नहि ॥१२॥ स्तुतिः सदैव रामस्य स्तोत्रैः कार्या त्वहर्निशम्॥ प्राचीनैर्वा नवीनैश्च स्वबुध्द्या रचितैरपि ॥१३॥ स वाग्विसर्गो जनताघ विप्लवो यास्मिन्प्रतिश्लोकमबध्दवत्यपि ॥ नामान्यंतस्य यशोंऽकितानि। यच्छुण्वंति गायंति गृणंहति साधवः ॥१४॥ कवित्वमत्यशुध्दं च रामनाम्नांकितं च यत्॥ तज्ज्ञेयमतिशुध्दं च श्रवणात्पातकापहम्॥१५॥ यस्मिन्नामस्य कृष्णस्य चरित्राणि महंति च ॥ कवित्वेतत्पुण्यतम सदा गेयं महत्तमैः॥१६॥ श्रृणु शिष्य तवाग्रेऽन्य द्गुह्यं किंचिद्ब्रवीम्यहम्॥ कविता विषयं यच्च सर्व संदेहनाशकम् ॥१७॥ अश्वत्थामा बलिर्व्यासो हनुमांश्च बिभीषणः॥ कृपः परशुरामश्च सप्तै ते चीरजीविनः॥१८॥ एवं यद्वचनं शिष्य प्रोच्यते सर्वदा बुधैः॥ तदग्रे सर्वदा सत्यं ज्ञेयं कलियुगेऽपि च ॥१९॥ येषु मंत्रबलं भूम्यां वर्ततेऽत्र नरेषु हि॥ अश्वत्थामांशभूतास्ते ज्ञेयाश्च पुरुषा बुधैः ॥१२०॥ न्यायार्जितेन द्रव्येण राज्यं कुर्वंति धर्मतः॥ बल्यंश भूता स्ते ज्ञेया मानवा जगतीतले ॥१२१॥ रामस्तुतिं कवित्वैर्ये चरित्रं वर्णयंति च ॥ व्यासांश भूता स्ते ज्ञेया मानवा जगतीत-

ले ॥२२॥ येये वीरास्त्वत्र भूम्यां वायुपुत्रांशरूपिणः ॥ ते तेज्ञेयो नरास्तस्य चिरजीवित्व सूचकाः ॥२३॥ ये ये शांता रामभक्ताः संत्यत्र मानवा भुवि ॥ बिभीषणांश भूतास्ते ज्ञेयाश्च सकलैर्जनैः ॥२४॥ ये धैर्य-वंतो यो धारः संत्यत्र मानवा भुवि ॥ कृपाचार्यांश भूतास्ते । ज्ञेयाः सर्वे बुधैः सदा ॥२५॥ ये वीरा क्रोधसं-युक्तास्तेऽत्र सर्वेऽवनीतले ॥ जामदग्न्यंश भूतास्ते सदा ज्ञेया नरोत्तमैः ॥२६॥ चिरंजीविति व्यासो कः कथंज्ञेयो जनैर्भुवि ॥ तस्य स्वरूपं वक्ष्यामि सावधान मनाःशृणु ॥२७॥ ये गीर्वाण्या कवित्वानि करि-ष्यंत्यवनीतले ॥ व्यासांशभूतास्ते ज्ञेयाः पंडिता मानवास्त्विह ॥२८॥ ये रामचंद्रं कृष्णं च शिवं स्त्युत्या स्तुवंति हि ॥ वर्णयंति चरित्राणि तेषां ते व्यासमूर्तयः ॥२९॥ ये राजानं गणिकानां नारि राज्ञः सभां तथा ॥ नरं स्तुवंति स्तुत्या स्ते नज्ञेया व्यासमूर्तयः ॥१३०॥ यावद्भूम्यां तु रामस्य चरित्राणि स्तुवंति हि ॥ तावदत्र स्मृतो व्यासस्ततो मुक्तिं गमिष्यति ॥३१॥ किं फलं कस्य पाठाच्च तद्ब्रवीमि तवाधुना ॥ श्रृणु स्वस्थ मनाः शिष्य विस्तारेणोच्यते च यत् ॥१३२॥ इति श्रीशतकोटि रामचरितांतर्गत श्रीमदानंदरामायणे वाल्मी-किये मनोहरकांडे रामनाम लक्षोद्यापनादि वर्णनं नाम सप्तमः सर्गः ॥ शुभं भवंतु ॥ श्रीसीतारामचंद्रा-र्पणमस्तु ॥

आकोला

चैत्र कृष्ण ११ शके १८७५

॥ श्रीगणेशायनमः ॥ श्रीरामदासउवाच ॥ शिरो व्याहृतिसंयुक्ता गायत्री परिकीर्तिता ॥ वेदाक्षराणां तु-
ल्या सा शतेन मुनिभिः स्मृता ॥१॥ चतुःशतेन गायत्र्यासंमितं परिकीर्तितम् ॥ पावमानं महासूक्तं षट्
शतं च सुपुण्यदम् ॥२॥ तथोपनिषदः पुण्या गायत्र्यक्षर संख्यया ॥ प्रोच्यते पुण्यदा लोके पुण्यसूक्तानि
यान्यपि ॥३॥ संहिता पाठतः प्रोक्तं द्विगुणं पदपाठतः ॥ त्रिगुणं क्रमपाठेस्या जटापाठे तु षड्गुणम् ॥ ४॥
महाभारत पाठस्तु वेदतुल्यः प्रकीर्तितः ॥ पुराणानां तदर्धेन स्मृतिनां च तथोच्यते ॥५॥ भारते भगवद्गीता
तथा नामसहस्रकम् ॥ गायत्र्याश्च समं प्रोक्तं पुण्ये पापक्षयेऽपि च ॥६॥ पाठेन यत्फलं प्रोक्तमर्थ-
ज्ञानाच्चतुर्गुणम् ॥ सद्भक्तेभ्यः श्रवणाच्च पुण्यं दशगुणं स्मृतम् ॥७॥ भूमिदानं यथालोके महादान-
मितिरितम् ॥ विद्यादानं दशगुणं ततोऽपि स्यात्फलप्रदम् ॥८॥ विष्णुदासउवाच ॥ कस्मै दानं प्रव-
र्तव्यं सुवर्णस्येतरस्य वा ॥ कथं वा पात्रतामेति ब्राह्मणश्चेत्तरोऽथवा ॥९॥ रामदास उवाच ॥ वसेद्गुरु-
कुले यस्तु भिक्षान्नाशी श्रृतिं पठन् ॥ आधित्य शाखां पूर्णां स यथोक्तं लभते फलम् ॥१०॥ पदंपाठे तद-
र्धं स्यात्तदर्धं क्रमपाठतः ॥ शिष्यस्याध्यापकस्यापि संहिता पठतः फलम् ॥ प्रत्यक्षरंतु गायत्री सकृत्पा-
ठ समं लभेत् ॥११॥ पदपाठे तदर्धं स्यान्तदर्धं क्रमपाठतः ॥ संहिता पाठतोद्विघ्नं गाथापाठ फलं स्मृतम्
॥१२॥ ततोऽप्युपनिषत्पाठे द्विगुणं फलमीरितम् ॥ पाठे च पठणे तुल्ये फलं वै गुरु शिष्ययोः ॥१३॥ अ-
धिता त्रिगुणं तु स्यात्फलं वै कंठपाठतः ॥ तदर्द्धं लेख्यपाठात्तु फलं मुक्तं मनीषिभिः ॥१४॥ अधित्यापि
न यस्य स्यात्कंठपाठ समं स्वतः ॥ कृते यत्नेऽपि दैवेन स लभेत्पाठ मात्रजम् ॥१५॥ प्रज्ञायामपि सत्यां तु वि-

स्मरेत्पठिता श्रुतिः॥ अनास्थया प्रमादेन मृतोगर्धभतां व्रजेत्॥१६॥ यावद्वेदोत्थ वर्णानां पठितानां च विस्मृतिः॥ तावद्वर्षाणि भुक्त्वा स खरयोनि ततः परम्॥१७॥ पाठपुण्यार्जितं लोकं लभते नात्र संशयः॥ स्वशाखा प्रथमं यस्तु पठित्वा न्यां पठेद्यदि॥१८॥ प्रत्यक्षरं तु लभते गायत्र्या द्विगुणं फलम्॥ पठित्वा तु स्व कां शाखां रामोत्कर्षं न वेति यः॥१९॥ रामपूजायुतश्चापि सोऽर्द्धं फलमवाप्नुयात्॥ वर्जितो रामभक्त्यायः केवलं पाठको भवेत्॥२०॥ लभेत्फलस्य तुर्यांशं द्वेष्टुर्निष्फलं भवेत्॥ अंगानि वेदाश्चत्वारो मिमांसा न्यायविस्तरः॥२१॥ पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दशः॥ आयुर्वेदो धनुर्वेदो गांधर्व चार्थसार्थकम्॥२२॥ उपविद्याश्चतस्रस्युरेवमष्टादश स्मृताः॥ शिक्षा कल्पो व्याकरणं निरुक्तं छंद ज्योतिषम्॥२३॥ इत्यंगानि तु वेदस्य योधिते तत्फलं श्रृणु॥ संहितापाठतोऽप्यर्धं लभते पाठतः फलम्॥२४॥ शिक्षा घ्राणं तु वेदस्य कल्पौ पाणि प्रकीर्तितौ॥ मुखं व्याकरणं प्रोक्तं निरुक्तं श्रोत्रमुच्यते॥२५॥ ज्योतिषं नयनं प्राहुः छंदः पादाविति स्मृतौ॥ शिक्षा कल्प निरुक्तानां छंद सश्चार्थ वित्तये॥२६॥ सकृद्योगं प्रकुर्वंति फलं तेषां चतुर्गुणम्॥ भवेत्पाठा ततो ज्योतिःशास्त्रार्थ ज्ञानतः फलम्॥२७॥ संहितापाठजं पुण्यं गणितज्ञो लभेत्फलम्॥ ज्योतिषां संहिता ज्ञानादर्थं तु लभते फलम्॥२८॥ जातक प्रश्न योगेन न किंचित्पुण्यमीरितम्॥ वेदाध्ययन हीनो यो जातकप्रश्नमात्र वित्॥२९॥ नवेति गणितं यऽस्तु ज्ञेयो नक्षत्र सूचकः॥ ज्ञानं नार्हति विप्रस्तु सर्वकर्मसु गर्हितः॥३०॥ स्वल्पामपि स्वां शाखां योनधित्य द्विजाधमः॥ अंगादिष्वन्यशास्त्रेषु सक्तः स तु विगर्हितः॥३१॥ किंचिच्छाखामधित्यापि यश्चोपनिषदः पठेत्॥ ज्ञानाधिक्याय

शास्त्राणि वेदज्ञानार्थमेव वा ॥३२॥ अधिते ज्ञान पात्रस्यात्पूजाधिक्येन युज्यते ॥ यतो विप्रेषु वृध्दत्वं पूज्य-
त्वं ज्ञानतो स्मृतम् ॥३३॥ ज्ञानाधिक्येषु तेषु स्यात्पात्रापात्र विचारणा ॥ पुण्याधिक्येन वा ज्ञेया पाठकानां च
पात्रता ॥३४॥ ज्ञानि पाठकयोर्मध्ये ज्ञानु पुण्याधिकोय तः॥ ततः पूजत्वमस्यस्या ज्ज्ञानिनस्त्विति मे मतम्
॥३५॥ नहि ज्ञानेन सदृशं पवित्रमिह विद्यते ॥ प्रियो हि ज्ञानिनोत्यर्थं समं सोऽपि च तत्परः ॥३६॥ परं
वादि जये शक्तिर्यस्यस्यान्तद्धुतिं पुनः स एव श्रेष्ठतां याति पाठकानां शतादपि ॥३७॥ वदादि सर्वविद्या-
नामर्थज्ञानाय यः पठेत् ॥ शास्त्रं व्याकरणं नाम न भेदे दशमं फलम् ॥३८॥ ज्ञानाधिक्येन लभते वेदार्थज्ञान-
जं फलम् ॥ मिमांसा द्विविधा प्रोक्ता कर्मणो ब्रह्मणस्तथा ॥३९॥ वेदार्थज्ञान तुल्याद्या द्वितीयायाः फलं
श्रुणुः ॥ प्रत्यक्षरं तु लभते गायत्री शतजं फलम् ॥ येतुपयोगिनः साक्षात् ग्रंथास्तेभ्यो भवंति हि ॥४०॥
तेऽप्यर्थफलदा ज्ञेया व्यवधाना तु पादशः ॥ वेदोपनिषदामर्थे ज्ञानधिक्याय चेत्पठेत् ॥४१॥ प्रदीपं सर्वविद्या-
नां या विद्धान्याय विस्तरान् ॥ वेदार्थज्ञान तुल्यं तु फलं तस्य प्रकीर्तितम् ॥४२॥ केवलं जीविकार्थं तु यः
पठे न्यायविस्तरम् ॥ हेतुवादरतो ब्रह्म जिज्ञासा नैव यः पठेत् ॥४३॥ स श्रृगालो भवेदेव पठिताक्षरसंख्य-
या ॥ वर्षाणि नात्र संदेहो वृथा भाषण तत्परः ॥४४॥ पुराणं वैष्णवं मात्स्यं कौर्म्यं भागवतं तथा ॥ आदित्यं गा-
रुडं स्कांदं मार्कंडेयमथाष्टमम् ॥४५॥ ब्रह्म ब्रह्मांड लैंग्यानि ब्रह्मवैवर्तमेव च ॥ भविष्योत्तरमाग्नेयं पाद्म
वामनमेव च ॥४६॥ वाराहं चैव वायव्यं ह्यष्टादशानि वै मिति ॥ महापुराणान्येतानि रामायण भवानि हि ४७
रामायणात्पुराणाच्च न्यासेन खंडितानि हि ॥ अंतः पुराण नामाभूदेतेषां जगतीतले ॥४८॥ आदौ कृतानि

यान्यत्र तेषां ज्येष्ठत्व सूचकः ॥ महाशब्दं प्रोच्यते हि वैष्णवादिषु षट् त्रिषु ॥ ४९॥ पुराणानां तु सर्वेषां
फलं शिष्य ब्रवीम्यहम् ॥ वेदतुल्य फलं पाठे श्रवणे च तदर्धकम् ॥५०॥ अर्थश्रवणतश्चास्य पुण्यं दश-
गुणं स्मृतम् ॥ वक्तुःस्या द्विगुणं पुण्यं व्याख्यातुश्च शताधिकम् ॥ ५१॥ अन्यान्युप पुराणानि संति तेषां
फलं शृणु ॥ विष्णु धर्मोत्तरं शैवं बृहन्नारदमेव च ॥ ५२॥ भगवती पुराणं च लघुनारदमेव च ॥५३॥ भवि-
ष्यर्व षष्ठं स्यात्तत्र भागवतं तथा ॥ अष्टमं नारसिंहं स्यात्पुराणं रेणुकाभिधम् ॥५४॥ दशमं तत्वसारस्यात्
वायु प्रोक्तं तथैव च ॥ नंदि प्रोक्तं द्वादशं स्यात्तथा पाशुपताभिधम् ॥५५॥ यम नारद संवादस्तथा हंस पु
राणकम् ॥ विनायक पुराणं च बृहद्ब्रह्मांडमेव च ॥५६॥ पुष्पं विष्णुरहस्यं स्यादिति ह्यष्टादशानि वै ॥एता
न्युपपुराणानि पुराणार्धं फलानि च ॥५७॥ भारतं वेदतुल्यं स्यादर्थतोऽधिकमुच्यते ॥ तथापि भगवद्गी-
ता विष्णोर्नाम सहस्रकम् ॥५८॥ दशाधिक फलं प्रोक्तं भारतादपि सर्वशः ॥श्रोतार्धं फलमाप्नोति भ-
क्तितः शृणु यात्तु यः ॥ ५९॥ भारतस्त्वितिहासश्च रामायण समुद्भवः ॥ यद्वेदपाठपुण्यं तज्ज्ञेयं रामायणस्य
च ॥६०॥ पाठात्तदर्धं श्रवणे व्याख्यातुश्च दशाधिकम् ॥ वाल्मीकिना कृतं यच्च शतकोटि प्रविस्तरम् ॥
६१ तत्सर्वेषामादिभूतं महामंगलकारकम् ॥ रामायणादेवनाना संति रामायणानि हि ॥ ६२॥ शेषभूतं
चतुर्विंशं सहस्रं प्रथमं स्मृतम् ॥ तथा च योगवासिष्ठमध्यात्माख्यं तथा स्मृतम् ॥६३॥ वायुपुत्रकृतं
चापि नारदोक्तं तथा पुनः ॥ लघुरामायणं चैव बृहद्रामायणं तथा ॥ ६४॥ अगस्त्युक्तं महाश्रेष्ठं सार-
रामायणं तथा ॥ देहरामायणं चापि वृत्तरामायणं पुनः ॥ ६५॥ ब्रह्मरामायणं रम्यं भारद्वाजं तथैव च ॥

शिवरामायणं क्रौंचं भरतस्य च जैमुनेः॥ आत्म धर्म श्वेतकेतुं ऋषेश्चैव जटायुषुः॥ ६६॥ रवेः पुलस्ते-
र्देव्याश्च गुह्यकं मंगलं तथा॥ गाधिजं च सुतीक्ष्णं च सुग्रीवंच बिभीषणम्॥६७॥ तथाऽनंदरामायणमेत
न्मंगलकारकम्॥ एवं सहस्रशः संति श्रीरामचरितानि हि॥ ६८॥ कः समर्थोऽस्ति तेषां हि संख्यां व-
क्तुं सविस्तरात्॥ शतकोटिमितादेव विभक्तानि पृथक्पृथक्॥ ६९॥ सर्वेष्वप्यानंद संज्ञं वरिष्ठं प्रोच्यते
त्विदम्॥ अस्य पाठेन यत्पुण्यं तत्ते शिष्य वदाम्यहम्॥७०॥ शतकोटिमितं श्रुत्वा यत्फलं लभ्यते नरैः॥
फलमस्य तदर्धं हि ज्ञेयं शिष्य शुभप्रदम्॥७१॥ श्रवणाद्द्विगुणं पाठे व्याख्यातुश्च दशाधिकम्॥ द-
स्मादेतत्सदानंदसंज्ञं श्राव्यं नरोत्तमैः॥७२॥ नानेन सदृशं किंचिच्छ्रुतं चाग्रे भविष्यति॥ सर्वेष्वपि च
शास्त्रेषु पंचरात्रागमोधिकः॥ ७३॥ भगवद्गीताया तुल्यं फलं तस्याखिलस्य च॥ भारतीयकथाबंध स-
द्भक्तैरेव निर्मितम्॥ ७४॥ तत्काव्यं यः पठेत्प्राज्ञो दशांशं फलमाप्नुयात्॥ सद्भक्तै निर्मितं यत्तु श-
तांशं फलदं स्मृतम्॥७५॥ यः करोति स्वयं काव्यं कल्पयित्वा स्वयं कथाम्॥ तच्छ्रमो व्यर्थतामेति तद-
ध्यायि च दोषभाक्॥७६॥ पौराणि भारतिं वापि तथा रामायणस्थिताम्॥ तथाद्युपपुराणां च कथां ग्रथ्नीत
यः स्वयम्॥७७॥ रामाभक्तेऽपि लभते श लोकाधिवास ताम्॥ प्रत्यक्षरं वर्षमेकं वासस्तस्य भवे ध्रुव-
म्॥७८॥ रामभक्तः पुराणेभ्यः कथां ग्रथ्नीतयः स्वयम्॥ व्यासमूर्तिः स्वंलभते ब्रुहस्पति सलोकताम्
॥७९॥ दौहित्रः पोषितः शिष्य आरामश्च जलाशयः॥ सद्ग्रंथकरणं पुत्रः सप्तपुत्राः प्रकीर्तिताः॥८०॥ एवं भू-
म्यामंशभूते नरैस्ते विचरंति हि॥ अश्वत्थामादयः सप्त ये चिरंजीविनः सदा॥८१॥ अतः श्रीरामभ-

क्तैश्च कवित्वै स्तत्स्तुतिः कृता ॥ सापि मान्या सदा श्लाघ्य पठनीया बुधैर्मुहुः ॥८२॥ भारतच्च शतांशे-न फलदात्री स्मृतात्र हि ॥ निंदति ये भक्तकृतां कवितां ते खराः स्मृताः ॥८३॥ तद्भाषा कृतं काव्यं रामवर्णन संयुतम् ॥ भारतस्य सहस्रांशं श्रोतुर्वक्तुः फलं स्मृतम् ॥८४॥ निर्मातुस्तु भवेत्पुण्यं साधु शब्द शतांशतः ॥ गीर्वाणि कविताकर्ता एव व्यासांश ईरितः ॥८५॥ स्व स्व भाषा कवित्वानां कर्तारस्ते कवीश्वराः ॥ गीर्वाणि कविता चापि पदान्वय समन्विता ॥८६॥ अर्थप्रमाणसहिता सैवमान्या नचेतरा ॥ नरस्तु यः कुर्याज्जीविकार्थे कविः क्वचित् ॥८७॥ निष्फलस्तच्छ्रमः प्रोक्त स्तदध्याता च दोषभाक् ॥ उन्मा-देन तु यः कुर्या कामिनीनां तु वर्णनम् ॥८८॥ स हि श्व योनिं प्राप्नोति वर्षाण्यक्षर संख्यया ॥ वेदोक्तार्था-नुसारेण मन्वाद्याः स्मारकाः स्मृताः ॥८९॥ तेषां वै स्मृतयो नाम नानाधर्म प्रवर्तकाः ॥ तत्र केचिद्वैदिकेषु क-र्मस्वधिकृताः पुरे ॥९०॥ अवैदिकेषु मंत्रेषु केचित्पशुसमा स्मृतः ॥ अवैदिकेष्वपि प्रोक्तो नाधिकारो नृणा मिह ॥९१॥ ब्रह्मचारि गृहस्थो वा वानप्रस्थो यतिस्तथा ॥ प्रोक्ता आश्रमिणस्त्वेते भिन्नधर्माण एव च ॥९२॥ कदा कुत्र कथं कर्म केन कार्यमिति स्फुटम् ॥ धर्मशास्त्रं तु निर्णयमन्यथा दोषभाग्भवेत् ॥९३॥ आदेशे यत्कृतं व्यंगमकाले नाधिकारिणा ॥ प्रत्येकं तद्भवेद्व्यर्थं प्रत्यवायोधिको भवेत् ॥९४॥ तस्मादाव-श्यकं तत्तु विप्राणां च विशेषतः ॥ स्मृत्यर्थं ज्ञानतो वापि वेदार्थ ज्ञानतोऽधिकम् ॥९५॥ ऋग्वेदस्योपदेश स्यादायुर्वेदो हि वैदिकः ॥ परेषामुपकाराय स्वस्यारोगार्थमेववा ॥९६॥ जीविकार्थमप्य सौ हि पठित-व्यो द्विजादिभिः ॥ ब्राह्मणं रोगिणं क्षीणमुपचारेण जीवयेत् ॥९७॥ ब्रह्महत्याभवं पापं तस्य नस्यति वै

ध्रुवम् ॥ यतःसलभते पुण्यं चतुः कृच्छ्र शतोद्भवम् ॥ ९८ ॥ एवं पुण्यं भवेत्तस्य तत्तद्वर्णानुसारतः ॥ यत्ने कृतोऽपि योगी न जीवत्यायुषुः क्षयात् ॥ ९९ ॥ सोऽप्यर्थफलमाप्नोति नात्र कार्या विचारणा ॥ जीविकार्थं तु यः कुर्यादुपविद्या चतुष्टयम् ॥ १०० ॥ अिहलोके फलं तस्य परलोके न किंचन ॥ नरो भोगार्णवे मग्नं योऽभ्युद्धरति मानवम् ॥ १ ॥ कस्तेनन कृतो धर्मः का वा पूजा न सोर्हति ॥ गत श्रीर्गणकान्द्वेष्टि गतायुश्च चिकित्सकान् ॥ २ ॥ गतश्रीश्च गतायुश्च ब्राह्मणान्द्वेष्टि मूढधिः ॥ गांधर्वमप्यधीयित रामाग्रे यश्च गायति ॥ ३ ॥ तद्भक्तियुक्तो लभते गांधर्व लोकमुत्तमम् ॥ धनुर्वेदो दंडनीति ब्राह्मणानां तु जीविका ॥ ४ ॥ क्षत्रियाणां तु सा प्रोक्ता वेदादर्ध फलप्रदा ॥ ज्ञानीश्चेतेषु सर्वेषु पुण्यं ज्ञानानुसारतः ॥ ५ ॥ विवेकस्तस्य कर्तव्यो द्रव्यदाने विशेषतः ॥ अन्नस्य क्षुधितः पात्रं पानियस्य पिपासितः ॥ ६ ॥ द्रव्यदाने तु कर्तव्यं विशेषात्पात्रविक्षणम् ॥ खलायां गवि दुग्धस्या दुग्धमप्युरमे विषम् ॥ ७ ॥ पात्रापात्रविचारेण सत्पात्रे दानमुत्तमम् ॥ यथा पुण्याधिकं पात्रं तथा दानं फलाधिकम् ॥ ८ ॥ ज्ञानाधिक्याद्भवेत्पुण्याधिक्यात्पात्रं श्रमेण वा ॥ रामभक्तः स पात्रं स्याद्रामाभक्तो न सर्वथा ॥ ९ ॥ रामद्वेषी वर्जनीयो दर्शनालापनादिषु ॥ संगतश्च भवेत्पूतस्तद्भक्तानां तु नान्यथा ॥ १० ॥ यच्छक्तेरधिकं दद्या तद्दानं परिकीर्तितम् ॥ वित्तशाठ्येन यद्दानं न तद्दानं स्मृतं बुधैः ॥ १११ ॥ देशकाल विशेषेण तत्तत्पात्र विशेषतः ॥ दानस्य फलमुद्दिष्टमधिकं न्यून मे वचः ॥ १२ ॥ विप्र शुक्लं तु यो मूढो न दद्याच्छति संभव ॥ विष्टा क्रिमिर्भवेदेव सुवर्णैरेव संख्यया ॥ १३ ॥ दिव्यवर्षाणि नैवात्र त्वया कार्यस्तु संशयः ॥ य तु ज्ञानवता कर्म क्रियते पुण्यदायक-

म् ॥१४॥ अधिकं तत्फलं प्रोक्तमज्ञानीकृतकर्मणः ॥ यथा यथाऽधिकं ज्ञानं पापहानिस्तथा तथा ॥१५॥
यत्तु ज्ञानवता कर्म क्रीयते पापकारकम् ॥ तन्न्यून फलकः प्रोक्तमज्ञानीकृत पातकात् ॥१६॥ यथा यथा-
ऽधिकं ज्ञानं पापहानिस्तथा तथा ॥ यथैधांसि समिधोऽग्नि भस्मसात्कुरुते क्षणात् ॥१७॥ ज्ञानाग्नि र्दुष्ट
कर्माणि भस्मसात्कुरुते तथा ॥ वर्णाधिक्यं यथा हेम्नो वन्हिसंगे न जायते ॥१८॥ पुण्येन वर्द्धते
पुण्यं पाप स्वल्पं च जायते ॥१९॥ पापेन पाप वृध्दिश्च पुण्यं स्वल्पं च जायते ॥ अतिसूक्ष्मो विचा-
रोयं दुर्ज्ञेयः स्थूल दृष्टिभिः ॥१२०॥ यथाप्येवं विचार्यस्यात्स्व स्व ज्ञानानुसारतः ॥ यस्तु सत्याधिकारे
ऽपि ज्ञाने वा पठनेऽपि वा ॥२१॥ प्रयत्नं नैव कुर्वीत स नरो जायते पशुः ॥ ज्ञानाद्वाऽध्ययनाद्वापि
पुण्यं विप्रस्य वर्द्धते ॥२२॥ इति संक्षेपतः प्रोक्तमेतत्पृष्ठं त्वयानघ ॥ उपनीयं मनेनैव पुण्यं पापम-
थापि वा ॥२३॥ धर्मास्तु बहवः संति तथा पापान्यनेकशः ॥ तत्र तत्रोदितान्येषु प्रायश्चित्तानि वै बु-
धैः ॥२४॥ कर्तव्यानि जनैस्तानि सम्यग्बुध्या विविच्य च ॥ सर्व सारमिदं प्रोक्तं रहस्य पुरतस्त-
व ॥२५॥ गृहनीयं प्रयत्नेन नह्यभक्ताय दीयताम् ॥ सुश्रुषवे साधवे च रामभक्ताय दीयताम् ॥२६॥
इति श्रीशतकोटि रामचरितांतर्गत श्रीमदानंदरामायणे वाल्मीकिये मनोहरकाण्डे सर्वेषां वेदा-
दिनां फलश्रुतिर्नाम अष्टमः सर्गः ॥ शुभंभवतु ॥ श्रीसीतारामचंद्रार्पणमस्तु ॥

आकोला

अधिकवैशारव शु॥ १० रोज गुरुवार शके १८७५

॥श्रीगणेशायनमः॥ विष्णुदास उवाच ॥ गुरोऽन्य रामचंद्रस्य विशेषेण च पूजनम्॥ यस्मिन्काले प्र-
कर्तव्यं तं कालं कथयस्व माम्॥१॥रामदास उवाच ॥ शृणु शिष्य प्रवक्ष्यामि कालं पुण्यतमं शुभम्
॥ वदामि रामचंद्रस्य पूजनार्थं विशेषतः ॥२॥ माघस्य शुक्लपक्षस्य या पुण्या पंचमी तिथिः॥ पु-
ण्या श्री पंचमी नाम्नी सा ख्यातास्ति जगत्त्रये ॥३॥ तदारभ्य सार्द्धमासद्वयं रामं महोत्सवैः॥ पू-
जयेत्पंचमी यावद्वैशाखे कृष्णपक्षजा ॥४॥ प्रत्यहं वाहनारूढं कृत्वा रामं महोत्सवैः॥ भेरि दुंदुभि
निर्घोषैर्महावाद्य पुरःसरैः॥५॥ वार स्त्रीणां नृत्यगीतैः छत्र चामर तोरणैः॥ नाना कुसुम वर्षा वै र्नाना
स्तोत्रादि पाठनैः॥६॥ माघकृष्ण चतुर्थ्याश्च नवमी मधुशुक्लजा ॥ याव तावत्फलाहारिश्चैकगीति
दिनानि हि ॥७॥ सीतारामस्य नित्यं हि केचित्कुर्वंति पूजनम्॥ पौर्णिमांताः स्मृताश्चात्र मासाः सर्व
हि भो द्विज ॥८॥ नाना परिमल द्रव्यांजलि ना मोचनादिभिः॥ नानामांगल्यवस्तुनामंजलिभिः सुमो
चनैः॥९॥ नानाकुसुमरंगानां तैलानां च परस्परम्॥ रामं च वारनारीश्च जलयंत्रैः करधृतैः॥१०॥ मुहु-
र्मुहु षेचनाद्यैस्तथा स्त्रीणां सुगायनैः॥ द्विजानां वेदघोषैश्च धूपैर्नीराजनादिभिः॥११॥ सहकारा राम
मध्ये नीत्वा वै परमोत्सवैः॥ सहकारवृक्ष बंधदोलके तं न्यवेशयत्॥१२॥ नागेन वा पुष्पकेन शेषयाने-
न वाजिना ॥ रथेन गरुडेनापि वायुपुत्रेण वा तथा ॥१३॥ यानैर्नवभिरेतैश्च सदा नेयो रघूत्तमः॥ आम्र
वृक्षा राममध्ये वल्लि पुष्प नगान्विते ॥ अवनिं चंदनैर्लिप्त्वा विकिर्य कुसुमानि च ॥१४॥ आच्छाद्य ना-
नावस्त्रैश्च शोभनीयावनिः शुभाः॥ हेमसिंहासनश्चैव कृत्वा दोलकमुत्तमम्॥१५॥ च्यूतवृक्षस्य शा-

खायास्तं बद्ध्वा श्रृंखलादिभिः ॥ तत्र श्रीरामतोभद्रे रामचंद्रं प्रपूजयेत् ॥१६॥ नाना नवविधैः पुष्पैः षो-
डशैरुपचारकैः ॥ संपूज्य सीतया बंधू सुग्रीवाद्यैः समन्वितम् ॥१७॥ आंदोलयेद्दोलकं तं शिशु पालख-
वच्छनैः ॥ नर्तितव्या वारवेश्या तदग्रे शतशो मुदा ॥१८॥ गायनीया गायकाश्च नर्तितव्या नटाद-
यः॥ वादनीयानि वाद्यानि ज्वालनीया सुधूपकाः ॥१९॥ वीजनीयश्चामराद्यैः सीतया रघुनंदनः॥ तद्गुणैः
कीर्तनान्येव कारयित्वा महोत्सवैः ॥२०॥ पुनः पूज्य पूर्ववच्च समानीयो गृहं प्रति ॥ संपूज्यनीयः
श्रीरामः कुंभदीपार्तिकादिभिः ॥२१॥ एवं नित्यं सार्द्धमासद्वयं रामं प्रपूजयेत् ॥ च्यूतवृक्षतले नीत्वा
पूजयेच्च सविस्तरम् ॥२२॥ यदा रामश्च सीता च बहिर्नेया निजगृहात् ॥ तदा तयोर्नयनाधः कस्तु-
र्यंगुलिना सिताः॥२३॥ देयाश्च बिंदवो यत्नात्पर दुर्दृष्टिनाशनाः ॥ एवं दोलापूजनं च शिष्य ते क-
थितं मया ॥२४॥ विशेषं श्रृणु तत्रापि कथ्यते यो मयाऽधुना ॥ वसंतपूजनात्पूर्वदिवसे गणनायकम्
माघशुक्ल चतुर्थ्यां हि पूजयेद्विघ्ननाशनम् ॥ माघशुक्लचतुर्थ्यां तु नक्तव्रत परायणाः॥२६॥ ये
ढुंढिं पूजयिष्यंति तेऽर्च्यास्युर सुरदृहाम् ॥ माघमासे चतुर्थ्यां तु तस्मिन्काल उपोषिताः॥२७॥ अर्च-
यित्वा विघ्नराजं जागरं तत्र कारयेत् ॥ चतुर्थं कुंदनाम्नीयं कुंदपुष्पैः प्रपूजयेत् ॥२८॥ माघशुक्ल पंचमी
सा ज्ञेया श्रीपंचमी शुभा ॥ तस्यां तिथो रमानाथं रामचंद्रं श्रियार्चयेत् ॥२९॥ माघशुक्ल चतुर्थ्यां तु
वरमाराध्य च श्रियः॥ पंचम्यां कुंदकुसुमैः पूजा कुर्यात्समृद्धये ॥३०॥ नीत्वा रामं च्यूतवृक्षतले दोलक
संस्थितम् ॥ सीतारामं पूजयेच्च गेहे वाथ प्रपूजयेत् ॥३१॥ प्रवृत्ते मधुमासे तु प्रतिपद्युदिते रवौ ॥

कृत्वा चावश्य कार्याणि संतर्प्य पितृदेवताः ॥३२॥ वंदयेद्धोलिका भूमिं सर्व दुःखोपशांतये ॥ वंदितासि सुरेंद्रेण ब्रह्मणा शंकरेण च ॥३३॥ अतस्त्वं पाहिनो देवि भूते भूति प्रदा भव ॥ चैत्रे मासि महापुण्य पुष्ये तु प्रतिपद्दिने ॥३४॥ यस्तत्र स्वपचंस्पृष्ट्वा स्नानं कुर्या नरोत्तमः ॥ न तस्य दुरितं किंचिन्नाधयो व्याध यो नृप ॥३५॥ वृत्ते तुषार समये शित पंचदश्यां - प्रातर्वसंतसमये समुपस्थिते च ॥ संप्राश्य च्यूत कुसुमं सहचंदनेन - सत्यं हि विप्रपुरुषोय समा सुखीस्यात् ॥३६॥ च्यूतमग्र्यं वसंतस्य माकंद कुसुमं तव ॥ सचंदनं पिबाम्यद्य सर्व कामार्थ सिद्धये ॥३७॥ पंचम्यां माघमासेऽपि च्यूतपुष्पं सचंदनम् ॥ प्राशनीयं नरैर्भक्त्या कलकंठो भविष्यति ॥३८॥ च्यूतपुष्प प्राशनेन कोकिलास्वरवत्स्वरः ॥ भविष्यति मानवानां कलकंठो मनोरमः ॥३९॥ सीतारामं च्यूत पुष्पैस्तथा कोमल पल्लवैः ॥ पूजयेत्प्रत्यहं भक्त्या दोलकस्थं महोत्सवैः ॥४०॥ चैत्रकृष्ण प्रतिपदि च्यूतपुष्प सचंदनम् ॥ पीत्वा महोत्सवेनैव सीतारामं प्रपूजयेत् ॥४१॥ एवं तच्च दिनं नीत्वा ततश्चाग्रे दिन त्रयम् ॥ नानोत्सव सुगीताद्यैर्नीत्वा चैव ततः परम् ॥४२॥ पंचम्यां चैत्रकृष्णेऽपि सौभाग्य द्रव्य मंगलैः ॥ स्नात्वा तु केशपालाष कृतरागैः शुभावहैः ॥४३॥ चित्रितानि हि वासांसि परिधाय नरोत्तमैः ॥ नानासुगंध तैलाद्यैरभ्यंगं तूर्य निस्वनैः ॥४४॥ जानक्यै रामचंद्राय कृत्वा तीर्थोदकैः ॥ शुभैः ॥ केशरादिभि रागैश्च वासांसि चित्रितानि हि ॥४५॥ दत्वा रामाय सीतायै ततो भक्त्या प्रपूजयेत् ॥ वसंतोद्भव पुष्पैश्च नानामंगलपूर्वकम् ॥४६॥ नाना दानानि देयानि निजमांगल्य हेतवे ॥ नानासुगंध द्रव्याणि गृहित्वा च परस्परम् ॥४७॥ एकैकोपरि सिंचेच्च महामांग-

ल्यदायकम् ॥ मिष्टान्नं भोजयेद्विप्रान्स्वयं चापि सुहृज्जनैः ॥४८॥ भोक्तव्यं तु वसंततौ पंचम्यां मानवैः सु-
खम् ॥ वसंत पंचमी नाम्ना महापुण्या प्रकीर्तिता ॥ पक्षे पक्षे तु पंचम्यामारभ्य माघपंचमि ॥४९॥ एवं
रामं पूजयेच्च यावद्वैशाख पंचमी ॥ विशेषेण नवम्यां हि पक्षे पक्षे प्रपूजयेत् ॥५०॥ अथवा माघशुक्लायां
कृष्णायां चैत्रमासि वै ॥ कृष्णायां माधवे चापि पंचम्यां पूजयेन्नरैः ॥५१॥ महोत्साहेन श्रीरामो दोलक-
स्थोऽति यत्नतः ॥ ततश्चैत्रे शुक्लपक्षे प्रतिपदि नरोत्तमैः ॥५२॥ तैलाभ्यंगं स्वयं कृत्वा रामायाभ्यंगमा-
चरेत् ॥ पूजयेन्नवरात्रं तं यावत् सा नवमी तिथि ॥५३॥ वत्सरादौ वसंतादौ बलिराज्ये तथैव च ॥ तैला-
भ्यंगमकुर्वाणो नरक प्रतिपद्यते ॥५४॥ अतिते फाल्गुणेमासि प्राप्ते चैत्रे महोत्सवे ॥ पुण्येन्हि विप्र क-
थिते प्रपादानं समारभेत् ॥५५॥ प्रपामुत्सर्जयेद्विद्वां मंत्रेणानेन मानवः ॥ अरण्ये निर्जले देशे पथि
ग्रामेऽथवा शुभा ॥५६॥ प्रपेयं सर्व सामान्यात् भूतेभ्यः प्रतिमादिता ॥ अस्याः प्रदानात्पितरस्तृप्यंतु
हि पितामहाः ॥५७॥ अनिवार्यं ततो देयं जलं मासचतुष्टयम् ॥ देवालयेषु लिंगानां देयास्तोय गलंति-
काः ॥५८॥ प्रपा दातुमशक्तेन विशेषाद्धर्ममभिप्सुना ॥ प्रत्यहं धर्म घटको वस्त्र वं वेष्टिताननः ॥ ५९ ॥
ब्राह्मणस्य गृहे देयः सीतामल जलः शुचिः ॥ तांबूल फल धान्यैश्च दक्षिणाभिः समन्वितः ॥६०॥ एष
धर्म घटो दत्तो ब्रह्मा विष्णु शिवात्मकः ॥ अस्य प्रदानात्सकला सर्वे संतु मनोरथाः ॥ ६१॥ अनेन विधिना
यस्तु धर्मकुंभं प्रयच्छति ॥ प्रपादानं फलं सोऽपि प्राप्नोतीह न संशयः ॥६२॥ तृतीयायां चैत्रशुक्ले
सीतां रामेण पूजयेत् ॥ कुंकुमागरु कर्पूर मणि वस्त्र सुगंधकैः ॥६३॥ स्रग्गंध धूप दीपैश्च दमनेन विशे-

षतः ॥ आंदोलये ततः सीतारामौ च दोलकस्थितौ ॥६४॥ वसंतऋतु मासाद्य तृतीयायां द्विजोत्तमः ॥
सौभाग्याय सदा स्त्रीभिः सौभाग्यशयनं शुभम् ॥६५॥ कार्यं महोत्सवेनैव सुखं पुत्रसुखेप्सुभिः ॥ विशे-
षं चात्र वक्ष्यामि तृतीयायां द्विजोत्तम ॥६६॥ शुक्लपक्षे मधौ शुभे तृतीयायां तु नारिभिः ॥ स्नात्वा मृन्मय
दुर्गं हि कार्यं चित्रविचित्रितम् ॥६७॥ तत्राष्टादश धान्यानि वापयेत्तदनंतरम् ॥ पुष्पवृक्षां शुभास्तत्र वापये-
त्सर्वतस्ततः ॥६८॥ जलयंत्राणि कार्याणि चित्राण्यपि विलेखयेत् ॥ तुर्यं द्वाराणि कार्याणि पूर्ववन्मंडपा
दिकम् ॥६९॥ यथा श्रीरामपूजाया मुक्ततद्वत्प्रकारयेत् ॥ दुर्गोपरि घटं स्थाप्य सजलं पुष्पगुंफितम् ॥७०॥
दोलकं च ततो न्यस्य घटपृष्ठे महच्छुभम् ॥ कांचनीं राजतीं मूर्तिं सीतायाः परिकल्प्य च ॥७१॥ रामस्या
पि शुभा मूर्तिं कृत्वा तौ पूजयेत्ततः ॥ दोलकोपरि संस्थाप्य मासमेकं प्रपूजयेत् ॥७२॥ केचिच्छिष्याऽ
त्र पार्वत्याः शिवेन च प्रपूजनम् ॥ वदंति मुनयस्तत्र निर्णयं श्रुणु वक्ष्य ते ॥७३॥ रामस्य हृदयं शंभुः
श्रीरामो हृदयः स्मृतः ॥ शंकरस्य तथा गौर्या हृदयं जानकी स्मृता ॥७४॥ जानक्या हृदयं गौरी ते------
वांतरं कदा ॥ रामस्य च सीतास्यापि सीता गिरिजयोस्तथा ॥७५॥ ये मानयंति वै भेदं तेषां वासस्तु रौ-
रवे ॥ अतश्चैत्र तृतीयायां सीता रामौ प्रपूजयेत् ॥७६॥ अशक्तौ ताम्रजे मूर्ति कार्ये वा काष्टमूर्ति ते
पाषाणनिर्मिते वापि मूर्तिं कार्यं यथासुखम् ॥७७॥ प्रत्यहं मंगलं द्रव्यैः सर्व स्त्रीभिः प्रपूजयेत् ॥ मासमेकं
तु नारिभिः स्नानं च सीतलाभिधम् ॥७८॥ अवश्यमेव कर्तव्यं सीतातीर्थे विशेषतः ॥ यत्र यत्र रामतीर्थे
तस्य वामेऽवनीतले ॥७९॥ सीतातीर्थं तत्र तत्र ज्ञेयं सीताकृतं शुभम् ॥ चैत्रशुक्ल तृतीयाया आरभ्या-

क्षय्य संज्ञिता ॥ ८०॥ यावत्तृतीया वैशाखशुक्ला तावन्निरंतरम् ॥ सीतलासंज्ञकं स्नानं स्त्रिभिः सीतार्थमाचरेत् ॥८१॥ चैत्रशुक्ल तृतीयायामक्षय्यायां तथापि च ॥ तृतीयायां तु नारीभिस्तैलाभ्यंगः प्रकारयेत् ८२ अन्यत्र दिवसे स्त्रीभिस्तैलाभ्यंगो न कारयेत् ॥ प्रत्यहं चोत्सवाः कार्या सीताया पुरतः शुभाः ॥८३॥ सुवासिनि पूजनं च कार्यं भक्त्या दिने दिने ॥ सुवासिनीनां देयानि वायनानि शुभानि च ॥८४॥ निरंतरं पूजनार्थं यदि शक्तिर्न वर्तते ॥ तदा कार्यं चैकदिने सुभगानां प्रपूजनम् ॥८५॥ अलंकाराश्च वस्त्राणि कंचुक्यादि च यच्छुभम ॥ भर्तुरायुष्य वृद्ध्यर्थं नारिभिर्देयमुत्तमम् ॥८६॥ एवं स्नात्वा मासमात्रं सीतला स्नानमुत्तमम् ॥ अक्षय्यायां तृतीयायां पूजयित्वा विशेषतः ॥८७॥ त्रिंशत्सुवासिनिभ्यश्च दातव्यं भोजनादिकम् ॥ गुरुपत्नीं निजां पूज्य तस्यै सर्वं विसर्जयेत् ॥८८॥ एवं स्त्रीणां व्रतं प्रोक्तं मासमात्रं द्विजोत्तम अन्यद्विशेषं वक्ष्यामि तवाग्रे शृणुचोत्तमम् ॥८९॥ अशोककलिकाभ्यस्तु चैत्रशुक्लाष्टमी दिने ॥ सीतारामौ पूजयित्वा महामंगलपूर्वकम् ॥९०॥ अशोककलिकाश्चाष्टौ ये पिबति पुनर्वसौ ॥ चैत्रमासि सिताष्टम्यां न ते शोकमवाप्नुयुः ॥९१॥ त्वामशोक कराभिष्टं मधुमास समुद्भवम् ॥ पिबामि शोकसंतप्तो मामशोकं सदा कुरु ॥९२॥ पुनर्वसु बुधोपेता चैत्रेमासि सिताष्टमि ॥ प्रातरस्तु विधिवत्स्नात्वा वाजपेय फलं लभेत् ॥९३॥ चैत्रे नवम्यां प्राक् पक्षे दिवा पुण्ये पुनर्वसौ ॥ उदये गुरु गौराश्चोः स्वोच्चस्थे ग्रहपंचके ॥९४॥ मेषपूषणि संप्राप्ते लग्ने कर्कटकाव्हये ॥ अविरासीन्महाविष्णुः कौसल्यायां पुरः पुमान् ॥९५॥ तस्मिन्दिने तु कर्तव्यमुपवास व्रतं नरैः ॥ तत्र जागरणं कुर्या रघुनाथ पुनर्जनैः ॥९६॥ चैत्रे शुद्धा तु नवमी पुनर्वसु-

युता यदि ॥ सैव माध्यान्हयोगेन महापुण्यतमा भवेत् ॥ ९७ ॥ तस्मात्सर्वात्मना सर्वैः कार्यं वै नवमी व्र-
तम् ॥ ९८ ॥ श्रीरामनवमी प्रोक्ता कोटिसूर्य ग्रहाधिका ॥ अुपोषणं जागरणं पितृनुद्दिश्य तर्पणम् ॥ तस्मि-
न्दिने तु कर्तव्यं ब्रह्मप्राप्तिमभिप्सुभिः ॥ सर्वेषामप्ययं धर्मो भुक्तिमुक्तैक साधनः ॥ १०० ॥ अशुचिर्वापि
पापिष्टः कृत्वेदं व्रतमुत्तमम् ॥ पूज्यस्यात्सर्वभूतानां यथा रामस्तथैव सः ॥ १ ॥ यस्तु रामनवम्यां तु भुंक्ते
मोहात्तु मूढधीः ॥ कुंभिपाकेषु घोरेषु पच्यंते नात्र संशयः ॥ २ ॥ अत्कृता रामनवमीव्रतं सर्व व्रतोत्तमम् ॥ व्र-
तान्यन्यानि कुरुते न तेषां फलभाक् भवेत् ॥ ३ ॥ आचार्यं चैव संपूज्य श्रृणुयात्प्रार्थयन्निशि ॥ श्रीराम प्रति-
मा दानं करिष्येहं द्विजोत्तम ॥ ४ ॥ भक्त्याचार्यो भवत्प्रीतः श्रीरामोऽस्ति त्वमेव च ॥ स्वगृहे चोत्तमे देशे
दानस्योज्वल मंडपम् ॥ ५ ॥ शंख चक्र हनुमद्भि प्राक् द्वारे सकलं कृतम् ॥ गुरुत्मच्छार्ङ्ग बाणैश्च दक्षिणे स-
मलंकृतम् ॥ ६ ॥ गदा खड्गांगदैश्चैव पश्चिमे स विभूषितम् ॥ पद्म स्वस्तिक नीलैश्च कौबेरे समलंकृतम् ७
मध्ये हस्त चस्काद्यं वेदिकायुक्तमायतम् ॥ अष्टोत्तरसहस्रं च रामलिंगात्मकं शुभम् ॥ ८ ॥ अस्तिर्यं रामतो
भद्रं वेदिकायामनुत्तमम् ॥ ततः संकल्प यद्देवं राममेव स्मरन् द्विज ॥ ९ ॥ अस्यां रामनवम्यां च रामाराधन
तत्पर ॥ उपोष्याष्टसु यामेषु पूजयित्वा यथाविधि ॥ ११० ॥ इमां स्वर्णमयिं रामप्रतिमां च प्रयत्नतः ॥ श्रीराम
प्रीतयेद्दास्ये रामभक्ताय धीयते ॥ ११ ॥ प्रीतो रामो हरत्वाशु पापानि सुबहूनि मे ॥ अनेकजन्मसंसिध्दान्य-
भ्यस्तानि महांति च ॥ १२ ॥ ततः स्वर्णमयि रामप्रतिमां पलमानतः ॥ निर्मितां द्विभुजां रम्यां वामांकस्थित
जानकिम् ॥ १३ ॥ बिभ्रतिं दक्षिणकरे ज्ञानमुद्रां मनोरमाम् ॥ वामेणाधः करेणारा देविमालिंग्य संस्थिताम् १४

सिंहासने राजतेत्र पलद्वय विनिर्मिते ॥ अशक्तौया महानत्र सेतु वित्तानुसारतः ॥१५॥ पलेन वा तदर्धे-
न तदर्धार्धेन वा पुनः ॥ सौवर्णं राजतं वापि कारयेद्रघुनंदनम् ॥१६॥ पार्श्वे भरत शत्रुघ्नो धृतकच्छ
करावुभौ ॥ चापद्वय समायुक्तं लक्ष्मणं वापि कारयेत् ॥१७॥ मातरंक गमं राममिंद्रनीलसमप्रभम् ॥ पंचा
मृतस्नानपूर्वं संपूज्य विधिवत्तमः ॥१८॥ अशोक कुसुमैर्युक्तमर्घ्यं दद्याद्विचक्षणः ॥ दशानन वधार्था-
य धर्मसंस्थापनाय च ॥१९॥ राक्षसानां विनाशाय दैत्यानां निधनाय च ॥ परित्राणाय साधूनां जा-
तो रामः स्वयं हरिः ॥१२०॥ गृहाणार्घ्यं मया दत्तं भ्रातृभिः सहितोनघ ॥ दिवैवं विधिवत्कृत्वा रात्रौ जा
गरणं ततः ॥२१॥ ततः प्रातः समुत्थाय स्नानसंध्यादिकाः क्रियाः ॥ समाप्य विधिवद्रामं पूजयेद्विधिवन्मु
ने ॥२२॥ ततो होमं प्रकुर्वीतं मूलमंत्रेण मंत्रवित् ॥ पूर्वोक्त मंडपे कुंडे स्थंडिले वा समाहितः ॥२३॥
लौकिकाग्नौ विधानेन शतमष्टोत्तरं शतैः ॥ साज्येन पायसेनैव स्मरन् राममनन्यधीः ॥२४॥ ततो
भक्त्या सुसंतोष्य आचार्यं पूजयद्विज ॥ ततो रामं स्मरन् दद्याद्देवं मंत्रमुदीरयेत् ॥२५॥ इमां स्वर्ण
मयीं रामप्रतिमां समलंकृताम् ॥ चित्रवस्त्र युगच्छन्नां रामोऽहं राघवाय ते ॥२६॥ श्रीरामप्रीतये दा-
स्ये तुष्टो भवतु राघवः ॥ इति दत्वा विधानेन दद्याद्वै दक्षिणां भुवम् ॥२७॥ ब्रह्महत्यादि पापेभ्यो मु-
च्यते नात्र संशयः ॥ एवं शिष्य चैत्रमासे नवम्यां भूसुराय हि ॥२८॥ दानं देयं राघवस्य रामसंतु-
ष्टि हेतवे ॥ अन्यद्विशेषं वक्ष्यामि चैत्रमासी श्रृणुष्व तम् ॥२९॥ चैत्रस्य शुक्लैकादश्यांम् दोलकस्थं र-
घूत्तमम् ॥ पूजयेत् मानवो भक्त्या च्यूतवृक्षतलस्थितम् ॥१३०॥ चैत्रमासस्य शुक्लायामेकादश्यां तु

वैष्णवैः ॥ आंदोलनीयो देवेशः सलक्ष्मी को महोत्सवैः ॥ ३१॥द्वादश्यां चैत्रमासस्य शुक्लायां दमनोत्सवः ॥ बौधायनादिभिः प्रोक्तः कर्तव्यः प्रतिवत्सरः ॥३२॥ऊर्जे व्रतं मधौ दोला श्रावणे तंतु पूजनम् ॥ चैत्रे च दमनारोपमकुर्वाणो व्रजत्यधः ॥३३॥ वन्हिर्विरिंच्य गिरिजा गणेशः -फणि विशाखो दिनकृन्महेशः ॥ दुर्वांतको विघ्न हरि स्मरश्च- शर्वः शशी वै तिथिषु प्रपूज्याः ॥३४॥ अथ चैत्री पौर्णिमायां भक्त्या रामं प्रपूजयेत् ॥ सीतया दोलकस्थं हि दमनेन महात्सवैः ॥३५॥ चैत्री चैत्रायुता चेत्स्यात्तदा पुण्या महातिथिः ॥ ज्ञेया सर्वाधिका सा हि स्नानदान पुजादिषुः ॥३६॥ स्त्रिभिर्देयं चित्रवस्त्रं तस्यां सौभाग्यदायकम् ॥सीता रामौ चित्रवस्त्रः पूजनीयौ महोत्सवैः ॥३७॥ मंदे वाऽर्के गुरौ वाऽपि वारेष्वे तेषु चैत्रिका ॥ तत्राश्वमेधजं पुण्यं स्नान श्राद्धादिभिर्लभेत् ॥३८॥संवत्सर कृताचार्याः साफल्या याखिलान्सुरान् ॥ दमनेनार्चयेच्चैत्र्यां विशेषेण रघूत्तमम् ॥३९॥चैत्रस्नानोद्यापनं च तिथौ तस्यां स्मृतं बुधैः॥ अथ वैशाख कृष्णायां पंचम्यां परमोत्सवैः ॥१४०॥ सीतारामं प्रपूज्याथ दोलकस्थं तु बंधुभिः ॥ अुद्यापनं तत्र कार्यं महाफलमभिप्सुना ॥४१॥ वैशाखे कृष्णपक्षे तु चतुर्थ्यां समुपोष्य च ॥ निशायां च प्रकर्तव्यमधिवासनमुत्तमम् ॥४२॥शुचौ देशे मंडपादि कृत्वा पूर्वोक्तवच्छुभम् ॥ रामलिंगात्मके भद्रे धान्यराशौ महत्तमम् ॥ ४३॥ सजलं कलशं स्थाप्य ताम्रपात्रं तु तन्मुखे ॥ स्थाप्यवस्त्रे दोलकस्थं रामचंद्रं प्रपूजयेत् ॥४४॥ हैमो वा राजतो वाऽपि दोरकैस्त्रिपलैः स्मृतः ॥ हैमी पलमिता राममूर्तिः कार्या मनोरमा ॥४५॥ तावन्मिता रुक्ममूर्ति सीतायाश्चापि कारयेत् ॥४६॥ नृत्यगीत मंगलाद्यैः पुराणश्रवणादिभिः ॥ प्रभाते तं पुनः पूज्य राम

सीता समन्वितम् ॥४७॥ सहस्त्रं हवनं कार्यं तिलाज्य पायसादिना ॥ तर्पणं राममंत्रेण क्षीरेणैव प्रकार-
येत् ॥४८॥ ततो गुरुं सपत्नीकं संपूज्य वसनादिभिः ॥ रामाय प्रार्थयेद्भक्त्या प्रबद्ध करसंपुटः ४९
सार्द्ध मासद्वयं राम वसंते तव पूजनम् ॥ दोलकस्थस्य जानक्या यथाशक्त्या मया कृतम् ॥५०॥ प्र-
सीदानेन श्रीराम मामुद्धर भवार्णवात् ॥ एवं संप्रार्थ्य श्रीराम तामर्चां मूर्तिसंयुताम् ५१॥ दद्या स्व गु-
रवे भक्त्या प्रणम्ये तं पुनः पुनः ॥ पंच सप्तति युग्मानि ह्यष्ट त्रिंश मितानि वा ॥५२॥ तदर्द्धाथवा श-
क्त्या भोजयेद्गुरुणा सुखम् ॥ ततः स्वयं सुहृन्मित्रैः कार्यं वै भोजनं सुखम् ॥५३॥ अशक्तोऽपि यथा-
शक्त्या व्रत मेतत्तु सर्वदा ॥ करोतु रामतुष्टयर्थं वसंत पूजनं वरम् ॥५४॥ एवं शिष्य त्वया पृष्टं विशे-
षेण च पूजनम् ॥ सीतारामस्य तत्प्रोक्तं दोलकस्थस्य ते मया ॥५५॥ विष्णुदास उवाच ॥ गुरो ते
प्रष्टुमिच्छामि यत्त्वं वद सविस्तरम् ॥ कया कामनया कस्य कार्यं पूजनमुत्तमम् ॥५६॥ तत्सर्वं कथ-
यस्वाद्य मयि कृत्वा परां कृपाम् ॥ रामदास उवाच ॥ सम्यक् पृष्टं त्वया वत्स सावधान मनाः शृणु ॥५७॥
ब्रह्मवर्च सकामस्तु स यजेत् ब्रह्मणस्यथम् ॥ इंद्रमिंद्रीय कामस्तु प्रजाकामः प्रजापतिन् ॥५८॥ दे-
वीमायां तु श्रीकामस्तेजः कामो विभावसुम् ॥ वसु कामो वसुन् रुद्रान्वीर्य कामोथ वीर्यवान् ॥५९॥ अ-
न्नादि कास्त्वदिति स्वर्गकामोदितेः सुतान् ॥ विश्वान्देवान्राज्य कामः साध्यान्संसाधकोविशाम् ॥६०॥
आयुः कामोऽश्विनौ देवौ पुष्टि कामो इलां जयेत् ॥ प्रतिष्ठा कामः पुरुषो रोदसी लोकमातरौ ॥६१॥ रूपा-
भिकामो गंधर्वान् स्त्री सरसि ऊर्वशी ॥ अधिपत्य कामः सर्वेषां यजेतत्परमेष्ठिनम् ॥६२॥ यज्ञं यजद्यश -

स्कामं कोशकामं प्रचेतसम्॥ विद्याकामस्तु गिरिशं दांपत्यार्थमुपासतिम् ॥६३॥ धर्मार्थि उगम श्लोकं
नं तु तन्वन्पितृन्यजेत् ॥ रक्षा कामः पुण्य जनान् ओजः कामो मरुद्गणान् ॥६४॥ राज्यकामो मनून्देवान्
निर्ऋतिं चाभि चरन् यजेत् ॥ काम कामो यजेत्सोममकामः पुरुषं परम् ॥६५॥ अकामः सर्व कामो वा
मोक्ष काम उदारधीः ॥ तीव्रेण भक्तियोगेन यजेत रघुनंदनम् ॥६६॥ रामेण सदृशो देवो न भूतो न
भविष्यति ॥ तस्मात्सर्व प्रयत्नेन रामचंद्रं प्रपूजयेत् ॥६७॥ यस्याद्य वर्णसामर्थ्याद्यद्यद्धे स्त्वत्रादिक-
म् ॥ परं श्रेष्ठत्वमापन्नं विस्तारेण वदाम्यहम् ॥६८॥ रुक्मं रत्न रथो रामा राक्षसो रजतं रजः ॥ रक्षा
रणो रमा रक्तं रजको राग राम ठौ ॥६९॥ राजा रोगे रवि रात्री राज्यं रजस्वला तथा ॥ एवमादिन्यनेकानि
श्रेष्ठान्येवात्र भो द्विज ॥१७०॥ रुक्मं पीतं महार्हं च रत्नं रम्यं सुदुर्लभम् ॥ रथो यानं वरिष्ठः स रामाय
स्या इदं जगत् ॥७१॥ राक्षसो देवभयदो रजतं तत्सुदुर्लभम् ॥ रजः साक्षात्परमाणुर्नित्यः सोऽत्र प्रकीर्त्य-
ते ॥७२॥ रक्षा रक्षा करि ज्ञेयो रणो जयकरः स्मृतः ॥ रमा सा दुर्लभात्वत्र रक्तेस्ति रक्ततावरा॥७३॥
रजको निर्मल करो रागः प्रीतिः सुखप्रदा ॥ रामठः शुद्धिदोन्नस्य रुचिदश्च प्रकीर्तितः ॥७४॥ राज्यं
सौख्य करं श्रेष्ठं पुत्रदा सा रजस्वला ॥ एवं यद्यद्रकाराद्यं तत्तच्छ्रेष्ठं भुवि स्मृतम् ॥७५॥ रामाद्य वर्ण सा-
मर्थ्याद्विष्णुदास मये रितम् ॥ अन्याच्छिष्य श्रुणुष्व त्वं यन्मया कथ्यते तव ॥७६॥ यदा प्रोक्ता राम-
नाममुद्रा तव मया शुभा ॥ तथा नान्यस्य देवस्य नाममुद्रा प्रजायते ॥७७॥ रामनाम विना नाम
मुद्रिकायां स्फुटाक्षरम् ॥ न कदा दृश्यते स्पष्टमेतच्च महदद्भुतम् ॥७८॥ अत्र प्रभावो रामस्य त्वं

विद्धि द्विजपुंगव ॥ अतएव रामनाम काश्यां विश्वेश्वरः सदा ॥७९॥ स्वयं जप्त्वोपदिशति जंतूनां मुक्तिहेतवे ॥ संसारार्णव संमग्नं नरं यस्तारयन्मनुः ॥८०॥ स एव तारकस्त्वत्र राममंत्रः प्रकथ्यते ॥तारकाख्यस्त्वयं राम नाम मंत्रो नचेतरः ॥८१॥ अतएवांत कालेऽपि मर्तु काम नरस्य च ॥ कर्णे सर्वत्र देशेषु रामनामोपदिश्यते ॥८२॥ अंतकालेऽधुना राम राम स्मर मुहुर्मुहुः ॥ इति कुर्वंत्युपदेशं मानवा मुक्तिहेतवे ॥८३॥ अन्यच्चापि शव वाहै सदा लोकै मुहुर्मुहुः ॥ रामनामैव मुक्त्यर्थं शवस्य परिकीर्त्यते ॥८४॥ रामनामात्परो मंत्रो न भूतो न भविष्यते ॥ रामनाम्ना जपो नित्यं क्रीयते शंभु नापि च ॥८५॥ पार्वत्या नारदेनापि वायु पुत्रादिभिः सदा ॥ रमयति जनान् रामो रमते वा सदात्मनि ॥८६॥ राक्षसानां मारणाद्वा रामनाम महत्तमम् ॥ रसातलाद्रकारे हि त्वकारोऽवनिसंभवः ॥८७॥ महर्लोकान्मकारश्च त्रिवर्णात्मकमुच्यते ॥ रकारेण निजंभक्तं भवाब्धे परिरक्षति ॥८८॥ अकारेणाति सौख्यं हि स्वभक्तस्य करोति यत् ॥ मनोरथान्मकारेण ददाति स्वजनस्य यत् ॥८९॥ अथवा निजभक्तस्य मरणादि मुहुर्मुहुः ॥ निवारयति यच्छीघ्रं रामनाम वरं ततः ॥९०॥ अयमेव सदा जप्यो रामेति द्व्यक्षरो मनुः ॥ वैकुंठे स्व निवासार्थं मोक्षार्थं निश्चयेन हि ॥९१॥ इति श्रीशतकोटि रामचरितांतर्गत श्रीमदानंदरामायणे वाल्मीकिये मनोहरकांडे रघुनाथस्य विशेष काल परत्वेन पूजाविस्तारो नाम नवमः सर्गः ॥ शुभं भवतु ॥ श्रीसीतारामचंद्रार्पणमस्तु ॥ ॥ ॥

आकोला
ता॰ ३१-५-५३

।।श्रीगणेशायनमः।। एवं शिष्य त्वया पूर्वं ये ये प्रश्नाः कृताः शुभाः ।। श्रीरामविषये ते ते मयोक्ताः पर-
मादरात् ।।१।। केदानीं ते पुनः श्रोतुमिच्छास्ति तां वदस्व माम् ।। यद्यत्पृच्छामि तत्सर्वं तवाग्रे प्रवदा-
म्यहम् ।। २ ।। श्रीमहादेव उवाच ।। एवं गुरोर्वचः श्रुत्वा विष्णुदासोऽब्रवीत्पुनः ।। गुरो त्वया त्वयोध्या-
यां चैत्रमासफलं महत् ।।३।। प्रोक्तं तद्विस्तरेणाद्य कथयस्व ममांतिकम् ।। किं दानं किं फलं प्रोक्तं
कमुद्दिश्य चरे व्रतम् ।।४।। को विधिश्च कदारंभः सर्वं विस्तरतो वद ।। यच्छरय्वां रामतीर्थे स्ना-
तव्यं चेति कीर्तितम् ।।५।। रामदास उवाच ।। साधु साधु महाप्राज्ञ शुभः प्रश्न कृतस्त्वया ।। अधुना
चैत्रमासस्य महिमा प्रोच्यते मया ।।६।। मासानां प्रथमो मासश्चैत्रमास प्रकीर्त्यते ।। मातेव सर्वजी-
वानां सदैवेष्ट फलप्रदः ।।७।। दान यज्ञ व्रत समः सर्व पापविनाशनः ।। धर्मसारः क्रियासारः तपःसारः
सदार्चितः ।।८।। विद्यानां वेदविद्येव मंत्राणां प्रणवो यथा ।। भूरुहानां सुरतरुर्धेनूनां कामधेनुवत् ९
शेषवत्सर्वनागानां पक्षिणां गरुडो यथा ।। देवानां तु यथा विष्णु वर्णानां ब्राह्मणो यथा ।।१०।। आपगा-
नां यथा गंगा (२) तेजसां तु रविर्यथा ।। प्राणवत्प्रिय वस्तूनां (१) भार्येव सुहृदां यथा ।।११।। आयुधानां यथा
वज्रं धातुनां कांचनं यथा ।। वैष्णवानां यथा रुद्रो रत्नानां कौस्तुभो यथा ।।१२।। मासानां धर्महेतुनां
चैत्रमासस्तथा स्मृतः ।। नानेन सदृशो लोके विष्णुप्रीति विधायकः ।।१३।। चैत्रस्नाने च निरते मीने प्रा-
गरुणोदयात् ।। लक्ष्मी सहायो भगवान् प्रीतिं तस्मिन्करोत्पलम् ।।१४।। जंतूनां प्रीणनं यद्वदन्नेनैव
हि जायते ।। तद्वच्चैत्रे तु स्नानेन विष्णुः प्रीणात्य संशयः ।।१५।। यश्चैत्र स्नाननिरतान् जनान्दृष्ट्वा-

नुमोदते ॥ तावतापि विमुक्ताघो विष्णुर्लोक महीयते ॥१६॥ स कृत्स्नात्वा मीनसंस्थे सूर्ये प्रातः कृता-
न्हिक ॥ महापापैर्विमुक्तो सौ विष्णोः सायुज्यमाप्नुयात् ॥१७॥ स्नानार्थं चैत्रमासे यः पादमेकं चलेद्य-
दि ॥ सोऽश्वमेधायुतानां च फलं प्राप्नोत्य संशयः॥१८॥ अथवा कूटचित्तस्तु कुर्यात्संकल्प मा-
त्रकः॥ सोऽपि क्रतुशतं पुण्यं लभत्येव न संशयः ॥१९॥ यो गच्छेद्धनुराधायां स्नातुं मीनगते
रवौ ॥ सर्वबंध विनिर्मुक्तो विष्णोः सायुज्यमाप्नुयात् ॥२०॥ त्रैलोक्य यानि तीर्थानि ब्रह्मांडांतर्ग-
तानि च ॥ तानि सर्वाणि भो शिष्य संति बाह्यजलेल्पके ॥२१॥ तावच्छिरवंति पापानि गर्जंति यमशा-
सने ॥ यावन्न कुरुते जंतुश्चैत्रे स्नानं जलाशये ॥२२॥ तीर्थाधिदेवताः सर्वाश्चैत्रमासि द्विजोत्तम ॥
बहिर्जलं समाश्रित्य सदा सन्निहिताः शिशो ॥२३॥ सूर्योदयं समारभ्य यावत् षड्घटिकावधि ॥ ति-
ष्ठंति चाज्ञया विष्णोर्नराणां हितकाम्यया ॥२४॥ तत्राप्यकुरुतां स्नानं शापं दत्वा सुदारुणम् ॥ स्व-
स्थानं यांति भो शिष्य तस्मात्स्नानं समाचरेत् ॥२५॥ नहि चैत्र समो मासो न कृतेन समं युगम् ॥
नच वेदसमं शास्त्रं तीर्थं गंगयासमम् ॥२६॥ न जलेन समं दानं न सुखं भार्यया समम् ॥ नहि चै-
त्रसमं लोके पवित्रं कवयो विदुः ॥२७॥ तस्मादयं चैत्रमासः शेषशायि प्रियः सदा ॥ अव्रतेन नयेद्य-
स्तु चांडालश्च स जायते ॥२८॥ यथा गृहं सर्वगुणोपपन्नं- परिच्छदैर्हीनमशोभते यथा ॥ य-
थैव कन्या सकलैस्तु लक्षणै- र्युक्तापि जीवत्पति लक्षणोज्झि ॥२९॥ शाकं तु यद्वल्लवणेन हीनं- न शो-
भते सर्वगुणोपपन्नम् ॥ यथा ललामैश्च साभास तेन- वस्त्रेण हीना ललना च शिष्य ॥३०॥ तथा-

न्यमासेषु कृतो हि धर्म- श्चैत्रेणहि नश्च्य वृथैव याति ॥ तस्मात्सर्वप्रयत्नेन येनकेनापि देहिना ३१
चैत्रमासस्य यो धर्मः कर्तव्य इति निश्चयः ॥ न नंदसूनोः पृथ गस्ति रामो- न रामतोऽन्यो वसुदे-
वसूनुः ॥ अतस्त्वयोध्यापुर पालकस्य- चैत्रे तु कार्यं विधिवत्प्रपूजनम् ॥ ३२ ॥ जानकीकांतमुद्दिश्य
मीनसंस्थे दिवाकरे ॥ प्रातः स्नात्वा जपेद्रामम न्यथा नरकं व्रजेत् ॥ ३३ ॥ चैत्रमासोहि सकलो सीता-
राघव दैवतः ॥ यद्यत्करोति तत्सर्वं तमुद्दिश्य चरेन्नरः ॥ ३४ ॥ जानकीकांत हे राम चैत्रे मीनगते
रवौ ॥ प्रातःस्नानं करिष्यामि निर्विघ्नं कुरु राघव ॥ ३५ ॥ चैत्रेऽद्य मीनगे भानौ प्रातःस्नान पराय-
णः ॥ अर्घ्यं तेहं प्रदास्यामि गृहाण रघुनायक ॥ ३६ ॥ गंगाद्याः सरितः सर्वास्तीर्थानि जलदा नदाः ॥
प्रतिगृह्य मया दत्तमर्घ्यं सम्यगप्रसीदथ ॥ ३७ ॥ ब्रह्माद्याः सरितः सर्वा ऋषयो ये च वैष्णवाः ॥ ते गृ-
ण्हंतु मया दत्तमर्घ्यं सम्यगप्रसीदथ ॥ ३८ ॥ ऋषभः पापिनां शास्ता यमत्वं समदर्शनः ॥ गृहाणा-
र्घ्यं मया दत्तं यथोक्त फलदो भव ॥ ३९ ॥ इतिचार्घ्यं समर्प्याथ पश्चात्स्नानं समाचरेत् ॥ वास-
सी परिधायाथ कृत्वा कर्माणि सर्वशः ॥ ४० ॥ जानकीकांतमभ्यर्च्य प्रसूनैर्मधुसंभवैः ॥ श्रुत्वा राम-
कथां दिव्यां एतन्मास प्रशंसिनिम् ॥ ४१ ॥ कोटिजन्मार्जितात्पापान्मुक्तो मोक्षमवाप्नुयात् ॥ चैत्रे
यः कस्य भोजी हि तथा चाश्रुत सत्कथा ॥ ४२ ॥ न स्नानतो चाप्यदाता च नरकानेव विंदति ॥ यथा
माघः प्रयागे हि स्नातव्यः सुखमिच्छता ॥ ४३ ॥ कार्तिकोऽपि यथा काश्यां पंचगंगाजले स्मृतः ॥ द्वा-
रकायां यथा प्रोक्तो वैशाखो माधव प्रियः ॥ ४४ ॥ अयोध्यायां रामतीर्थे तथा चैत्रः प्रकीर्तितः ॥ प्र-

यागे मासमात्रेण यत्फलं प्राप्यते नरैः ॥ ४५॥ अयोध्यायां रामतीर्थे स कृत्स्ना तेन तत्फलम् ॥ वै-शाख द्वादश भवं पुण्यं यद्गोमतीजले ॥ ४६॥ तत्पुण्यं शरयूतोयेऽयोध्यायां प्राप्यते नरैः ॥ चैत्रमासे त्रिभिः स्नानै रामतीर्थे न संशयः ॥ ४७॥ कार्तिके पंचगंगायां यैः स्नातं द्वादशाब्दकम् ॥ अयोध्यायां रामतीर्थे चैत्रे पक्षेण तत्फलम् ॥ ४८॥ अयोध्या दुर्लभा लोके नराणां पापकारिणाम् ॥ तावद्गर्जंति पापानि वद्दृष्टा न सा पुरी ॥ ४९॥ अयोध्याया यदा भावो तदा राम कृतानि च ॥ जगत्यां यानि तीर्थानि तत्र स्नानं विधीयताम् ॥ ५०॥ यत्रायोध्या पुरी नास्ति स्नानार्थं सरयू नच ॥ रामतीर्थं न यत्रास्ति तदा तीर्थेषु कारयेत् ॥ ५१॥ तैलाभ्यंग दिवा स्वापं तथा वै कास्य भोजनम् ॥ खट्वा निद्रा गृहस्नानं निषिधस्य च भक्षणम् ॥ ५२॥ चैत्रे तु वर्जयेदष्टौ द्विभुक्तं नक्त भोजनम् ॥ चैत्रमासे तु मध्यान्हे शांतानां च द्विजन्मनाम् ॥ ५३॥ पादावने जनं कुर्या तद्व्रतं तु व्रतोत्तमम् ॥ मार्गेध्वगानां यो मर्त्यः प्रपा दानं च चैत्रके ॥ ५४॥ मार्गे छायां तु यः कुर्यात्स स्वर्गे च महीयते ॥ सलीलं सलीलीकांक्षी छायां छायामपीच्छति ५५ व्यजनं व्यजनाकांक्षि दानमेतत्तु चैत्रके ॥ जलं छत्रं तु व्यजनं दानं मीने विशिष्यते ॥ चैत्रे मासे तु संप्राप्ते ब्राह्मणाय कुटुंबिने ॥ ५६॥ अदत्त्वोदककुंभं तु चातको भुवि जायते ॥ चैत्रे देयं जलं चान्नं देया शय्या मनोरमा ॥ ५७॥ आदर्शदानं तांबूलं गुडदानं प्रकारयेत् ॥ गोधूम तुवरीदानं दानं दध्योदनस्य च ॥ ५८॥ घृतयुक्तं कास्यपात्र दानमिक्षुरसस्य च ॥ तथा श्रीफलदानं च दानं च्यूतफलस्य च ॥ ५९ ॥ सूक्ष्मवस्त्र मंचकयोः पानपात्र कमंडलु ॥ यतीनां दंडदा-

नं वै तैलदानं मठेषु च ॥६०॥ जीर्णोद्धारं मठानां च ह्यट्टानां करणं तथा ॥ प्रासादकरणं चैव वापि कूपादिकं तथा ॥६१॥ मार्गस्थानां छत्रदानं माध्यान्हेऽतिथि पूजनम् ॥ करपात्रं यतिनां च गोग्रासं तु गवामपि ॥६२॥ एतानि चैत्रमासे तु दानानि कथितानि हि ॥ फलं शाकं तु मूलं च कंदं पुष्पं तु चंदनम् ॥६३॥ उशीरः शीतलं द्रव्यं कर्पूरं कस्तुरी शुभाम् ॥ दीपदानं धेनुदानं गृहदानं तथा स्मृतम् ॥६४॥ गोरसानां पृथक् दानं यति ब्राह्मणभोजनम् ॥ सुवासिनिपूजनं च रामनाम प्रलेखनम् ॥६५॥ पुस्तकानां तथा दानं तथा कुंकुम केशरे ॥ जातिफलं लवंगाश्च जातिपत्र वरांगके ॥६६॥ धातकी नागरं धूपं बीजपूरं कलिंगकम् ॥ जंबीर पनसश्चैव कपित्थं मातुलिंगकम् ॥६७॥ कूष्मांडदानमारामकरणं मार्गशोधनम् ॥ तथोपानह दानं च गज वाजी भवं तथा ॥६८॥ एतानि चैत्रमासे तु दानानि कथितानि हि ॥ यानि चैत्रे तु वर्ज्यानि तानि तत्ते वदाम्यहम् ॥६९॥ सर्वाण्येतानि मासानि क्षौद्रं सौवीरकं तथा ॥ राजि माषादिकं चापि चैत्रस्नायी प्रवर्जयेत् ॥७०॥ परान्नं च परद्रोहं परदारागमं तथा ॥ तीर्थं विना सदैवेह चैत्रस्नायी प्रवर्जयेत् ॥७१॥ द्विदलं त्रिदलं तैलं तथान्नं शल्यदूषितम् ॥ भाव दुष्टं शब्द दुष्टं चैत्रस्नायी तु वर्जयेत् ॥७२॥ देव वेद द्विजानां च गुरु ग्रा व्रतिनं तथा ॥ स्त्री राज महतां निंदां चैत्रस्नायी विवर्जयेत् ॥७३॥ प्राण्यंगमामिषं चूर्ण फले जंबिरमामिषम् ॥ धान्ये मसूरिका प्रोक्ता चान्नं पर्युषितं तथा ॥७४॥ ब्रम्हचर्य मधः सूप्तिः पत्रावल्यां च भोजनम् ॥ चतुर्थका भुंक्त जीत कुर्यादेवं सदा व्रती ॥७५॥ संवत्सरं प्रतिपदि तैलाभ्यंगं तु कारयेत् ॥ चैत्रस्नायी नरो-

ऽन्यत्र तैलाभ्यंगं न कारयेत् ॥७६॥ आलांबु चापि वृंताकं कूष्मांड बृहती फलम्॥ श्लेष्मातकं कलिं-
गं च कपित्थं चापि वर्जयेत् ॥७७॥ रजस्वला त्यजन्म्लेंच्छं पतिता व्रतकैःसह॥ द्विजद्विट् वेदबाह्ये-
श्च न वदेत्सर्वदा व्रती ॥७८॥ पलांडु लशुनं चैव छत्रांकं गृजनं तथा ॥ नालिका मूलकं शिग्रुं चैत्र-
स्नायी विवर्जयेत् ॥७९॥ एभिर्घृष्टं श्व काकैश्च सूतकान्नं च वर्जयेत् ॥ द्विपाचितं च दग्धान्नं चैत्र-
स्नायी विवर्जयेत् ॥८०॥ एतानि वर्जयन्नित्यं व्रती सर्व व्रतेष्वपि ॥ कृच्छ्राद्यं च प्रकुर्वीत स्वशक्त्या
रामतुष्टये ॥८१॥ क्रमात्कूष्मांड बृहती छत्रांकं मूलकं तथा ॥ श्रीफलं च कलिंगं च फलं धात्री भवं त-
था ॥८२॥ नारिकेल मलांबुं च पटोलं बदरीफलम् ॥ चर्मवृंताककम् वह्नि शाकं तुलसिजं तथा ॥८३॥
शाकान्येतानि वर्ज्यानि क्रमात्प्रतिपदादिषु ॥ धात्रीफलं रवौ तद्वद्वर्जयेत्सर्वदा गृही ॥८४॥ येभ्योऽन्य-
द्वर्ज्यये किंचि तद्राम प्रति ये नरैः ॥ दत्वा व्रतांते विप्राय भक्षयेत्सर्वदैव हि ॥८५॥ फाल्गुणी पौर्णिमार-
भ्य यावच्चैत्री तु पौर्णिमा ॥ चैत्रस्नानं तु तावद्धि नरैःकार्यं च भक्तितः ॥८६॥ अथवा मीनगो भानुर्या
वत्तावत्प्रकारयेत् ॥ दशमीं फाल्गुणीं शुद्धां समारभ्य मधोःसिता ॥८७॥ यावद्भवेत्तु दशमी तावत्स्नानं
प्रकारयेत् ॥ स्नानस्यैवात्र यो भेदाः शिष्यै ते समुदीरिताः ॥८८॥ चैत्रशुक्ल तृतीयां तु यावद्वैशाखसं-
भवा ॥ तृतीया शुक्लपक्षस्य ह्यक्षय्येति स्मृता त्रया ॥८९॥ तावच्च सीतला गौरी स्नातव्या सुख-
लब्धये ॥ सीतातीर्थे तु नारिभिः॥ पूजनीया च जानकी ॥९०॥ तृतीयाया तु चैत्रस्य सितपक्षोद्भवा
तथा ॥ वैशाखशुक्ल पक्षेया तृतीयाक्षय्य संज्ञिता ॥९१॥ नारी या सीतलागौरीव्रत स्नान परायणा ॥

अभ्यंगः सा करोत्वस्योस्तिथ्योर्नान्ये दिने कदा ॥९२॥ त्रिंशच्च तिथयः पुण्याश्चैत्रमासे महत्तमाः ॥ तथापि हि विशेषोऽत्र तिथिनां वर्ण्यते मया ॥९३॥ चैत्रमासे कृष्णपक्षे पंचमी दशमी तथा॥ एकादशी द्वादशी च शिवरात्रीस्त्वमा तथा ॥९४॥ एताः शुभाश्चैत्रकृष्णे महापातकनाशनाः ॥ इदानिं चैत्रमासस्य सितपक्षोद्भवाः शुभाः ॥९५॥ वर्ण्यंते तिथयः श्रेष्ठा नराणां हितकाम्यया ॥ सांवत्सर प्रतिपदमारभ्य दशमी दिनम् ॥९६॥ यावत्तावच्छुभाः सर्वा स्नानदानादि कर्मणि ॥ यत्कृतं प्रतिपदि स्नान दान व्रतादिकम् ॥९७॥ द्वितियायां च तत्प्रोक्तं द्विगुणं नात्र संशयः॥ यत्कृतं च द्वितियायां भक्त्या स्नानादिकं नरैः॥९८॥ त्रिगुणं तु तृतीयायां चैत्रमासे नृपोत्तम ॥ एवं सर्वासु तिथिषु यावत्स्यान्नवती शुभा ॥९९॥ एवं विशेषो ज्ञातव्यो यथाग्रादिक्षुचर्वणात् ॥ यथा क्षीरोदधि प्रोक्तं दध्नस्तु नवनीतकम् ॥१००॥ नवनीताद्धृतं यद्वत्तथा तिथि विनिर्णयः ॥ चैत्रमासस्तु मासानां तत्र पक्ष सितो वरः ॥१॥ सितपक्षे क्रमेणैव यावत्सा नवमी तिथिः॥ तावदेकैकशः श्रेष्ठाः सर्वासु नवमी परा॥२॥ यस्यां जातं रामजन्म धर्मसंस्थापनाय हि ॥ तस्मात्तिथिस्तु सा ज्ञेया कर्म निर्मूलन क्षमा॥३॥ तस्यां दत्तं हुतं जप्तं यत्किंचिच्च कृतं शुभम् ॥ सर्वं तदक्षयं विद्यान्नात्र कार्या विचारणा ॥४॥ प्रतिपद्दिनमारभ्य नवरात्रमुपोष्ययेत् ॥ प्रत्यहं रघुवीरस्य पूजनं चैव कारयेत् ॥५॥ संवत्सर प्रतिपदि ध्वजाः सौधोपरि स्थिताः॥ दिव्यवस्त्रैश्च माल्यैश्च मंडिताश्च मनोरमाः॥६॥ रामजन्म सूचनार्थं प्रीत्यर्थं राघवस्य च ॥ गृहे गृहे नरैः कार्या पूजनीयाश्च भक्तितः ॥७॥ गृहे देवालये वाथ गोष्टे वृंदावने शुभे ॥

संमार्जनादिकं नित्यं कार्यं चंदनवारिभिः ॥८॥ ततो पाषाणचूर्णैश्च नानापद्मादिकानि हि ॥ लेखनी-
यानि भूम्यां तु नील पीतादि वर्णकैः॥ अष्टोत्तरसहस्त्राख्यं रामतोभद्रमुत्तमम् ॥ शताख्यं वा लिखे-
द्भद्रमथवान्यन्मनोरमम् ॥११०॥ तस्योपरि महान् रम्यश्चित्रवर्णश्च मंडपः ॥ देयाद्वाराणि चत्वारि
कार्याणि तोरणानि च ॥११॥ कदलिस्तंभ युक्तानि हीक्षुदंड युतानि च ॥ नानाघंटा किंकिणिभिर्ध्वनिता-
न्युज्वलानि च ॥१२॥ रम्यादर्शैर्मंडितानि विचित्राणि शुभानि च ॥ नानाचित्रवितानैश्च मुक्ताहारै-
र्युतानि च ॥ तस्मिन् हेममयोः कार्यो मंचको रत्नमंडिताः ॥ तस्योपरि महावस्त्रैः शय्या कार्या मनोरमा
तस्यां षोडश माषैस्तु प्रतिमा कांचनोद्भवा ॥१४॥ द्विभुजा रामचंद्रस्य सर्वलक्षण लक्षिता ॥ चतुर्विंश-
ति माषैश्च प्रतिमा रजतोद्भवा ॥१५॥ कौसल्यायाः शुभाः कृत्वा पूजनीया मनोरमा ॥ यथा वित्तानु-
सारेण पूजयेत्प्रत्यहं नरैः ॥१६॥ भेरी मृदंग तूर्यश्च गीत नृत्यादि कारयेत् ॥ नाना पक्वान्न नैवेद्यै-
रुपचारैः सुपूजयेत् ॥१७॥ प्रतिपदिनमारभ्य यावत्तु नवमी दिनम् ॥ रामायणं तावदेव पठनीयमि-
दं शुभम् ॥१८॥ यद्धै वाल्मीकिना गीतं श्रवणान्मंगलप्रदम् ॥ आनंदसंज्ञकं रम्यं पठनीयं मनोर-
मम् ॥१९॥ नवकांडानि नवभिर्दिनैरेव पठेन्नरैः॥ दिवसे दिवसे कांडं पठनीयं प्रयत्नतः ॥१२०॥ अ-
थवा प्रत्यहं सर्गाः पठितव्यास्तु द्वादश ॥ शेषस्त्वेकः कदा मध्येऽधिक सोऽपि पठेन्नरैः ॥२१॥
अष्टोत्तरशतैः सर्गैः रामकीर्तनमालिका ॥ मेरुयुक्ता पठेदेवं रामाग्रे नवभिर्दिनैः ॥२२॥ सर्वतीर्थेषु
यत्पुण्यं सर्वदानेषु यत्फलम् ॥ रामायणस्य पठनात्तत्फलं नवरात्रके ॥२३॥ श्लोकं वा श्लोकपादं

वा यद्रामायण संभवम् ॥ नवरात्रे पठिस्यति चैत्रे ते मोक्षभागिनः ॥२४॥ एवं हि प्रत्यहं कार्यं कौसल्या रामपूजनम् ॥२५॥ सपुत्र द्विजवर्याणां विशेषा पूजन स्मृतम् ॥ वस्त्राद्यलंकारयुतं चित्रभोजन भोजितम् ॥२६॥ एवं कृत्वा विधिं सर्वं नवम्यां च विशेषतः ॥ पूजयित्वा रामचंद्रं वाहनारूढमुत्तमम् ॥२७॥ भेरी मृदंग घोषैश्च तूर्य दुंदुभि निस्वनैः ॥ वारस्त्री कृत नृत्यश्च गायकानां च गायनैः २८ एवं नानासमुत्साहैर्मंडितं छत्रशोभितम् ॥ चामरैर्वीज्यमानं च पुष्पके संस्थितं वरम् ॥२९॥ रामतीर्थातिकं नीत्वा पंचामृतघटैर्वरैः ॥ स्नापयेद्रघुवीरं हि पुण्य तोयैस्ततः परम् ॥१३०॥ रुद्रसूक्तैर्विष्णुसूक्तैः सहस्रैर्नामभिस्तु वा ॥ मांगल्य द्रव्य संमिश्रैर्जलैस्तमभिषेचयेत् ॥३१॥ मांगल्यवरद्रव्यैश्च स्नानात्तन्मंगलाभिधम् ॥ प्रोच्यते मंगलं स्नानं तच्चैत्रे दुर्लभं नृणाम् ॥३२॥ तत्पंचामृत तीर्थं तु तीर्थमध्ये विनिक्षिपेत् ॥ तत्र सर्वैर्जनैः शीघ्रं स्नातव्यं तदनंतरम् ॥३३॥ सहस्रावभृथस्नानैर्यत्फलं प्राप्यते नरैः ॥ तत्फलं रामचंद्रस्य मंगलस्नान कारणात् ॥३४॥ पुष्करादिषु तीर्थेषु गंगाद्या सुसरित्सु च ॥ प्राप्यते यत्फलं स्नानान्मंगलस्नानकच्च तत् ॥३५॥ एवं रामं तु सस्नाप्य सीतायुक्तं प्रपूज्य च ॥ पुनः पूर्वोक्त वाद्यादि मंगलैरानयेद्गृहम् ॥३६॥ गृहे रामं पुनः पूज्य रामायण कृतं वरम् ॥ पारायणं समाप्याथ पुस्तकं पूजयेच्छुभम् ॥३७॥ नानोत्सवैर्दिनं नीत्वा कार्यं जागरणं निशि ॥ दशम्यां प्रातरुत्थाय भोजयित्वा द्विजान् बहून् ॥३८॥ पूजयित्वा पुनः सर्वं गुरवे तद्विसर्जयेत् ॥ ततः स्वयं सुहृन्मित्रैः कुर्याद्भोजनमुत्तमम् ॥३९॥ एवं व्रतं समाख्यात चैत्रस्य नवरात्रके ॥

अतस्तन्नवरात्रं हि श्रेष्ठं चैत्रे महत्तमम् ॥१४०॥ नवरात्रेऽपि सा रामनवमी परमार्थदा ॥ तत्समाना
तिथिर्नान्या चैत्रमासे शुभप्रदा ॥४१॥ अतः परं प्रवक्ष्यामि चैत्रोद्यापनकं विधि ॥ यत्कृत्वा सफलं
सर्वं चैत्रस्नानं तु जायते ॥४२॥ चैत्रे मासि सिते पक्षे यावैह्येकादशी तिथि ॥ सर्वासु तिथिषु श्रे-
ष्ठा चोपोष्या व्रतकारिभिः ॥४३॥ श्रेष्ठा सा द्वादशी ज्ञेया तस्यां तु यम पूजयेत् ॥ कार्यं दध्योदनं द-
त्वा जलकुंभः प्रदीयताम् ॥४४॥ तिस्रश्च तिथयः श्रेष्ठा चैत्रेमासि महत्तमाः ॥ त्रयोदशी तथा भूता
पौर्णिमासि तथैव च ॥४५॥ यासु स्नानं च दानं च सर्वं वांछितदायकम् ॥ यैर्न स्नातं चैत्रमासे न
स्नातं नवरात्रकम् ॥४६॥ तैश्चांत्यं त्रिदिनं स्नात्वा चैत्रस्नान फलं भवेत् ॥ तासु श्रेष्ठा पौर्णिमा-
हि सर्व पातकनाशिनि ॥४७॥ तस्यामुद्यापनं प्रोक्तं चैत्रस्नानं फलाप्तये ॥ उपोष्य च चतुर्दश्यां
पूर्ववन्मंडपादिकम् ॥४८॥ कृत्वा तस्मिन्धान्यराशौ कलशं वारि पूरितम् ॥ स्थापयित्वा तदुपरि हे-
मपात्रं सुविस्तृतम् ॥४९॥ पंचरत्नयुतं स्थाप्यं वस्त्रेणाच्छादयेच्च तत् ॥ तस्मिन् सितायुतं रामं
सौवर्णं विधिपूर्वकम् ॥१५०॥ भ्रातृभिर्वायुपुत्रेण सुग्रीवेण समन्वितम् ॥ बिभीषणांगदाभ्यां तु जांब-
वत्सहितं तथा ॥५१॥ पूजयेद्देवदेवेशं परमं गुर्वनुज्ञया ॥ उपचारैःषोडशभिर्नानाभक्ष समन्वितैः ५२
रात्रौ जागरणं कुर्याद्गीत वाद्यादि मंगलैः ॥ ततस्तु पौर्णिमास्यां च सपत्निकान्द्विजोत्तमान् ॥५३॥ त्रिं-
शन्मिता तथैकं वा स्वशक्त्या वा निमंत्रयेत् ॥ ततस्तान्भोजयद्विप्रान्पायसान्नादिना व्रती ॥ ५४॥
अतो देवा इति द्वाभ्यां जुहुयात्तिल सर्पिषा ॥ प्रीत्यर्थं देवदेवस्य देवानां च पृथक्पृथक् ॥५५॥ द-

क्षिणां च यथाशक्त्या प्रदद्याच्च ततो नमेत् ॥ पुनर्देवं समभ्यर्च्य देवांश्च तुलसीं तथा ॥५६॥ ततो
गो कपिलां तत्र पूजयेद्विधिना व्रती ॥ गुरुं व्रतोपदेष्टारं वस्त्रालंकार मंडनैः ॥५७॥ सपत्नीकं समभ्य-
र्च्य ततो विप्रान्क्षमापयेत् ॥ युष्मत्प्रसादो देवेशः सुप्रसन्नोस्तु वै मम ॥५८॥ व्रतादस्माच्च यत्पा-
पं सप्तजन्म कृतं मया ॥ तत्सर्वं नाशमायातु स्थिरा मे चास्तु संततिः ॥५९॥ मनोरथास्तु सफलाः
संतु नित्यं ममार्चनात् ॥ देहांते वैष्णवं स्थानं मम चास्त्वतिदुर्लभम् ॥१६०॥ इति क्षमाप्य तान्वि-
प्रा प्रसाद्य च विसर्जयेत् ॥ तामर्चां गुरवे दद्या रत्नयुक्तां च स व्रती ॥ ६१॥ ततः सुहृत्प्रियैर्युक्तं
स्वयं भुंजीत भक्तिमान् ॥ एवमुद्यापन विधिश्चैत्रस्नान फलाप्तये ॥६२॥ सविस्तरश्च कर्तव्यश्चैत्र-
स्नान परायणैः ॥ एवं यः कुरुते सम्यक् चैत्रस्नानव्रतं नरः ॥६३॥ सर्व पापैर्विनिर्मुक्तो विष्णुसा-
युज्यमाप्नुयात् ॥ सर्व व्रतैः सर्व तीर्थैः सर्वदानैश्च यत्फलम् ॥६४॥ तत्कोटि गुणितं पुण्यं सम्यग-
स्य विधानतः ॥ देहस्थितानि पापानि नाशमायांति तद्भयात् ॥६५॥ क्व यास्यामो वदंत्येवं य-
श्चैत्र व्रत कृन्नरः ॥ तस्मादवश्यमेवैतच्चैत्रस्नानं समाचरेत् ॥६६॥ श्रीचैत्रव्रतकथनं पठंति भ-
क्त्या - यै वै तद्विजयति वैष्णवान्वदंति ॥ ते सम्यक् व्रतकरणात्फलं लभंते - तत्सर्वं कलुश विना-
शनं लभेताम् ॥१६७॥ इति श्रीमदानंदरामायणे वाल्मीकिये मनोहरकांडे चैत्रमहिमावर्णनं
नाम दशमः सर्गः ॥ शुभं भवतु ॥ श्रीसीतारामचंद्रार्पणमस्तु ॥

आकोला
३-७-५३

॥श्रीगणेशायनमः॥ विष्णुदास उवाच ॥ किमर्थं सर्व मासेषु चैत्रमास स्मृतो वरः॥ तत्कारणं वदस्वाद्य गुरो मत्तोष हेतवे ॥१॥ रामदास उवाच ॥ शृणु शिष्य महाबुद्धे सम्यग्पृष्टं त्वया मम ॥ ब्रह्म प्रार्थनया विष्णुर्यदा भूम्या द्विजोत्तम ॥२॥ अयोध्यापालकस्याथ राज्ञो दशरथस्य हि॥ कौसल्या यस्तु भार्याया जठरान्निर्गतो बहिः॥३॥ चैत्रमासि सिते पक्षे नवम्यां परमे दिने ॥ पुनर्वस्वर्क्षे नक्षत्रे प्रोच्चस्थे ग्रहपंचके ॥४॥ मध्यान्हे प्रगटो जातः श्रीरामो राजसद्मनि ॥ आनंदश्च तदा जातः सर्वत्र जगतितले ॥५॥ देव दुंदुभयोर्नेदुः पुष्पवृष्टिः शुभा पतत् ॥ राजसद्मनि वाद्यानां संघानेंदुः पृथग्पृथक् ॥६॥ ननृतुर्वारनार्यश्च जगुर्गीतं मनोरमम् ॥ तदा सर्वेहि भूमिस्था जना द्रष्टुं शिशुं शुभाम् ७ प्रययुः नृपजं बालं दृष्ट्वा मुदमवाप्नुयुः ॥ नानाविमानमारूढा दिवि देवाः स वासवाः॥८॥ मीलिता राघवं द्रष्टुं कौसल्या जठरोद्भवम् ॥ ब्रह्मा रुद्रश्च सूर्यश्च देवेंद्रादि सुरा शुभाः ॥९॥ उत्सवान्विदधुः सर्वे तदा श्रीरामजन्मनि ॥ एवमुत्साह समये देवा हर्षा दिवि स्थिताः ॥१०॥ नमस्कृत्वा रामचंद्रं तुष्टुवुर्विविधैः स्तवैः॥ प्रोचुस्तदा सुराः सर्वे हर्षाद्धवं रघूत्तमम् ॥११॥ अद्य धन्या वयं देव मुक्ताश्चासुरजाद्भयात् ॥ यन्निमित्तं त्वया देव ह्यवतारं कृतो भुविः ॥१२॥ अस्माकं हर्षकालोयं देवदेव करुपानिधे ॥ तस्मादयं सदा पुण्यः श्रेष्ठः कालो भविष्यति ॥१३॥ त्वं चाप्यंगीकुरुष्वाद्य देह्यस्मै सुबहुन् वरान् ॥ इति तेषां वचः श्रुत्वा देवानां राघवः शुभम् ॥१४॥ तुतोष नितरां तेषु देवेषु भगवान् हरिः ॥ श्रीरामदास उवाच ॥ सम्यक् प्रोक्तं सुराः सर्वे यत्त्रैलोक्योपकारकम् ॥१५॥ भवद्भिः प्रार्थितो हंतुं हर्षकाले

महत्तमे ॥ श्रुणुध्व वचनं मेऽद्य यद्धर्षात्प्रोच्यते मया ॥१६॥ सर्वेषामेव मासानां श्रेष्ठश्चायं भवि-
ष्यति ॥ वैशाखात्कार्तिकः श्रेष्ठः कार्तिकान्माघ एव च ॥१७॥ माघमासाद्वरश्चायं चैत्रमासो भविष्यति
चैत्रमासे कृतं दत्तं हुतं स्नानं विचिंतितम् ॥१८॥ सर्व कोटिगुणं प्रोक्तमयोध्यायां विशेषतः ॥ यच्छ्रेय-
श्चाश्वमेधेन यद्गोमेधेन वै फलम् ॥१९॥ यत्फलं सोमयागेन तच्चैत्रे स्नानमात्रतः ॥ सूर्यग्रहे कुरु-
क्षेत्रे यच्छ्रेयः स्नानदानतः ॥२०॥ तच्छ्रेयस्यान्मधौस्नानादयोध्यायां सुरोत्तमाः ॥ अत्र वै सरयूतीरे
रावणं लोकरावणम् ॥२१॥ हत्वा तत्पापशांत्यर्थं करिष्यामि क्रतुं शुभम् ॥ यत्र यागसमाप्तिर्हि भविष्य-
ति सुरोत्तमाः ॥२२॥ तत्तीर्थं मम नाम्ना हि ख्यातिं श्रेष्ठां गमिष्यति ॥ अयोध्यायां रामतीर्थे सरयूज-
लमध्यगे ॥२३॥ चैत्रस्नानं प्रकुर्वाणास्ते नरा मोक्षभागिनः ॥ यथा माघ प्रयागे हि स्नातव्यः सुख-
मिच्छता ॥२४॥ कार्तिकोऽपि यथा काश्यां पंचगंगाजले स्मृतः ॥ द्वारकायां यथा प्रोक्तो वैशाखो माध-
व प्रियः ॥२५॥ अयोध्यायां रामतीर्थे तथा चैत्रो भविष्यति ॥ सर्वेषामेवमासानामादौ श्रेष्ठो भविष्यति
॥२६॥ चैत्रमासे तु संप्राप्ते सर्वे देवाः स वासवाः ॥ बहिर्जलं समाश्रित्य तिष्ठध्वं हि ममाज्ञया ॥२७॥
एवं हरि स्तान्मघवादिकान्सुरा-नुक्त्वा सुरैस्तैश्च नमस्कृतो बभौ ॥ वृषेंद्रमारुह्य शिवो निजस्थलं-
ययौ सुरास्तेऽपि ययुर्निजस्थलम् ॥२८॥ तस्मात्सर्वेषु मासेषु मुख्यश्चैत्र प्रकीर्त्यते ॥ मासादौ प्रथ-
मः सर्वैः प्रोच्यते हि वराद्धरैः ॥२९॥ एवं शिष्य यथा पृष्टं तथा ते विनिवेदितम् ॥ कारणं चैत्रमास-
स्य रामचंद्र वरादिकम् ॥३०॥ विष्णुदास उवाच ॥ स्वामिन्गुरो त्वया चैत्रस्नानं पुण्यतमं स्मृतम् ॥

तत्केनाचरितं पूर्वं का सिद्धिस्तत्प्रभावतः ॥३१॥ तत्सर्वं विस्तरेणैव ममाग्रे तं निवेदय ॥राम-
दासउवाच ॥ सम्यक् पृष्टं स्वस्थ मनाः श्रुणु त्वं यन्मयोच्यते ॥३२॥ मम तातो नृसिंहाख्यः पुरा-
त्रासीद्विजोत्तम ॥ तस्यैकनियमश्चासीत्प्रत्यहं भूसुरोत्तमम् ॥३३॥ स्नुषा स्त्री पुत्र तनय दासी दा-
सादिभिर्युतम् ॥ कुटुंबभोजनं तस्मै संपूज्यान्नैर्विधीयताम् ॥३४॥ एवमब्जक क्षेत्रस्थान् द्विजान-
न्नार्थिस्त्वपि ॥ लक्ष्मीनाम्नी तु तन्माता तावुभौ रामतत्परौ ॥३५॥ पुत्रोत्पत्तिमदृष्ट्वा तौ वृद्धौ पुत्रा-
र्थमुद्यतौ ॥ स्वदोष परिहारार्थमुपायं कर्तुमुद्यतौ ॥३६॥ निवासाख्ये पुरे गत्वा दंपती मोहिनिं शुभा-
म् ॥ स्वीयेष्टदेवताम्बंबा प्रवरातीरवासिनिम् ॥३७॥ दृष्ट्वा देव्याश्च तौ सेवां नित्यं तत्र प्रचक्रतुः ॥ गते
बहु तिथे काले वरदा सा महालया ॥३८॥ प्रसन्नं तं द्विजं भूत्वा प्राह तद्दोषशांतये ॥ हे नृसिंह महा-
बुद्धे गच्छायोध्यापुरिं प्रति ॥३९॥ तत्र वै सरयूतोये रामतीर्थे महत्तमे ॥ चैत्रे मासि वसंततौ यदा-
स्यान्मीनगो रविः ॥४०॥ चैत्रस्नानं मासमेकं कुरु तत्र द्विजोत्तम ॥ पातकं सकलं त्यक्त्वा पुत्र प्रा-
प्स्यसिऽनुत्तमम् ॥४१॥ इति देव्या वचः श्रुत्वा द्विजश्चिंतापरस्तदा ॥ ययौ मार्गे हृदि ध्यायन-
योध्याख्यां पुरीं शुभाम् ॥४२॥ चिंतया परया व्याप्त कथ गंतुं हि शक्यते ॥ मयाऽयोध्यापुरी दूर
मितः कष्टं च जीवितम् ॥४३॥ इति चिंतायुतो मार्गे क्वचित्तिष्ठन्क्वचित्स्खलन् ॥ भार्यायाश्च करं धृ-
त्वा वृद्धश्चैवं ययौ द्विजः ॥४४॥ एवं गोदावरीतीरं गत्वा स्नात्वा द्विजोत्तमः ॥ राममूर्तिं पुरः स्थाप्य
पूजयामास भक्तितः ॥४५॥ तावत्तस्मै प्रसन्नो भूद्रामो देव्याः प्रसादतः ॥ द्विजं प्राह रघुश्रेष्ठो भो

नृसिंह द्विजोत्तम ॥४६॥ अयोध्यां त्वमितो गच्छ श्रुणु मे वचनं शुभम् ॥इतो पूर्वे ह्यदूरं हि योजन
त्रय संमितम् ॥४७॥ प्रतिष्ठानाभिधं क्षेत्रं गोदाया उत्तरे तटे ॥ तत्रास्ति रामतीर्थं हि मन्नाम्ना च म-
या कृतम् ॥४८॥ तत्र त्वं गच्छ विप्रेंद्र स्नानं शीघ्रं हि भार्यया ॥ चैत्रमासे वसंततौ यदास्यान्मीनगो
रविः ॥४९॥ तदा कुरु विशेषेण पूजयित्वा च मां शुभम् ॥ पापक्षयं पुत्रलाभो भविष्यति न संशयः ५०
इत्युक्त्वा रघुवीरस्तु तत्रैवांतर धीयत॥ यत्र गंगाह्रदे रामः प्रसन्नो भूद्विजाय हि ॥५१॥ तस्मात्स वै राम-
ह्रदो नाम्ना सर्वत्र कीर्त्यते ॥ तद्रामवचनाद्विप्रो प्रतिष्ठानपुरं ययौ ॥५२॥ मासमेकं च वै स्थित्वा चैत्र-
स्नानं चकारह ॥ सूर्योदये समुत्थाय कृतशौचादि सत्क्रियाः ॥५३॥ स्नात्वा तस्मिन् रामतीर्थे सरयू
संगमान्विते ॥ रामचंद्र स्वर्णगिरौ पूजयामास भक्तितः ॥५४॥ प्रदक्षिणः स्वर्णगिरेश्चकार नवप्रत्यह-
म् ॥ नव पुष्पैश्च नैवेद्यः पूजयामास राघवम् ॥५५॥ चैत्रशुक्ल तृतीयाया यावद्वैशाखसंभवा ॥ तृतीया
सीतला गौरी स्नानं चक्रे द्विजभार्यया ॥५६॥ एवं मासव्रतं कृत्वा स द्विजस्तुष्टमानसः ॥ अब्जाकं प्रति
मार्गेण ययौ लक्ष्म्यासमन्वितः ॥५७॥ यावन्मार्गे द्विजो गच्छ ताव दृष्टो त्रिभिर्वरैः ॥ पिशाच्चैः क्षुट्
तृषाक्रांतैस्तानुद्धार्य सभार्यया ॥५८॥ ययौ स्वनगरं रम्यं गोदा नाभि विराजितम् ॥ चैत्रस्नान प्रभावे-
न जातस्तस्मात्सुतस्त्वह ॥५९॥ तस्मान्मया ते कथितं वरं हि - स्नानं मधौ ते सरयू जले वै ॥ साकेत
पुर्यां वर रामतीर्थे - मुक्तिप्रदं मोक्षद भुक्तिदं च ॥ ६०॥ विष्णुदास उवाच ॥ कथं पिशाच्च योन्या-
स्ते मुक्ता विप्रेण वै त्रयः ॥ कस्मात्पापाच्च तत्सर्वे पैशाचिं योनिमाश्रिताः ॥६१॥ तत्सर्वं विस्तरेणैव

श्रोतुमिच्छामि त्वन्मुखात् ॥ रामदास उवाच ॥ श्रृणु शिष्य प्रवक्ष्यामि रंभा नाम्नी वराप्सरा ६२
चैत्रेस्नात्वा वरायोध्या सरयू निर्मले जले ॥आर्द्रवस्त्रयुताचारु वस्त्रालंकारमंडिता ॥६३॥ गृहित्वा
सरयू तोयं रत्नकांचननिर्मिते-॥ पात्रे रामेश्वरं सेतौ द्रष्टुं मौनेन साजवात् ॥६४॥ ययावाकाशमार्गेण
पिशाच्चया यत्र ते त्रया ॥ तस्यार्द्रवस्त्रचांचल्याद्बिंदुभिः प्रोक्षितास्श्च ते ॥६५॥ करस्वभावमुत्सृज्य
चाश्चर्यं परमं ययुः॥ पूर्वजन्मानुस्मरणमभूत्तेषां तदा नृप ॥६६॥ विस्मयाविष्ट चित्तास्ते तां दृष्ट्वा-
ऽप्सर सं दिवि ॥ बहुधा प्रार्थयामासुस्तान् सा पप्रच्छ संज्ञया ॥६७॥ कस्माद्यूयं पिशाच्चा हि जाता-
स्तत्कथ्यतां मम् ॥ इति तत्कर कृता संज्ञा प्रेरितास्ते त्रयस्तदा ॥ ६८ ॥ तेषु द्वौ वर्तमानं हि कथयामा-
स तुश्च ताम् ॥ श्रृणु भामिनि चावां हि पूर्वजन्मनि भूसुरात् ॥६९॥ विरजायां समुत्पन्नौ श्रोत्रियाध्वर
शर्मणः ॥ उभावध्ययनं कर्तुं कश्चिन्नारायणाव्हयम् ॥७०॥ शुश्रुषया तोषयित्वा गुरुं तत्रैव तस्थ तुः
॥ नारायणसुतां चारुहासा चंद्रनिभानना ॥७१॥ दृष्ट्वा परस्परं मैत्र्यं बहुधा प्रार्थ्यता स्त्रियम् ॥ अ-
वाभ्यां च हि सा भुक्ता तज्ज्ञानं गुरुणा चिरात् ॥७२॥ अवाभ्यां च ददौ शापं तस्यै चाप्यशपत्कृधा ॥
युवां चापि कुमारीयं पिशाचित्वं गमिष्यथ ॥७३॥ ततोऽस्माभिस्त्रिभिस्तं तु मुनिं नत्वा पुनः पुनः ॥
शापश्यांतस्ततो लब्धस्तच्छृणुष्व मनोरमे॥७४॥ चैत्रमासे नृसिंहाख्यः कश्चिद्द्विप्रश्च कानने ॥ ददाति
स्नानजं पुण्यं तदोध्दारो भविष्यति ॥७५॥ एवं जाता पिशाच्चा हि वयं तद्वस्त्रबिंदुभिः ॥ प्रोक्षितास्मेऽ
द्य तैर्जाता पूर्वजन्मस्मृतिः शुभा ॥७६॥ तत्तेषां वचनं श्रृत्वा ज्ञात्वा शापस्य मोक्षणम् ॥ सांत्वयित्वा क-

रेणैव शीघ्रं स नृहरिः स्त्रिया ॥७७॥ आगमिष्यति मा चिंता कुरु तेऽति वरांगना ॥ ययौ रामेश्वरं शीघ्रं पूजयित्वा गतादिवम् ॥७८॥ चैत्रमासे व्यतिक्रांते मार्गे स नृहरि द्विजः ॥ भार्यया सहितो दृष्टः पिशाच्चै स्तै पिता मम ॥ ७९॥ स्थित्वा दूरं च ते सर्वे तमूचु र्नृहरि द्विजम् ॥ नैजं वृत्तं समस्तं हि शापस्यापि विमोक्षणम् ॥८०॥ तच्छ्रुत्वा नृहरि र्विप्रो तान्प्रोवाच मुदान्वितः ॥ मा भेतव्यं पिशाचत्वाद्यथा शंभु द्विजेन सः ॥८१॥ राक्षसो मोचितः पूर्वं मोचयिष्याम्यहं तथा ॥ पिशाच्चा ऊचुः ॥ कः शंभुश्च कदा मुक्तो राक्षसः कः सविस्तरम् ॥८२॥ कथयस्व द्विजश्रेष्ठ कृपां कृत्वा तु कौतुकात् ॥ नृसिंह उवाच ॥ श्रुणुध्वं कथयिष्यामि यद्वृत्तं च पुरातनम् ॥८३॥ शिवकांचि पुरीमध्ये कश्चिद्विप्रः शुचिव्रतः ॥ शंभु नामा चिरं कालं तस्थौ स च स्वभार्यया ॥८४॥ स कस्मिन्दिने विप्रश्चैकांबरं शिवांतिके ॥ पौराणिक मुखाच्चैत्रमासमहात्म्य वर्तिनिम् ॥८५॥ कथां श्रोतुं समायात स्तत्र श्रुत्वा महाफलम् ॥ अयोध्यायां हि चैत्रस्य स्नानं कैवल्यदायकम् ॥ ८६॥ ततो बहुगते काले संस्मरन्तान्कथां शुभाम् ॥ ज्ञात्वा समागतं चैत्रं स्वगृहान्निर्गत स्तदा ॥८७॥ भार्यया सहितो विप्रः शनैर्मार्गेण वै ययौ ॥ तीर्त्वा तां जान्हवीं रम्यां यावदग्रे स गच्छति ॥८८॥ तावदृष्टो हि भिल्लेन कर्कशाख्येन कानने ॥ गृहित्वा स शरं चापं धर्षयित्वा च भूसुरम् ॥८९॥ लुलुठ कर्कशः क्रूरो वस्त्रेणैकेन तद्विजम् ॥ मुमोच तस्य पाथेयं गृहित्वा सकलं शुभम् ॥९०॥ द्विजोऽपि प्रार्थयामास कर्कशं च पुनः पुनः ॥ वस्त्रादिकं गृहाण त्वं भक्ष्य पिष्टं ददस्व माम् ॥९१॥ त्तस्य वचनं श्रुत्वा मुक्त्वा तद्वस्त्रबंधनम् ॥ सर्वं ददर्श पाथेयं नाना-

विधमनुत्तमम् ॥९२॥ तस्मिन्द दर्शे स व्याधो दश रंभाफलानि वै ॥ अपक्वान्यति शुष्काणि ततश्चित्ते
विचारयेत् ॥९३॥ एतैर्फलैर्नमे कार्यं जानामि ब्राम्हणोत्तमम् ॥ तर्हि दास्याम्यहं । दीनं क्षुधाक्रांतं च स-
स्त्रिकम् ॥९४॥ इति निश्चित्य स व्याधो ददौ तानि द्विजन्मने ॥ गृहित्वा भक्षयद्विप्रः प्रारंभे भार्यया म-
धोः ॥९५॥ तद्रंभाफल दानेन कर्कशस्य तदा शुभा ॥ जाता बुद्धिः क्षणादेव सात्विकि क्रूरता गता ९६
एवं पिशाच्चा सकलास्ततः परं- भिल्लाय तस्मै शुभ बुद्धिराशी ॥ समागतं चात्र कुतः स पृष्टवान्- विप्रं
स वै प्राह वने च कर्कशम् ॥९७॥ शंभुरुवाच ॥ कांतिपुर्याः समायातं गम्यतेऽयोध्यकां पुरीम् ॥ चैत्र-
मासेऽवगाहार्थं सरयू निर्मलेजले ॥९८॥ इति विप्रवचः श्रृत्वा पुनः पप्रच्छ कर्कशः ॥ किं लभ्यते हि
स्नानेन तन्मे वद सविस्तरम् ॥९९॥ पुनः प्राह स विप्रेंद्रो कर्कशं भक्तितत्परम् ॥ स्नानेन मधुमासे हि
रघुनाथः प्रसीददति ॥१००॥ प्रसादात्सकलान्भोगान् लभंते मानवा भुविः ॥१॥ इति विप्रवचः श्रृत्वा पुनः
पप्रच्छ कर्कशः ॥ मोक्षस्वरूपं कथय कृपां कृत्वा ममोपरि ॥२॥ तत्तस्य वचनं श्रृत्वा पत्निं प्राह द्विजोत्त-
मः ॥ पश्य पश्य वरारोहे कौतुकं महदद्भुतम् ॥३॥ यद्रंभाफल दानेन चैत्रे मासि वरानने ॥ अयं क्व भि-
ल्लजातीयः क्वः प्रश्नश्च दृशः शुभः ॥४॥ मोक्षस्वरूप ज्ञानार्थं तस्माद्दानं प्रशस्यते ॥ इत्युक्त्वा तां प्रि-
यां विप्रः कर्कशं प्राह सादरम् ॥५॥ साधु साधु महाव्याध सम्यक् प्रश्नःकृ तस्त्वया ॥ इदानीं प्रोच्य-
ते मोक्षस्वरूपं तन्निशामय ॥६॥ स मोक्ष स्त्वं हि जानि हि यतो नास्ति पुनर्भवः ॥ इति विप्रवचः श्रृ-
त्वा पुनः पप्रच्छ कर्कशः ॥७॥ तस्य प्राप्तिर्यथास्यान्मे तन्मे वद द्विजोत्तमः ॥ शंभुरुवाच ॥ श्रृणु कर्क-

श तत्प्राप्ति र्यथोस्या तद्वदामि ते ॥८॥ दार पुत्र गृहादिनां प्रीतिं मुक्त्वा जनार्दनम् ॥ दिवा रात्रं चिंतयित्वा सर्व देहस्य चालकम् ॥९॥ आत्मानं बहु पुण्योघै निर्मलि कृत्य मानसम् ॥ तत्स्वरूपे यदा तिष्ठेत्स मुक्तो नेतरे जनः ॥११०॥ एवं वदति विप्रेंद्रे व्याधो मुक्त्वा शरं धनुम् ॥ शंभु पादौ जवान्नत्वा त्राहि त्राहीति वै वदत् ॥११॥ प्रोवाच द्विजवर्यं स व्याधो मामुद्धरेति च ॥ एतस्मिन्नंतरे तत्र राक्षसो घोरदर्शनः ॥१२॥ दुद्राव दीर्घशब्देन यत्रासन्ते त्रयो वने ॥ आयितं राक्षसं दृष्ट्वा चक्रुस्ते तु पलायनम् १३ तावज्जवेन तां धर्तुं निकटं राक्षसा ययौ ॥ तं दृष्ट्वा निकटं शंभुस्तुंबिकां सजलां निजाम् ॥१४॥ कृत्वोच्चां प्राक्षिपत्तस्मिन्रामचंद्र स्मरन्मुखे ॥ मंत्रितं रामनामेन यत्तोयं मधुमासि वै ॥१५॥ तत्स्पर्शाद्राक्षसस्यापि जाता पूर्व भव स्मृतिः ॥ ततः स राक्षसो दूरं स्थित्वा शंभुं व्यजिज्ञपत् ॥१६॥ मामुद्धर मुनिश्रेष्ठ घोराद्राक्षस देहतः ॥ शरणं ते गतोस्म्यद्य जाता पूर्वस्मृतिर्मम ॥१७॥ इति तत्कौतुकं दृष्ट्वा राक्षसं प्राह स द्विजः ॥ कस्मात्ते राक्षसत्वं हि जातं तत्त्वं वदाधुना ॥१८॥ राक्षसः प्राह वेगेन शंभुं वृत्तं निजं तदा ॥ जनस्थाने पुरा चाहं विप्रः कर्मपराङ्मुखः ॥१९॥ प्रतिग्रह परः पापि दुर्मार्गि व्यसनी सदा ॥ एतस्मिन्नंतरे चैत्रे ममभार्या सति शुभ्रा ॥१२०॥ स्नानार्थं सा रामतीर्थं मामपृष्टा गृहाद्ययौ ॥ सा मार्गे च मया दृष्ट्वा धृत्वा मार्गे च तां शुभाम् ॥२१॥ प्रोक्ता प्राधान्मया रंडे मामपृष्ट्वा क्व यास्यसि ॥ सा प्राह भयभीता तु रामतीर्थं प्रगम्यते ॥२२॥ मधुमासेऽवगाहार्थं नमया दुष्कृतं कृतम् ॥ एवं श्रुत्वापि तद्वाक्यं ताडिता सा मया बलात् ॥२३॥ प्रेषिता स्वगृहं मार्गा तत्तकालांतरे गते ॥ मृतोऽहं च तदानी-

तो यमलोकं यमानुगैः ॥ २४ ॥ चित्रगुप्तोऽपि मां दृष्ट्वा धिग्धिक्कृत्वा पुनः पुनः ॥ यमराजं स वै प्राह धर्ष-
यन्मां स्व गर्जितैः ॥२५॥ भो धर्मराज पापोयं चैत्रस्नान निवारकः ॥ भुक्त्वादौ राक्षसीं योनिं निरया-
न् भोक्तुमर्हसि ॥२६॥ इति तद्वचनं श्रुत्वा यमः प्राहानुगान् तदा ॥ भो भटा राक्षसा योनीर्दीयतां
निर्जले वने ॥२७॥ पापीनस्मै च मद्वाक्यात्ततस्तैश्च यमानुगैः ॥ दत्वा राक्षसयोनिं मां त्यक्त्वा चात्र
गता यमम् ॥२८॥ तदारभ्य वने चाहं क्षुट् तृषा परपीडितः ॥ पंचत्रिंशत्सहस्राणि वर्षाण्यत्र स्थित-
श्चिरम् ॥२९॥ किं मया सुकृतं पूर्वं कृतं यस्माद्वने तव ॥ संगतिश्चाद्य वै जाता साधुसंगो गतिप्रदः
॥१३०॥ इति तद्वचनं श्रुत्वा शंभुर्ध्यात्वा क्षणं हृदि ॥ ज्ञात्वा तत्सुकृतं पूर्वं राक्षसाय निवेदयेत् ३१
शृणु राक्षस यत्पूर्वं कृतं वै सुकृतं त्वया ॥ यस्माज्जाता संगतिर्मे वने निर्मानुषे शुभा ॥३२॥ एकादश्या
चैत्र शुक्ले कृत्वान्यश्राद्धभोजनम् ॥ तांबुलो दक्षिणायुक्तः कट्यां वस्त्रे त्वया धृतः ॥३३॥ द्वादश्यां
प्रातरुत्थाय गत्वा स्नानं त्वया कृतम् ॥ पतितः स हि तांबूलो विस्मृत्या गौतमी तटे ॥३४॥ दक्षिणास-
हिता दृष्टः स केनापि द्विजेन वै ॥ गृहितः स हि द्वादश्यां न ज्ञातश्च त्वया पुनः ॥३५॥ तांबूलदाना-
द्वर चैत्रमासे- जाता वने मेऽद्य हि संगत स्ते ॥ तस्मान्मधौ राक्षस मानवैर्हि । तांबूलदानं करणीय मे
तत् ॥३६॥ इत्युक्त्वा राक्षसं शंभुश्चैत्रमाहात्म्यमुत्तमम् ॥ उभाभ्यां श्रावयित्वाथ कर्कशं वाक्यमब्रवीत्
॥३७॥ भो कर्कश महाबुद्धे शृणुष्व वचनं मम ॥ आगच्छ त्वं सहैवाद्य मयायोध्यापुरीं प्रति ॥३८॥ सरयू
स्नानमात्रेण मधौ पापाद्विमोक्ष्यसे ॥ इत्युक्त्वा कर्कशं शंभुस्ततः प्रोवाच राक्षसम् ॥ भो राक्षस त्वमत्रैव

मासमात्रं स्थिरो भव ॥१४०॥ अयोध्यायां प्रवेशश्च राक्षसानां न विद्यते ॥ अतोहं मधुमासं हि स्नात्वाऽनेन पथा पुनः ॥४१॥ यदा गच्छामि कांची त्वां चोद्धरिष्याम्यहं तदा ॥ मा संदेहोस्तु ते चित्ते शपथेन ब्रवीम्यहम् ॥४२॥ यत्पापं ब्रह्महत्याया स्तथा गो यति निंदनात् ॥ नोद्धृत्यं त्वां हि गच्छामि तर्हि मन्मयि तिष्ठतु ॥४३॥ मद्यपानाच्च यत्पापं हेमस्तेयादिकं च यत् ॥ नोद्धृत्यं त्वां हि गच्छामि तर्हि मन्मयि तिष्ठतु ॥४४॥ यत्पापं भ्रूणहत्याया स्तथा चैत्रेह मज्जनात् ॥ नोद्धृत्यं त्वां हि गच्छामि तर्हि मन्मयि तिष्ठतु ॥४५॥ इत्यादि शपथै स्तं हि राक्षसं हर्षयन् द्विजः ॥ यावत्पश्यति सर्वत्र तावज्जातं हि कौतुकम् ॥४६॥ व्याधाय चैत्रमासस्य माहात्म्यस्योपदेशतः ॥ तरवो फलिनो जाताः परितो दशयोजनम् ॥४७॥ पत्रैः पुष्पैर्विनम्रश्च सौगंधः पवनायतुः ॥ नद्यस्तोय वहंत्यश्च ननृतु बर्हिणोचने ॥४८॥ तद्दृष्ट्वा कर्कशश्चापि चैत्रमाहात्म्य कीर्तनात् ॥ दुर्वनं सुवनं जातं चैत्र श्रेष्ठ्यमनन्यत ॥४९॥ ततस्तेहि त्रयस्तस्माद्वनान्मार्गेण निर्गताः ॥ शनैःशनैरयोध्यायाः पथि पश्यन्वनस्थलिम् ॥१५०॥ तावच्छब्दो महान्जातः सिंह मातंग संभवः ॥ धावनग्रे तु मातंगः पृष्ठे धावश्च केसरीः ॥५१॥ एवं तौ शंभुसान्निध्यं प्राप्तौ कलहकारिणौ ॥ मार्गरोध करौ दुष्टौ तौ दृष्ट्वा शंभुरब्रवीत् ॥५२॥ पश्य कर्कश विघ्नानि चैत्रस्नाने पदे पदे ॥ संभवंतीति वै बुध्वा चैत्रस्नानं न लंघयेत् ॥५३॥ काश्यां विवाहे गीतायां गयायां रामचिंतने ॥ चैत्रस्नाने महादाने विघ्नानि संभवंति हि ॥५४॥ एवं वदति विप्रेंद्रे तौ दृष्टौ करि कोहलौ ॥ चैत्र राम श्रवात्पूर्वजन्म स्मृत्वाऽति विस्मितौ ॥५५॥ भूत्वा वै त्राहिति ------ कृत्वा दीर्घ महारवम् ॥ शरणं द्विजवर्याय

जग्मतुः शंभुशर्मणे ॥५६॥ सोऽपि शंभुश्च ताभ्यां हि पृष्टावान्तत्कृपान्वितः॥ किमर्थं दुष्टजातिर्हि
प्राप्ता तत्कथ्यतां मम ॥५७॥ इति विप्र वचः श्रुत्वा केसरी वाक्यमब्रवीत्॥ सेतौ रामेश्वरक्षेत्रे पूर्वजन्मन्य-
हं द्विजः ॥५८॥ निंदकः सर्व धर्माणां पाखंडोक्त्येक तत्परः॥ कदाचिच्चैत्रमासे तु तत्र श्रीरामसंज्ञके॥ ५९॥
तीर्थे जनसमूहं च श्रुत्वा पौराणिकिं कथा ॥ पुराणिकेन कथितां चैत्रमाहात्म्यसूचकाम्॥ १६०॥ कृत वा निं-
दनं चाहं वारंवार पुनः पुनः॥ तन्मत्कृत निंदनं च कश्चिद्विप्रस्तपस्थितः॥ ६१॥ सुश्राव सकलं दुष्टं तेन
शप्तोस्म्यहं तदा ॥ क्रूरां जातिं त्वरं गच्छ यदा चैत्रेश कीर्तनम्॥६२॥ भविष्यति महारण्ये शापस्यांत
स्तदेति च॥ एवं प्रोक्तं मया सर्वं पूर्वजन्मनि यत्कृतम्॥६३॥ तेन शापेन जातोऽस्मि केसरी भयकारकः
॥चैत्र रामश्रवाज्जाता पूर्वस्मृतिरनुत्तमा॥६४॥इदानीं रक्ष मां विप्र त्वं चैत त्सिंहदेहतः॥ इति सिंहस्य
। वृत्तं तु ज्ञात्वोवाच गजं द्विजः॥६५॥कस्माच्च मातंगं गतोसि दुष्ट-जातो वदस्वाद्य महाघसंघात्॥स
चापि मातंगवरः समस्तं-वृत्तं निजं चाकथयच्च जीर्णम्॥६६॥मातंग उवाच ॥ श्रृणु विप्र प्रवक्ष्यामि पूर्व-
वृत्तं मया कृतम्॥रामनाथपुरे चाहं कावेर्या उत्तरेतटे ॥६७॥विप्रः परम दुर्वृत्तः सर्वशास्त्रपराङ्मुख॥ ल-
क्ष्मीमदभराक्रांत परस्त्रीभोगकारकः॥६८॥ एकदा सुहृदो चाहं भोजनार्थं निमंत्रितः॥ श्राद्धाहे मधुमासे
हि शुक्ले श्रीनवमीदिने॥६९॥मया भुक्तं सुहृद्गेहे नवम्यां द्विजसत्तम॥ तेन पापेन जातोऽस्मि करिजातो
न संशयः॥१७०॥सर्वदा प्रतिमासेऽपि नवम्यां नहि भोजनम्॥ कार्यं विशेषतो रामनवम्यां निंदितं च
तत्॥७१॥इदानीं नहि जानामि केन पुण्येन तेऽत्र वै ॥ संगतिश्च वने जाता सर्वेषां परमार्तिहृत्॥७२॥

इति तस्य वचः श्रुत्वा शंभुर्ध्याने विचारयेत् ॥ ज्ञात्वा मातंगपुण्यं तु प्रोवाच करिणं द्विजः ॥७३॥ शृणु
मातंग वक्ष्यामि यत्पुण्यं च त्वया कृतम् ॥ पूर्वजन्मनि तत्सर्वं येन मे संगतिर्वने ॥७४॥ जाता त्वामुद्धरि-
ष्यामि मा चिंतां कुरु सर्वथा ॥ रामनाथपुरे रम्ये कावेरीतट शोभिते ॥७५॥ रामायण कथा चैत्रे श्रुता पूर्वं
त्वया क्षणम् ॥ तेन पुण्येन संजाता संगतिश्चाद्यते वने ॥७६॥ इति विप्रेण कथितं करिपुण्यं पुरा कृतम् ॥ श्रु-
त्वा सिंहोऽपि पप्रच्छ नैजं पुण्यं द्विजाय सः ॥७७॥ सोऽपि शंभुर्क्षणं ध्यात्वा ज्ञात्वा केसरिणा कृतम् ॥ पूर्व-
जन्मनि यत्पुण्यं तत्तस्मै प्रोक्तवान् द्विजः ॥७८॥ रामेश्वरे महाक्षेत्रे पुरा श्रीनवमी दिने ॥ रामतीर्थे त्वया
स्नात्वा दृष्ट्वा रामेश्वरः शिवः ॥७९॥ तेन पुण्येन ते जाता संगतिर्मम कानने ॥ इदानीं शृणु सिंह त्वं शृ-
णोतु च करि महान् ॥८०॥ साकेते मधुमासे हि स्नात्वाऽनेन पथा पुनः ॥ यदा गच्छामि तां कांचिं यु-
वामुद्धारयाम्यहम् ॥१८१॥ मा संदेहोऽत्र कर्तव्यः शपथैः प्रब्रवीम्यहम् ॥ संतोषार्थं युवाभ्यां हि प्रो-
च्यते शपथा मया ॥८२॥ परस्त्रिगमनात्पापं तथा मित्रवधादिकम् ॥ युवां नोद्धृत्य गच्छामि तर्हि तन्म-
यि तिष्ठतु ॥८३॥ ब्रह्मस्वहरणात्पापं यः स्मृतं मातृनिंदनात् ॥ युवां नोद्धृत्य गच्छामि तर्हि तन्मयि
तिष्ठतु ॥८४॥ इत्युक्त्वा द्विजवर्यः स स्त्रिया भिल्लेन संयुतः ॥ करि सिंह वने स्थाप्य गच्छन्मार्गे शनैः
शनैः ॥८५॥ ददर्शान्यपथायां तं श्रेष्ठं कार्पटिकोत्तमम् ॥ वहंतं रामलिंगार्थं श्रेष्ठं भागीरथीजलम् ॥८६॥
शंभुः पप्रच्छ तं नत्वा नम्रः कार्पटिकोत्तमम् ॥ कुतः समागतं विप्र गम्यते क्वाधुना वद ॥८७॥ कार्प-
टिक उवाच ॥ प्रयागादागतं विद्धि मां त्वं भूसुरसत्तम ॥ मधुमासेऽवगाहार्थमयोध्यां प्रति गम्यते

॥८८॥ इदानीं तं निजं वृत्तं वद ब्राह्मणसत्तम ॥ कुतः समागतं चात्र गम्यते क्वाधुना वद ॥ ८९॥ इति त-
द्वचनं श्रुत्वा शंभु प्रोवाच तं तदा ॥ शिवकांच्याः समायातमयोध्यां प्रतिगम्यते ॥९०॥ चैत्रमासेऽवगाहार्थं
सत्यते कथितं मया ॥ इति शंभु वचः श्रुत्वा पुनः कार्पटिकोत्तमः ॥ १९१॥ पप्रच्छ द्विजवर्याय कौतुकावि-
ष्टमानसः ॥ शिवकांच्यां शंभुनाम्ना कश्चिद्द्विप्रोऽस्ति भो द्विज ॥ ९२॥ तत्तस्य वचनं श्रुत्वा पुनः शंभु-
स्तमब्रवीत् ॥ बहवः शंभुनामानो वर्तते द्विज तत्र हि ॥९३॥ कस्त्वया पृच्छसे तस्य वद गोत्रोपनामनि
॥ इति विप्र वचः श्रुत्वा पुनः कार्पटिकोऽब्रवीत् ॥ ९४॥ ब्राह्मणं शंभुनामानं जानिषे त्वं न वा वद ॥ भारद्वा-
जकुलोत्पन्नं चक्रगोप्युपनामकम् ॥ महादेवसुतं सर्व वेदशास्त्रविशारदम् ॥ ९५॥ एवं महाकार्पटिकेन
सर्व- गोत्रोपनामादिकमादरेण ॥ प्रोक्तं यथा तच्च स भूसुरोऽपि- ज्ञात्वा निजं सर्वमथा वदंतम् ॥९६॥ भो भो
कार्पटिक श्रेष्ठे किमर्थं त्वं हि पृच्छसि ॥ तद्वदस्व सविस्तारं मा शंकां कुरु चात्र हि ॥९७॥ कार्पटिक उवाच
॥ श्रुणु विप्र प्रवक्ष्यामि यदर्थं पृच्छते मया ॥ यदाऽहं गतवान्गंगासागरं द्रष्टुमादरात् ॥९८॥ सीताकुंड स-
मीपे हि देशे कैकट नामके ॥ दृष्टोऽहं मार्गमध्ये च पिशाच्चे नोग्ररूपिणा ॥ ९९॥ मां हंतुं निकटं प्राप्तं तं दृ-
ष्ट्वाहं तदा द्विज ॥ श्रीरामकीर्तनं दीर्घं कृतवान्भयकंपितः ॥२००॥ कीर्तनाद्रामचंद्रस्य स पिशाच्चो पला-
यनम् ॥ मत्तः कृत्वा दूरदेशे स्थित्वा सुश्राव कीर्तनम् ॥१॥ तस्माज्जाता पूर्वजन्मस्मृतिस्तस्य शुभावहा ॥ त्रा-
हि त्राहीति मां प्राह मया पृष्टः स वै पुनः ॥२॥ कस्मात्पिशाच्च देह त्वं जातस्तद्वद सत्वरम् ॥ इति मे वचनं
श्रुत्वा पिशाच्चः प्राह मां पुनः ॥३॥ कांचिपुर्यां द्विजश्चाहं धुंडि नामा पुरस्थितः ॥ नान्नदानं मया पूर्वं कृतं

स्वल्पमपि क्वचित् ॥४॥ तस्मात्पिशाच्च देहत्वं प्राप्तं कार्पटिकोत्तम ॥ इति तद्वचनं श्रुत्वा पुनः प्रोक्त स वै मया ॥५॥ कथं पिशाच्च योन्यास्तु ते मुक्तिश्च भविष्यति ॥ ततः पुनः स मां प्राह यदि मे तनयः शुचिः ॥६॥ चैत्रे दर्शे ममोद्देशादन्नदानं करिष्यति ॥ भविष्यति ममोद्धारस्तत्क्षणान्नात्र संशयः ७ इति तद्वचनं श्रुत्वा पुनः प्रोक्त स वै मया ॥ वर्तते क्व सुतस्ते हि किं नामा वद मां प्रति ॥८॥ ततस्तेन यथा प्रोक्तं भारद्वाजीय चिन्हजम् ॥ तत्प्रोक्तं च मया सर्वं निकटे तव भो द्विज ॥९॥ पिशाचं हि पुनश्चाह मुक्तवान्तद्वदाम्यहम् ॥ रामेशार्थं भो पिशाच नीयते जान्हवीजलम् ॥२१०॥ मया करंडमध्ये हि यदा गच्छामि दक्षिणाम् ॥ दिशं कालेन किंचिं हि प्रवेष्यामि यदा तदा ॥११॥ तव पुत्राय वृत्तं हि कथयिष्याम्यहं तव ॥ इति तद्वचनं श्रुत्वा संतोषं परमं गतः ॥१२॥ पिशाच्चाः प्राह मां विप्र स्तुत्वा नत्वा पुनः पुनः ॥ अवश्यमेव वक्तव्यं मे वृत्तं मम सूनवे ॥१३॥ यथा द्रष्टुं त्वया पांथ यथा प्रोक्तं मया तव ॥ अन्यच्च कथ्यतां तस्मै ममपुत्राय सादरम् ॥१४॥ मधु दर्शेऽन्नदानस्य महिमा श्रूयते दिवि ॥ अतस्त्वं हि ममोद्देशे नान्नदानं मधौ कुरु ॥१५॥ एवमुक्त्वा स पिशाच्चः शपथो मां चकार ह ॥ न ब्रूषे स्मरणं कृत्वा ममपुत्राय चेद्द्विज ॥१६॥ भविष्यति वृथा सर्वं यात्रा तव महामते ॥ इति तद्वचनं श्रुत्वा सांत्वयित्वा च तं पुनः ॥१७॥ निर्गतोऽस्मि मधौ स्नातुमयोध्यां गंतुमादरात् ॥ कृत्वायोध्यापुरीमध्ये चैत्रस्नानं महाफलम् ॥१८॥ यदा गच्छामि तां कांचिं तदा तस्मै वदाम्यहम् ॥ अतएव मया पृष्टस्तव शंभुर्द्विजोत्तमः ॥१९॥ प्रोक्त गोत्रादिभिर्लिंगैः वर्तते चेद्वदस्व माम् ॥ इति शंभुः पितुर्वृत्तं ज्ञात्वा मुर्च्छागतस्तदा ॥२२०॥

आश्वासितश्च भिल्लेन विप्रः प्रोवाच तं पुनः ॥ भो भो कार्पटिकश्रेष्ठ न मत्तोस्ति नरोऽधमः ॥२१॥ यस्त्व-
या पृच्छते शंभुः सोऽहं विद्धि न संशयः ॥ मया पुत्रेण स कृतं स्वपितुर्मोक्षदायकम् ॥२२॥ अन्नदाना-
दिकं कर्म धिग्धिग्मेऽयं वृथा भवः ॥ इदानीं तववाक्येन दास्याम्यन्नं मघौ पितुः ॥२३॥ एवं शंभुः कार्प-
टिकाय चोक्ता-ऽयोध्यां रम्यां दूरतो वै ददर्श ॥ प्रणेमुस्तां दंपति पाथ भिल्ला-स्ततः शंभुश्चावदत्क-
र्कशं सः ॥२४॥ पश्य पश्य महाभिल्ल महाऽयोध्यापुरिं शुभाम् ॥ यस्यां स्नातु समायाता दृश्यंते कोटि-
शो जनाः ॥२५॥ जनौघानां ध्वनिश्चायं श्रूयते मेघशब्दवत् ॥ नाना ध्वज पताकाश्च दृश्यंते चंद्र चापवत्
॥२६॥ तथा वाद्यध्वनिश्चायं श्रूयते हि मनोहरः ॥ अग्निहोत्रादि धूमौघे व्याप्तं पश्य नभांगणम् ॥२७॥
कैलासगिरि साम्यानि पश्य सौधानि कर्कश ॥ नव प्रतोलि परिखा वलयि कृत मेखलाम् ॥२८॥ उत्तुंग
हर्म्य विलस पताका शतशं कुलाम् ॥ अभ्रंलीह महासौध सुवर्णकलशोज्वलम् ॥२९॥ पश्यायोध्यापु-
रिं श्रेष्ठा सरयूतीर नादिताम् ॥ हाटकोद्घाटितै रत्नखचितैर्या कपाटकैः ॥२३०॥ संवृत्तै र्विवृत्तै स्वैरमु-
न्मिषंतीव लक्ष्यते ॥ दोधुयमानै र्मरुता पताकांचलसूचितैः ॥३१॥ आव्हयंतीव सुरतो लक्ष्यते पथिवा-
न्जनान् ॥ अधः कृताधो भुवनां जेतुमकामरावतिम् ॥३२॥ प्रासादमूल व्याजेन सन्नद्धेवाद्य लक्ष्यते ॥
पवित्रेऽस्मिन्महाक्षेत्रे निवसंतीति रोहितः ॥३३॥ ब्रह्मेश हरिभिः सर्वै देवास्ते ऋषयोऽमलाः ॥ कुबेर
स्पर्द्धया यत्र चिन्वंति वसुसंचयान् ॥३४॥ दातुं भोक्तुं सर्वजनाः स्वधर्म निरताः सदा ॥ गेहे गेहे स-
दानंद एवासिद्यत्र वै पुरि ॥३५॥ एषां प्रक्षालयंतिस्म चरणान्वासवादिकौः ॥ ते द्विजाः कस्य नो वंद्याः

येऽयोध्यानगरि स्थिताः॥३६॥ औदार्ये कल्पतरवा गांभीर्ये सागराइव॥ क्षमया क्षमयातुल्या जंगमा निगमाइव॥३७॥दैन्यग्राह महाबोधि ग्रासागस्त्य महर्षयः॥निवसंति द्विजा यत्र वंद्याःसर्व महिभुजाम्॥३८॥चतुर्वर्ग फलोपेतं चतुराश्रम्यमुज्वलम्॥ चातुर्वर्ण्यमिहैवास्ते चतुराम्नाय मार्गगम्॥३९॥ क्रिमि किट पतंगानां विनाज्ञान समाधिभिः॥अत्र निर्बाण पदवि सुलभास्ति वनेचर॥२४०॥ एनपान घटान्भेत्तुं तरंगानं कुशानिव॥ बिभर्ति सरयूसेयं निश्रेणिर्भोगमोक्षयोः॥४१॥ पश्य स्फाटिक सोपान निविष्ट मुनिसंस्तुताम्॥सरयूनदिमुत्तरीयिं कृतामिव पुरा नया॥४२॥इंद्रनील महातुंग प्रतोलि चारुदर्शनः॥रामचंद्रस्य दिव्योयं प्रासादस्तुंग तोरणः॥४३॥ प्रतोलि यस्य घटिता काश्मिरै रुत्पलैरलम्॥सीतायाश्च महानेषः प्रासादो रत्नतोरणः॥४४॥ नानारत्नैर्मंडितश्च हेमस्तंभ विराजितः॥स्फाटिकै रुत्पलै श्चित्रः सरयूतीरसंस्थितः॥४५॥ रामतीर्थे समीपेयं सीतारामस्य ... परः॥ प्रासाद विमलो भाति तप्तकांचन निर्मितः॥४६॥ पताकाभिर्विचित्राभिः कलशैः सुविराजितः॥ उत्तप्त जांबूनद रत्नकुंभः-प्रवाल वैडूर्य निबद्ध भूमिः॥४७॥हेमप्रतोलिरचितः स एषः-प्रासादवर्योस्ति हि लक्ष्मणस्य॥ चातुर्य यत्र विश्रांतं सकलं विश्वकर्मणः॥४८॥सोऽयं भरतराजस्य प्रासादो हेमतोरणः॥ तथा देदिप्यमानोयं रत्नभित्ति विनिर्मितः॥४९॥प्रासादो दृश्यते रम्यः शत्रुघ्नस्य शुभावहः॥स्फाटिकैर्भित्तिभिः दिव्याः प्रोच्चः कनकरेखितः॥२५०॥ प्रासादो वायुपुत्रस्य दृश्यतेऽयं महोज्वलः॥ यदेषयुक्तो फलजाल शोभि-सुदर्शनांकं खगराज केतुः॥ ॥ कुशस्यरम्यस्त्वयमाविरास्ते। प्रासादकुंभः किमु बालसूर्यः॥५१॥

प्रासादोऽयं लवस्यात्र बहुरत्न विराजितः॥ यत्र चित्राण्यनेकानि मोहयंति मृगीदृशाम्॥ ५२॥ चक्षुषि
जातरागाणि योगिनामपि मानसम्॥ विन्यस्त रत्नविन्यासा शांतकुंभ भुवो बहिः॥ ५३॥ न्हेषयंति वसतं
तं रत्नसानु महाप्रभाम्॥ रत्नप्रासादसंयुक्तामयोध्यां पश्य सुप्रभाम्॥ ५४॥ यदंगणं क्षालयं ............ -
स्वीयैर्जलैः सोऽयमनर्घ्य रत्नम्॥ अभ्रंकषैर्हैममयै स्वकुंभै -र्विराजितोऽयं खलु चित्रकेतोः॥ ५५॥ दि-
व्य प्रवाल घटिते कपाटे यत्र चंचले॥ प्रासादोऽयमंगदस्य रुक्मभित्ति विनिर्मितः॥ ५६॥ गरुडोद्गार घ-
टित प्रतोलि परिशोभितः॥ प्रासादः पुष्करस्यायं नयनानंददो नृणाम्॥ ५७॥ विशुद्ध जांबूनद दिव्य-
भूमि-र्लसत्पताकस्त्रिदशाभि वंद्यः॥ प्रासाद एषः परमो मनोज्ञ-स्तक्षस्य वीरस्य महान्विभाति॥ ५८॥
यस्याधिभूमिं नवरत्न सिंह-स्त्रिभिः पदैर्मे विजितास्त्रयोऽपि॥ लोकाश्च तुर्थो नहि दृश्यते तः-पदं समु-
द्यम्य किमाविरास्ते॥ ५९॥ अघौघ मत्त करिणां घटा दारयितुं किमु॥ उदस्त चरणो यस्य रत्नसिंहो
विराजिते॥ २६०॥ सायं हेमभित्तिमयः प्रासादः प्रोन्नतः शुभः॥ सुबाहो पश्य भो भिद्ध रत्नसानु वि-
राजितः॥ ६१॥ रत्न प्रवाल स्फटिकै लिलकाश्मिर निर्मितः॥ प्रासादोऽयं यूपकेतोर्महान्दिप्तिमयः शुभः
॥ ६२॥ कल्हारै रुत्पलैः शोणैररविंदै शतच्छदैः॥ विराजितं पापहरं रामतीर्थ प्रदृश्यते॥ ६३॥ नीलवै-
डुर्य गोमेद गरुडोद्गार विद्रुमैः॥ रचिता यस्य सोपानश्रेणिर्लोचनकार्मणम्॥ ६४॥ इंदूत्पलैः रविदलैर्नि-
बद्धा यस्य भूमयः॥ हरंति ग्रीष्मसंताप निष्पंदसि करोत्करैः॥ ६५॥ आमंद कुरुविंदानार्विन्यासै -
र्यत्र चारुभिः॥ मुह्यंति शुक चेतांसि मुद्ध दाडिम शंकया॥ ६६॥ एवं पश्य शुभां रम्यां पताकाभिर्विराजि-

ताम् ॥ भिल्लायोध्या मुक्तिपुरिं द्वितियाममरावतीम् ॥६७॥ यत्र कार्तस्वर घंटाः प्रतोलि शिरसिस्थिताः
रामं द्रष्टुमनंतास्त्वं प्राप्ताः सूर्याइवा बभुः ॥६८॥ नृसिंह उवाच ॥ एवमुक्त्वा कर्कशेन पत्नी कार्पटिके-
-न च ॥ सहितश्च तदा शंभुस्तां पुरिं संविवेश सः ॥६९॥ रामतीर्थे ततो गत्वा कृत्वा क्षौरादिकं विधिम्
॥उपोष्य दिनमेकं हि तीर्थश्राद्धं चकारसः ॥२७०॥ अमावस्यां शुभां चैत्रे प्राप्ताज्ञात्वा द्विजोत्तमः ॥मु—
क्त्यर्थं स्वपितृश्च ह्यन्नदानं यथाविधि॥७१॥ तच्चैत्रमासेरनिशं संक्षये यतं पितुर्विष्णुभेदं मनोहरम् ॥
विप्रेण चान्नं पथिकस्य वाक्यत-स्तस्मात्पिशाच्चः सुरसद्मनि स्थितः ॥७२॥ अयोध्यायां ततः शंभुः कृ-
त्वा चैत्रावगाहनम् ॥ उद्यापन विधिं चापि यथोक्तं च चकार सः ॥७३॥ कर्कशोऽपि मधौ स्नात्वा मुक्त्वा
पापौघ भू धरम् ॥ अयोध्यानगरीं मध्ये साधुवृत्त्या वसच्चिरम् ॥७४॥ श्रीराम चिंतनं कुर्वन्निनायायुष्य
संक्षयम् ॥ ततो प्राप हरेर्लोकमयोध्यां मरणेनसः ॥७५॥ शंभुश्चापि मधौ स्नानं कृत्वा कांचिपुरी पुनः ॥
गंतुं प्रतस्थे श्रीरामं नत्वाऽयोध्यां पुनःपुनः ॥७६॥ भार्ययासहितः शंभुस्तेन कार्पटिकेन च॥ ययो
पूर्वेण मार्गेण यत्र तौ करि केहलौ ॥७७॥ स्थापितौ शपथैः कृत्वा शनैस्तत्र समागमत् ॥ दत्वा दिनद्वयं
पुण्यमुभाभ्यां मधुमासजम् ॥७८॥ कृत्वा स्वीयांजलौ तोयं तयोर्मुक्तिं चकारसः ॥ ततस्तौ करि सिंहो
च दिव्यमाल्यानुलेपिनौ ॥७९॥ दिव्यं विमानमारुह्य विष्णुलोकं गता उभौ ॥ ततोऽग्रे द्विजवर्यः स
ययौ मार्गेण भार्यया ॥२८०॥ स यत्र राक्षसः पूर्वं स्थातिस्तु शपथैर्वने ॥ तं दृष्ट्वा राक्षसं श्रेष्ठं भार्यां प्राह
द्विजोत्तमः ॥८१॥ अयि काश्याह्वये रम्ये श्रृणु मे वचनं शुभम् ॥ या त्वया शीतलागौरी स्नाता वै सरयू

जले ॥८२॥ तस्यैक दिवसस्याद्य देहि पुण्यं शुभावहम्॥ राक्षसाय हि मद्वाक्याद्गृण्हिष्व जलमं-
जलौ ॥८३॥ इति शंभु वचः श्रुत्वा पद्मनेत्रा कृशोदरी ॥ काशी नाम्नी द्विजपत्नि ददौ पुण्यं निजं तदा
॥८४॥ ततः स राक्षसश्रेष्ठस्त्यक्त्वा देह मलीन सः॥ दिव्यं विमानमारुह्य नत्वा भार्यायुतं द्विजम्
॥८५॥ दिव्य माल्यांबरधरो हरि लोकं जगाम सः॥ शंभुश्चापि प्रियायुक्तो मधु स्नानं विवर्णयन् ८६
ययौ कांचिपुरीं श्रेष्ठां जनान्वृत्तं निवेदयत्॥ भो पिशाच्चा यथा पृष्टं भवद्भिश्च कथानकम्॥८७॥ त-
त्सर्वं च मया ख्यातं राक्षसोद्धारणादिकम्॥ रामदास उवाच ॥ इत्युक्त्वा नृहरिर्विप्रो भार्यां चंद्रप्र-
भे प्रिये ॥८८॥ या त्वया सीतलागौरी स्नाता सीताकृतै वरे ॥ तीर्थे तस्या दिनैकस्य देहि पुण्यं
शुभानने ॥८९॥ पिशाचिन्यै समुध्दर्तुं मा विचारोस्तुते हृदि ॥ इति भर्तुर्वचः श्रुत्वा रम्या पंकजलोच-
ना ॥२९०॥ लक्ष्मी नाम्नी मम माता ददौ पुण्यं निजं तदा ॥ ततः पिशाच्चास्ते सर्वे मुक्ताः शीघ्रं शुभावहाः
॥९१॥ निजरूपाणि वै प्रापु प्रणेमुर्नृहरिर्जवात्॥ नत्वा स्तुत्वा पुनर्नत्वा नृहरिं तं प्रियायुतम्॥९२॥ अपृ-
च्छ जग्मिरे सर्वे स्वगुरोराश्रमं प्रति ॥ गुरुश्चापि सुतां स्वीयां तां ददावति हर्षितः ॥९३॥ तयोर्ज्येय शि-
ष्याय कनिष्ठाया परां सुताम्॥ स्वीयोदर समुत्पन्नां ददाव प्रतिभां वराम्॥९४॥ ततस्तौ सस्त्रियौ विप्रौ
जग्मु तस्तौ मुदान्वितौ ॥ स्व स्व पितुश्चाश्रमं हि तयोस्तै पितरावपि ॥९५॥ दृष्ट्वा पुत्रौ समायातौ सस्त्रि-
यौ तोषमापतुः॥ नृहरिश्च प्रियायुक्तोऽज्जकं प्रति समाययौ ॥९६॥ चैत्रस्नाने तु तत्पुत्रो रामदासाभिधस्त्व-
हम्॥ जातस्ततस्तौ देहांते जग्मतुर्वैष्णवं पदम्॥९७॥ एवं शिष्य मधुस्नान महिमा बहुभिर्नरैः॥ दे-

वैः सिद्धैश्च गंधर्वैः सदाऽनुभवितास्तु हि ॥९८॥ तस्मान्मघावश्यं हि स्नातव्यं मानवोत्तमैः ॥ रामतीर्थेषु सर्वत्र रामचंद्रं प्रपूजयेत् ॥९९॥ एवं त्वया यथा पृष्टं तथा सर्वं निवेदितम् ॥ मयाकान्या स्पृहातेस्ति श्रोतुं तद्वदवाच्म्यहम् ॥३००॥ इति श्रीशतकोटि रामचरितांतर्गत श्रीमदानंदरामायणे वाल्मीकिये आदिकाव्ये मनोहरकांडे रामदास विष्णुदास संवादे चैत्रस्नानफलानुभव वर्णनमेकादशोध्यायः ॥ शुभं भवतु ॥ श्रीसीतारामचंद्रार्पणमस्तु ॥

॥श्रीगणेशायनमः॥ विष्णुदास उवाच ॥ गुरोऽन्यद्रामचंद्रस्य चरित्रं वद मां प्रति ॥ शृण्वतो मे मुहुर्नासि
तृप्तिः श्रोतुं स्पृहैधते ॥१॥ रामदास उवाच ॥ सम्यक्पृष्टं त्वया शिष्य सावधान मनाः शृणु ॥ एकदा हय-
मारूढो पुत्र बंधुर्बलैः सह ॥२॥ वनं ययौ विहारार्थं रामचंद्रो मुदान्वितः ॥ तत्र दृष्ट्वा मृगं श्रेष्ठं तं हंतुं रघु-
नंदनः ॥३॥ बाणमाकृष्य तत्पृष्ठे ययौ वेगेन सादरम् ॥ वनाद्वनांतरं रामो मृगस्य च पदानुगः ॥४॥ एकाकि
हयमारूढो विवेश गहनं वनम् ॥ पश्चाद्दूर स्थिताः सर्वे लक्ष्मणाद्या बलैः सह ॥५॥ रामोऽपि निजबाणेन मृ-
गं हत्वा वने जवात् ॥ निर्जलं वितृषाक्रांतः क्षुधा व्याप्तोऽप्यभूत्तदा ॥६॥ ततो रामो वृक्षतले क्षणं तस्था
श्रमान्वितः॥ तावत्तं शबरी काचि दृष्ट्वा रामं मुदान्विता ॥७॥ नृपं ज्ञात्वा राजचिन्है स्तं प्रणम्य पुरतः
स्थिता ॥ तां दृष्ट्वा राघवोऽप्याह वाक्यं शबरी मे शृणु ॥८॥ लक्ष्मणाद्या स्थिता दूरं क्षुट्तृभ्यां पिडि-
तोस्म्यहम् ॥ किंचिद्यत्न कुरुष्वाद्य न मेऽद्य सुखसंभवे ॥९॥ तद्रामवचनं श्रुत्वा शबरी वाक्यमब्र-
वीत् ॥ इतो विदूरे श्रीराम दुर्गाऽस्ति सरसस्तटे ॥१०॥ भौमवारेऽद्य नार्यश्च बहवोऽत्र समागताः॥ त-
त्र त्वं च मया राम यदि यास्यसि सांप्रतम् ॥११॥ तर्हि तत्र विचित्रान्नैस्तुष्टिं प्राप्स्यसि वै क्षणात् ॥ तत्त-
स्या वचनं श्रुत्वा शबरीं प्राह राघवः ॥१२॥ अहमत्रैव तिष्ठामि प्रतीक्ष्यार्थं कुशस्य च ॥ लवस्य लक्ष्मणा
दीनां सैन्यस्य वनवासिनि ॥१३॥ गच्छ त्वमेव तां दुर्गां स्त्रीर्मे वृत्तं न्यवेदय ॥ तद्रामवचनं श्रुत्वा तथेत्यु-
क्त्वा त्वरान्विता ॥१४॥ स्त्रीर्गत्वा शबरी प्राह शृणुध्व वचनं मम ॥ रामो राजीवपत्राक्षो मृगयां कर्तुमाग-
तः ॥१५॥ अविदूरे वृक्षतले क्षुधाक्रांत स्थितोस्ति हि ॥ स्तेनाहं प्रेषितास्म्यद्य सूचनार्थं वराननाः ॥१६॥

युष्माकं कथितं वृत्तं तस्य गच्छाम्यहं पुनः॥ शबर्याः स्ता वचः श्रुत्वा नार्यः संभ्रमान्विताः ॥१७॥ अभिनं-द्य निजैर्वाक्यैः शबरी तां मुहुर्मुहुः ॥ परस्परं तदा प्रोचुस्ता नार्यः शतशो मुदा ॥१८॥ धन्योऽद्य दिव-सोऽस्माकं यस्मिन्राघवदर्शनम्॥ भविष्यंति वरान्नैश्च तोषयामो रघूत्तमम् ॥१९॥ आदौ दुर्गां पूजयि-त्वा नैवेद्यस्तां निवेद्य च ॥ ततो समर्प्य रामाय भोक्ष्यामश्च वयं ततः ॥२०॥ इति संमंत्र्य ता नार्यो रु-क्मालंकारमंडिताः॥ पीतकौशेय वासिन्यो वरास्या मृगलोचनाः ॥२१॥ विप्र क्षत्रिय वैश्याना शूद्राणां चा-पि वेगतः ॥ नैवेद्यपात्रैस्तां दुर्गां ययुः नूपुर निस्वनाः ॥२२॥ एतस्मिन्नंतरे देवी स्वालयस्य समंततः ॥ कपाटानि दृढं बध्वा तूष्णिमास गिरिंद्रजा ॥२३॥ ततस्ता द्वारमासाद्य द्वारं बद्धं निरीक्ष्य च ॥ बभ्रमुः सर्व द्वाराणि न मार्गं लेभिरे स्त्रियः ॥२४॥ तदाश्चर्यमनाः सर्वा द्वारदेशे स्थिता क्षणम् ॥ ताव देवालया शब्दं नि-र्गतं सुश्रुवु स्त्रियः ॥२५॥ अहमेवात्र सीतास्मि रामः साक्षान्महेश्वरः ॥ ये भिन्नं मानयंत्यत्र मां सीतां राघ-वं हरम् ॥२६॥ ते कोटि कल्पपर्यंतं पच्यंते रौरवेषु हि ॥ अतो यूयं हि भो नार्यो रमानाथं जगत्प्रभुम् ॥२७॥ तो-षयध्व वरान्नैश्च तच्छेषेण त्वहं ततः ॥ तुष्टा भवामि गच्छध्वं क्षुधितं तं रघूत्तमम् ॥२८॥ इति नार्यो वचः श्रुत्वा देव्यास्ता विस्मयान्विताः ॥ दुद्रुवु र्गजगामिन्यो शबरी चरणानुगः ॥२९॥ ततः सा शबरी ताभ्या दर्शयामास राघवम् ॥ ता नेत्रपंकजैः सर्वा दृष्ट्वा नत्वा रघूत्तमम् ॥३०॥ दिव्यान्नानि पुरः स्थाप्य हेम-पात्रैर्जलान्यपि ॥ ततः सं प्रार्थयामासुः स्त्रियः सर्वाः पुरः स्थिताः ॥३१॥ त्वयाद्य तारिता राम वयं नार्यः सहस्रशः ॥ शबरी प्रेष्य गहने वनेऽत्र परमादरात् ॥३२॥ अन्नानि स्वीकुरुष्व त्वं देव्या त्वां प्रेषितानि

हि ॥ तत्तासा वचनं श्रुत्वा राघवः प्राह सस्मितः ॥३३॥ देव्या किमुक्तं भो नार्यः कथनीयं ममाद्य तत् ॥
ताः प्रोचु राघवं नार्यो दुर्गावाक्यं सविस्तरम् ॥३४॥ दुर्गावाक्यं श्रृणुष्वाद्य त्वहमेवात्र जानकी ॥ रामः सा-
क्षान्महादेवो नात्र भेदः कदाचन ॥३५॥ मानयत्यत्र भेदं ये खर वेषु पतंति ते ॥ अतो रामं तोषयित्वा त-
दुच्छिष्टं त्वहं ततः ॥३६॥ भोक्ष्यामि नार्यो गच्छध्वं क्षुधार्तं रघुनंदनम् ॥ देव्येच्छ भाषिता राम तत—
स्त्वा समुपागताः ॥३७॥ अद्य त्वं पूर्वपुण्यैर्नो भुंक्ष्वान्नं रघुनंदन ॥ ततस्ता प्राह श्रीरामो विहस्य मुदि-
ताननः ॥३८॥ यदि देवि वचः सत्यं तर्ह्यत्र गहने वने ॥ सीतारूपेण सा दुर्गा मां समायातु सत्वरम् ॥३९
युष्मन्नारि समूहात्तु काचिन्नारी गिरींद्रजाम् ॥ गत्वा मद्वचनं दुर्गां श्रावयित्वाद्य कौतुकात् ॥४०॥ तद्रा-
म वचनं श्रुत्वा त्वेकास्त्रिस्त्रि कदंबकात् ॥ गत्वा दुर्गां रामवाक्यं श्रावयामास सादरम् ॥४१॥ दुर्गा श्रु-
त्वा रामवाक्यं तथेत्त्युक्त्वा तु तां स्त्रियम् ॥ किंचित्कपाटमुद्धाट्य सीतारूपेण निर्ययौ ॥४२॥ ततः पु-
नर्दृढं बध्वा कपाटं जानकी जवात् ॥ तोयपात्रं करे धृत्वा ययौ रामं स्मितानना ॥४३॥ नमस्कृत्वा रामचंद्रं त-
त्पार्श्वे संस्थिता भवत् ॥ तदा ताः सकला नार्यास्त्वभूवन् विस्मिता हृदि ॥४४॥ ततो रामो वरान्नानि वि-
प्रस्त्रीणि तथा पुनः ॥ क्षत्रियाणां च नारीणां भोक्तुं स्नानार्थमुद्यतः ॥४५॥ ततः शरासने बाणं संधाय ज-
गदीश्वरः ॥ भुवं भीत्वाथ पाताला जलं तत्र समानयत् ॥४६॥ तत्र सस्नौ रामचंद्रः कृत्वा माध्यान्हिकं
ततः ॥ यावद्भोक्तुं मनश्चक्रे तावत्तेऽपि समाययुः ॥४७॥ कुशाद्याः सर्वसैन्यश्च रामवाजीपदानुगाः ॥ ते
सर्वे जानकिं दृष्ट्वा विस्मयं परमं ययुः ॥४८॥ ततस्ता शबरीवाक्यात्सर्वं श्रुत्वा कुशादिकाः ॥ गतमोहा रामचं-

द्रं मेनिरे चंद्रशेखरम् ॥ ४९॥ सीतां गिरीद्रजां चापि मेनिरे ते विनिश्चयात् ॥ ततो रामो कुशाद्यैश्च सै-
न्येन सीतया मुदा ॥५०॥ भुक्त्वा पीत्वा जलं स्वच्छं वाक्यं स्त्रीं प्राह सादरम् ॥ वरयध्व वरा नार्यो यु-
ष्माकं यत्तु रोचते ॥५१॥ तद्रामवचनं श्रुत्वा स्त्रियः प्रोचु रघूत्तमम् ॥ येनास्माकं भवेत्कीर्तिस्तं वरं दा-
तुमर्हसि ॥५२॥ ततः प्राह रामचंद्रस्ता नारीं तुष्टमानसः ॥मम नामस्तु युष्माकं रामेति जगतितले ५३
युष्माकं मयि सद्भक्तिः पुरुषेभ्योऽपि चाधिका ॥ भविष्यति सदा नार्यो वरेण मम निश्चयात् ॥५४॥देवे
विप्रे कथायां च धर्मे भक्तिर्भविष्यति ॥ यदा यूयं पवित्राश्च भवध्व सधवा स्त्रियः ॥५५॥ मांगल्ये च
शकुने च सर्वेषु च पुरःसराः ॥ यूयं भवध्व सर्वत्र त्रिवेणि धृतमस्तकः॥५६॥ ममबाण कृतं तीर्थं मन्ना-
म्नेदं भविष्यति ॥ इति राम वचः श्रुत्वा स्त्रियः प्रोचु रघूत्तमम् ॥५७॥ जन्मांतरेऽपि त्वं राम दर्शनं देहि
ना पुनः॥ तत्तासां वचनं श्रुत्वा राघवो वाक्यमब्रवीत् ॥५८॥ द्वापारे कृष्णरूपेण युष्माकं दर्शनं मम् ॥
भविष्यति वने यज्ञे त्वन्नायाच्यं प्रसंगतः ॥५९॥ द्विजपत्न्यस्तदा यूयं भविष्यावः स्त्रियो वने ॥ इयं
तु शबरी पत्नि विप्रस्यैव भविष्यति ॥६०॥ मद्दर्शनार्थमुद्युक्ता मे नामस्याः पतिर्यदा ॥ स्तंभे बध्वा
महादंडं स करिष्यति वै गृहे ॥६१॥ यदेयं मद्गतमना वने याष्यति मां प्रति ॥ भिन्न देहेन शबरी कौ-
तुकं तद्भविष्यति ॥६२॥ तदा यूयं स्त्रियः सर्वास्तं दृष्ट्वा कौतुकं महत् ॥ भूत्वात्र मद्गतमना मां ध्यात्वा
सर्वदा हृदि ॥६३॥ अंते मल्लोकमासाद्य भोक्ष्यावः सुखमुत्तमम् ॥ रामेति तारकं नाम मम नित्यं हि स-
र्वदा ॥६४॥ युष्माभिर्जपनीयं हि तेनास्तु गतिरुत्तमा ॥ इति दत्वा वरान्ताभ्या सीतामाह पुर स्थि-

ताम् ॥६५॥ सुखं याहि स्थलं स्वीय तथेत्युक्त्वा विदेहजा ॥ रामं प्रणम्य स्त्रीर्युक्ता ययौ देवालयं पुनः
॥६६॥ देवालयांतर्गता भूत्वा दुर्गारूपं दधार सा ॥ ततिविस्मयं प्रापुस्ता नार्यो निज चेतसा ॥६७॥
तास्तां दुर्गां प्रपूज्याथ नार्यः जग्मुः स्थलं निजम् ॥ रामोऽपि बंधु पुत्राद्यैर्ययौ निज पुरीं प्रति ॥६८॥
गेहे कुश तदा सीतां पप्रच्छ वन चेष्टितम् ॥ दृष्टवच्च यथा वृत्तं तथा तां तु न्यवेदयेत् ॥६९॥ ततस्ते
लक्ष्मणाद्याश्च मेनिरे राघवं हरम् ॥ सीतां साक्षान्महादुर्गां मेनिरे गतविभ्रमः ॥७०॥ एवं शिष्य ज-
नानां च रामेण परमात्मना ॥ द्वैतबुद्धि खंडितात्र वने कृत्वा तु कौतुकम् ॥७१॥ एवं वरेण रामस्य रा-
मा नार्यत्र कथ्यते ॥ तासामपि मनुश्चायं स्मृतो रामेति द्व्यक्षरः ॥७२॥ नान्यो मंत्रोस्ति नारीणां शूद्रा-
णां चापि भो द्विज ॥ सर्वेभ्यो मंत्रवर्येभ्यो रामस्यायं मनुर्वरम् ॥७३॥ त्रासे भये महापापे बाधायां
सर्वधा नरैः ॥ रामेति व्यक्षरे मंत्रः कीर्त्यते जगतितले ॥७४॥ कृत्वा पापं महाघोरं पश्चात्तापेन यो
नरः ॥ सकृद्रामेति मंत्रा हि कीर्तयेच्छुद्धिमाप्नुयात् ॥७५॥ रामेति मंत्रराजोऽयं गमने भोजने तथा
॥ शयने क्रिडने रात्रौ स्थिते कार्यांतरे नरे ॥७६॥ जपनीयः सर्वदैव संध्ययोरुभयोरपि ॥ चतुर्वर्णैः सदा
जप्यश्चतुराश्रमवासिभिः ॥७७॥ नास्य मंत्रस्य कालोस्ति जपार्थं कालरूपिणः ॥ तस्माज्जनैर्जपनीयः
सर्वदा मनुरुत्तमः ॥७८॥ राममंत्रो मुखे यस्य देहो मुद्रांकित स्तथा ॥ राममुद्रांकितं वस्त्र स मुद्रावस्त्रमु-
च्यते ॥७९॥ सर्ववस्त्रेषु तच्छ्रेष्ठं पवित्रं पापनाशकम् ॥८०॥ स मुद्रावसनं देहे बिभ्रंतं मानवोत्तमम् ॥
कृतं पापं न लिप्ये तं पद्मपत्रमिवांभसा ॥८१॥ स मुद्रावस्त्रसंयुक्तं दृष्ट्वा भुवि नरोत्तमम् ॥ यमदूताः

पलायंते सिंहं दृष्ट्वा मृगा यथा ॥८२॥ पुरैकदा तु मुनयः स मंत्र्यो च रघूत्तमम् ॥ रामराम महाबाहो क-
लावग्रे द्विजोत्तमाः ॥८३॥ व्यग्रचित्ता मंदधी यो भविष्यत्यवनीतले ॥ निजजाठर पूर्त्यर्थं द्वाराद्द्वार भ्र-
मंति हि ॥८४॥ कुतोऽवकाशः स्मरणे तव तेषां भविष्यति ॥ अतस्तेषां हितार्थाय यत्वां यांच्यामो राघव
॥८५॥ तेषां हितार्थं किंचित्वमुपायं वक्तुमर्हसि ॥ तत्तेषां वचनं श्रुत्वा मुनिनां रघुनंदनः ॥८६॥ उवाच वा-
क्यं संतुष्टस्तान्मुनिन्प्रहसन्प्रभुः ॥ सम्यगुक्तं मुनिश्रेष्ठाः श्रुणुध्व वचनं मम ॥८७॥ मम मुद्रांकितं व-
स्त्रं कलौ धार्यं जनैः सुखम् ॥ मम मुद्रांकितं वस्त्रं बिभ्रंतं मानवोत्तमम् ॥८८॥ न स्पृशेत्पातकं किंचित्कृतं
चापि नरेण हि ॥ शंख चक्र गदा पद्म नाम मुद्रांकितं शुभम् ॥८९॥ वस्त्रं धार्यं नरैर्भक्त्या मुद्रैकांकितं तु
वा ॥ शंखादि पंचभिर्युक्तं सदा वस्त्रं मम प्रियम् ॥९०॥ मन्मुद्रांकितं वापि वस्त्रं मत्तोषदं स्मृतम् ॥ स्नात्वा
धार्यं सदा तच्च जपकाले विशेषतः ॥९१॥ मलमुत्रोत्सर्जने च शयने क्रीडने तथा ॥ शुचौ च क्षये वृद्धौ दे-
शह्रदे राजसभासु च ॥९२॥ पथि दुर्जन संसर्गे मुद्रावस्त्रं न धारयेत् ॥ तथा भोजनकालेऽपि विहारे नैव
धारयेत् ॥९३॥ स्नानकाले व्रते तीर्थे पूजायां पितृकर्मणि ॥ होमे दाने जपे कृच्छ्र चांद्रायण व्रतादिषु ॥९४॥
नित्यकर्म सुकाम्येषु तथा नैमित्तिकेष्वपि ॥ तथा तपस्सु मन्मुद्रावस्त्रं धार्यं सदैव हि ॥९५॥ मम मुद्रांकितं
वस्त्रं बिभ्रंति मानवोत्तमम् ॥ अहं मोक्षं प्रदास्यामि सत्यं सत्यं मुनीश्वर ॥९६॥ एवं श्रुत्वा रामवाक्य
मुनयस्ते मुदान्वितः ॥ रामं पृष्ट्वाऽऽश्रमं स्वं स्वं ययुस्ते मुदिताननाः ॥९७॥ तस्मात्सदा राममुद्रावस्त्रं धार्यं
नरैर्भुवि ॥ रामेति व्द्यक्षरो मंत्रा जपनीयस्तु सर्वदा ॥९८॥ राममुद्रा शुभा धार्या गोपिचंदनसंयुता ॥ सदात्र

मानवैर्भक्त्या रामतोषार्थमादरात् ॥ ९९॥ पूजा सदा राघवस्य कार्यात्र मानवैर्भुवि ॥ सदा स्नानं राम-
तीर्थे नरैः कार्यं प्रयत्नतः ॥१००॥ सदा रामायणं चेचं श्रवणीय नरैर्भुवि ॥ ~~सदा स्नानं रामतीर्थे नरैः का~~-
चिंतनीयः सदा रामो जन्ममृत्युनिवारकः ॥१॥ स्तोतव्यः कीर्तनीयश्च वंदनीयोऽत्र राघवः ॥ न किंचि-
दनुमात्रं हि विना रामं समाचरेत् ॥२॥ हनुमत्कवचं दिव्यं पठित्वाऽऽदौ नरैर्भुवि ॥ ततः श्रीरामकव-
चं पठनीयं हि सर्वदा ॥३॥ पठंति रामकवचं हनुमत्कवचं विना ॥ अरण्ये रोदनं तैस्तु कृतमेव न
संशयः ॥४॥ स्तोत्राणामुत्तमं स्तोत्रं सर्व भीतिनिवारकम् ॥ श्रीरामकवचं नित्यं पठनीयं नरैर्भुवि ५
विष्णुदास उवाच ॥ गुरोऽहं श्रोतुमिच्छामि हनुमत्कवचं शुभम् ॥ तथैव रामकवचं वद कृत्वा कृपां
मयि ॥६॥ रामदास उवाच ॥ सम्यग्पृष्टं त्वया वत्स सावधान मनाः शृणु ॥ हनुमत्कवचं रामकव-
चं च वदामि ते ॥१०७॥ इति श्रीशतकोटि रामचरितांतर्गत श्रीमदानंदरामायणे वाल्मीकिये मनोहर
कांडे श्रीरामेण अद्वैत प्रदर्शनं नाम द्वादशः सर्गः ॥ शुभं भवतु ॥ श्रीसीतारामचंद्रार्पणमस्तु ॥

आकोला ता० २४।७।१९५३

॥श्रीगणेशायनमः॥ एकदा सुखमासीनं शंकरं लोकशंकरम्॥ पप्रच्छ गिरिजा कांतं कर्पूरधवलं शिवम् १
श्रीपार्वत्युवाच॥ भगवन्देवदेवेश लोकनाथ जगत्प्रभो॥ शोकाकुलानां लोकानां केन रक्षा भवे ध्रुवम् २
संग्रामे संकटे घोरे भूतप्रेतादिके भये॥ दुःख दावाग्नि संतप्त चेतसां दुःखभागिनाम्॥३॥ श्रीमहादेव
उवाच॥ श्रृणु देवि प्रवक्ष्यामि लोकानां हितकाम्यया॥ बिभीषणाय रामेण प्रेम्णा दत्तं च यत्पुरा॥४॥ कव-
चं कपिनाथस्य वायु पुत्रस्य धीमतः॥ गुह्यं तत्ते प्रवक्ष्यामि विशेषाच्छृणु सुंदरी॥५॥उद्यदादित्य संकाश
मुदार भुजविक्रमम्॥ कंदर्पकोटि लावण्यं सर्व विद्या विशारदम्॥६॥ श्रीरामहृदयानंद भक्तपल्य महिरु-
हम्॥ अभयं वरदं दार्भ्यां कलये मारुतात्मजम्॥७॥ हनुमानंजनी सूनुर्वायु पुत्रो महाबलः॥ रामेष्ट फाल्गु
नसखा पिंगाक्षोऽमीतविक्रमः॥८॥ उदधिः क्रमणश्चैव सीताशोक विनाशनः॥ लक्ष्मणः प्राणदाता च द-
शग्रीवस्य दर्पहा॥९॥ एवं द्वादश नामानि कपींद्रस्य महात्मनः॥ स्वापत्काले प्रबोधे च यात्रा काले च ये
पठेत्॥१०॥ तस्य सर्व भयं नास्ति रणे च विजयी भवेत्॥ राजद्वारे गह्वरे च भयं नास्ति कदाचन॥११॥
अुल्लंघ्य सिंधोः सलिलं ······· । यः शोकवन्हिं जनकात्मजा याः॥ आदाय तेनैव ददाह लंकां नमाजलि-
मांजनेयम्॥१२॥ ॐ नमो हनुमते सर्व ग्रहान्भूत भविष्य वर्तमानान्समीपस्थान्सर्व काल दुष्ट बुद्धि नु-
च्चाटयोच्चाटय॥ परबलान्क्षोभय क्षोभय मम सर्व कार्याणि साधय साधय॥ ॐ ह्रां ह्रीं ह्रुं फट्। घे घे घे
शिव शिधम्॥ ॐ ह्रां ॐ ह्रीं ॐ ह्रूं ॐ ह्रैं ॐ ह्रौं ॐ ह्रः स्वाहा। परकृत यंत्र मंत्र परहंकार। भूत प्रेत
पिशाच दृष्टि सर्व विघ्न दुर्जन चेष्टा कुविद्या सर्व ऊग्रभया निवारय निवारय बंध बंध लुंठ लुंठ विचलु वि-

चलु कीलि कीलि ॥ सर्व कुयंत्राणि दुष्ट वाचं हुं फट् स्वाहा । ॐ अस्य श्रीहनुमत्कवच स्तोत्रमंत्रस्य
श्रीरामचंद्र ऋषिः श्रीहनुमान् परमात्मा देवता अनुष्टुप् छंदः॥ मारुतात्मज इति बिजम् । अंजनी सूनु
इति शक्तिः । लक्ष्मणप्राण दातेति कीलकम् । राम दूतायेति अस्त्रम् ॥ हनुमान् देवता इति वचम् ॥ पिंगाक्षो-
ऽमितविक्रम इति मंत्रः । श्रीरामचंद्र प्रेरर्णयाय श्रीरामचंद्र प्रीत्यर्थं मम सकल कामना सीध्यर्थं जपे वि-
नियोगः ॥ अथ अंगुलि न्यासः ॥ ॐ ह्रां अंजनीसुताय अंगुष्ठाभ्यां नमः । ॐ ह्रीं रुद्रमूर्तये तर्जनि-
भ्यां नमः ॥ ॐ ह्रूं रामदूताय मध्यमाभ्यां नमः ॥ ॐ ह्रैं वायु पुत्राय अनामिकाभ्यांनमः ॥ ॐ ह्रौं* क-
निष्ठिकाभ्यां नमः ॥ ॐ ह्रः ब्रह्मास्त्रनिवारणाय करतल करपृष्ठाभ्यां नमः ॥ इति अंगुलिन्यासः ॥
अथ हृदयादि न्यासः ॥ ॐ ह्रां अंजनीसुताय हृदयायनमः । ॐ ह्रीं रुद्रमूर्तये शिरसेस्वाहा । ॐ ह्रूं
रामदूताय शिखायै वषट् । ॐ ह्रैं वायु पुत्राय कवचायहुम् । ॐ ह्रौं अग्निगर्भाय नेत्र त्रयायै वषट् । ॐ
ह्रः ब्रह्मास्त्रनिवारणाय अस्त्रायफट् ॥ अथ ध्यानम् ॥ ध्यायेद्बालदिवाकरं द्युतिनिभं देवारि दर्पापहं-
देवेंद्र प्रमुखं प्रशस्त यशसं देदिप्यमानं रुचा ॥ सुग्रीवादि समस्त वानरयुतं सुव्यक्त तत्वप्रियं-संरक्तारु-
णलोचनं पवनजं पीतांबरालंकृतम् ॥१॥ उद्यन्मार्तंड कोटि प्रकट रुचियुतं चारु वीरासनस्थम् । मौंजी य-
ज्ञोपवीताभरण रुचि शिखं शोभितं कुंडलांकम् ॥ भक्तानाभिष्ट दत्तं प्रणत मुनिजनं वेदनाद प्रमोदं- ध्यायेद्दे-
वं विधेयं प्लवगकुलपतिं गोष्पदी भूत वार्धिम् ॥२॥ वज्रांगं पिंगकेशाढ्यं स्वर्ण कुंडल मंडितम् ॥ निरुढमुप-
संगम्य पारावार पराक्रमम् ॥३॥ स्फटिकाभं वर्णकांतिं द्विभूजं च कृतांजलिम् ॥ कुंडल द्वय संशोभि मुखां-

* अग्निगर्भाय

भोज हरिं भजे ॥४॥ सव्य हस्ते गदा युक्तं वामहस्ते कमंडलुम् ॥ उद्यद्दक्षिण दोर्दंडं हनुमंतं विचिंतयेत्
॥५॥ अथ मंत्रः ॥ ॐ नमो हनुमते शोभितानननाय यशशोलंकृताय अंजनीगर्भसंभूताय रामलक्ष्मणा-
-नन्दकाय कपिसैन्य प्रकाशन पर्वतोत्पाटनाय सुग्रीव साह्यकरण परोच्चाटण कुमार ब्रह्मचर्य गंभीर श-
ब्दोदय ॐ ऱ्हीं सर्वदुष्टग्रह निवारणाय स्वाहा ॥ ॐ नमो हनुमते जोहि जाहि सर्वग्रह भूतानां शाकिनि
डाकिनीनां विषम दुष्टानां सर्वेषामाकर्षय आकर्षय छेदय छेदय मर्त्यान्मारय मारय शोषय शोषय
ज्वालय ज्वालय ॥ भूतमंडल पिशाच मंडल निरसनाय ॥ भूतज्वर प्रेतज्वर चातुर्थिक ज्वर ब्रह्मराक्षस
पिशाच छेदन क्रिया ॥ विष्णुज्वरं महेशज्वरं छिंधि छिंधि भिंदि भिंदि ॥ अक्षि शूले शिरोभ्यंतरे यक्षि
शूले गुल्मशूले पित्त शूले ब्रह्मराक्षसकुल प्रबल नाग कुलविष निर्विषं झठति झठति ॐ ऱ्हीं फट् घे घे
स्वाहा ॥ ॐ नमो हनुमते पवनपुत्र वैश्वानर मुख पापष्टि षोढा दृष्टि हनुमते को आज्ञा फुरे स्वाहा ॥ स्वगृहे
द्वारे पट्टणे तिष्ठे तिष्ठेति ॥ तत्र रोगभयं राजकुलभयं नास्ति ॥ तस्योच्चारणमात्रेण सर्वेज्वरा नश्यंति ॐ
ऱ्हां ऱ्हीं ऱ्हूं फट् घे घे स्वाहा ॥ श्रीरामचंद्र उवाच ॥ हनुमान्पूर्वतः पातु दक्षिणे पवनात्मजः ॥ पातु प्रती-
च्यां रक्षोघ्नः पातु सागर पारगः ॥१॥ उदीच्यामूर्ध्वगः पातु केसरी प्रियनंदनः ॥ अधस्तु विष्णुभक्तस्तु
पातु मध्यं च पावनीः ॥२॥ लंकाविदाहकः पातु सर्वापद्भ्यो निरंतरम् ॥ सुग्रीवसचिवः पातु मस्तकं
वायुनंदनः ॥३॥ भालं पातु महावीरो भ्रुवोर्मध्ये निरंतरम् ॥ नेत्रे छायापहारी च पातु नः प्लवगेश्वरः ॥४॥
कपोले कर्णमूले च पातु श्रीरामकिंकरः ॥ नासामग्रंजनीसूनुः पातु वक्त्रं हरीश्वरः ॥५॥ वाचं रुद्रप्रियः

पातु जिव्हां पिंगललोचनः ॥५॥ पातु दंतं फाल्गुणेष्टश्चुबुकं दैत्यदर्पहा ॥६॥ पातु कंठं च दैत्यारिः स्कंधौ पातु सुरार्चितः ॥ भुजौ पातु महातेजाः करौ च चरणायुधः ॥७॥ नखान्नखायुधः पातु कुक्षौ पातु कपीश्वरः ॥ वक्षो मुद्रापहारी च पातु पार्श्वे भुजायुधः ॥८॥ लंकानिभंजनः पातु पृष्ठदेशे निरंतरम् ॥ नाभिं च रामदूतस्तु कटिं पात्वनीलात्मजः ॥९॥ गुह्यं पातु महाप्राज्ञो लिंगं पातु शिवप्रियः ॥ ऊरू च जानुनी पातु लंकाप्रासादभंजनः ॥१०॥ जंघे पातु कपिश्रेष्ठो गुल्फौ पातु महाबलः ॥ अचलोद्धारकः पातु पादौ भास्करसंन्निभः ॥११॥ अंगान्यमित्तसत्त्वाढ्यः पातु पादांगुलिस्तथा ॥ सर्वांगानि महाशूरः पातु रोमाणि चात्मवित् ॥१२॥ हनुमत्कवचं यस्तु पठेन्विद्धान्विचक्षणः ॥ स एव पुरुषश्रेष्ठो भुक्तिमुक्तिं च विंदति ॥१३॥ त्रिकालमेककालं वा पठेन्मासत्रयं नरः ॥ सर्वान्रिपुन्क्षणाज्जित्वा स पुमान्श्रियमाप्नुयात् ॥१४॥ मध्यरात्रे जले स्थित्वा सप्तवारं पठेद्यदि ॥ क्षयापस्मार कुष्टादि तापत्रय निवारणम् ॥१५॥ अश्वत्थमूलेऽर्कवारे तु स्थित्वा पठति यः पुमान् ॥ अचलां श्रियमाप्नोति संग्रामे विजयं तथा ॥१६॥ बुद्धिर्बलं यशो धैर्यं निर्भयत्वमरो गता ॥ सुदार्ढ्यं वाग्पुटं च त्व हनुमत्स्मरणात् भवेत् ॥१७॥ मारणं वैरिणां सद्यः शरणं सर्वसंपदाम् ॥ शोकस्य हरणे दक्षं वंदे तं रणदारुणम् ॥१८॥ लिखित्वा पूजयद्यस्तु सर्वत्र विजयि भवेत् ॥ यः करे धारयेन्नित्यं स पुमान् श्रियमाप्नुयात् ॥१९॥ स्थित्वा तु बंधने यस्तु जपं कारयति द्विजैः ॥ तत्क्षणान्मुक्तिमाप्नोति निगडात्तु तथैव च ॥२०॥ ईश्वर उवाच ॥ भान्विंदु चरणारविंदयुगुलं कौपीन मौंजीधरं-कांचिश्रेणिधरं दुकूलवसनं यज्ञोपवीतं जिनम् ॥ हस्ताभ्यां धृतपुस्तकं च विलसद्धारा-

वली कुंडलं- यश्चालं विशिखं प्रसन्नवदनं श्रीवायुपुत्रं भजे ॥२१॥ यो वारां निधिमल्पपल्वलमिवो

ल्लंघ्य प्रतापान्विता- वैदेही घनशोक तापहरणो वैकुंठभक्तिप्रियः ॥ अक्षाद्युर्जित राक्षसेश्वर महादर्पाप -

हारी रणे- सोऽयं वानरपुंगवोऽवतु सदा योस्मान्समीरात्मजः ॥२२॥ वज्रांगं पिंगनेत्रं कनकमयलस -

त्कुंडलाक्रांत गंडं - दंभोलि स्तंभसारं प्रहरण सुवशी भूतरक्षोऽधिनाथम् ॥ उद्यल्लांगूल सप्तप्रचलधर

धरं भीममूर्तिं कपींद्रं - ध्याये तं रामचंद्रं भ्रमर दृढकरं सत्त्वसारं प्रसन्नम् ॥२३॥ वज्रांगं पिंगनेत्रं कन-

कमय लसत्कुंडलं शोभनीयं- सर्वा विद्याधिनाथं करतलविधृतं पूर्णकुंभं दृढं वा ॥ भक्तानाभिष्टकारं

विदधति च सदा सुप्रसन्नं हरीशं- त्रैलोक्यं त्रातुकामं सकल भुविगतं रामदूतं नमामि ॥२४॥ वामकरे

वैरिभिदं वहंतं - शैलं परे श्रृंखल हार कंठं ॥ दधानमाच्छाद्य सुवर्णवर्णं - भजे ज्वलत्कुंडलमांजनेयम् ॥२५॥

पद्मरागमणि कुंडल त्विषा - पाटलिकृत कपोलमंडलम् ॥ दिव्यदेह कदलिवनांतरे - भावयामि पवनानंद-

नम् ॥२६॥ यत्र यत्र रघुनाथ कीर्तनं- तत्र तत्रकृत मस्तकांजुलि ॥ बाष्पवारि परिपूर्ण लोचनं -मारुतिं न-

मत राक्षसांतकम् ॥२७॥ मनोजवं मारुततुल्य वेगं- जितेंद्रियं बुद्धिमतां वरिष्ठम् ॥ वातात्मजं वानरयूथ

मुख्यं- श्रीरामदूतं शिरसा नमामि ॥२८॥ विवादे दिव्यकाले च द्युते राजकुले रणे ॥ दशवारं पठेद्रात्रौ

मिताहारो जितेंद्रियः ॥२९॥ विजयं लभते लोके मानवेषु नरेषु च ॥ भूतप्रेते महादुर्गेऽरण्ये सागरसंप्लवे

॥३०॥ सिंह व्याघ्र भये चोग्रे शर शस्त्रास्त्र पातने ॥ श्रृंखला बंधने चैव कारागृहादि यंत्रणे ॥३१॥ कोपे

स्तंभे वन्हिचक्रे क्षेत्रे घोरेषु दारुणे ॥ शोके महारणे चैव ब्रह्मग्रह निवारणम् ॥३२॥ सर्वदा तु पठे नित्यं

जयमाप्नोति निश्चितम् ॥ भुर्जे वा वसने रक्ते क्षौमे वा तालपत्रके ॥३३॥ त्रिगंधिना वा मस्या वा वि-
लिख्यं धारयेन्नरः ॥ पंच सप्त त्रिलोहैर्वा गोपितः सर्वतः शुभम् ॥३४॥ करे कट्यां बाहुमुले कंठे शि-
रसि धारितम् ॥ सर्वान्कामानवाप्नोति सत्यं श्रीरामभाषितम् ॥३५॥ अपराजित नमस्तेस्तु नमस्ते राम-
पूजितः ॥ प्रस्थानं च करिष्यामि सिद्धिर्भवतु मे सदा ॥३६॥ इत्युक्त्वा यो व्रजेत् ग्रामं देशतीर्थांतरं रणम्
॥ आगमिष्यति सः शीघ्रं क्षेमरूपो गृहं पुनः ॥३७॥ इति वदति विशेषाद्राघवे राक्षसेंद्रः । प्रमुदित वरचि-
त्तो रावणस्यानुजो हि ॥ रघुवर पदपद्मं वंदयामास भूयः । कुलसहित कृतार्थः शर्मदं मन्यमानः ॥३८॥
तं वेदशास्त्र परिनिष्ठित शुद्धबुद्धिं- शर्मावरं सुरमुनींद्रमुतं कपींद्रम् ॥ कृष्णत्वचंक पिंगटजटाकलाप
व्यासं- नमामि शिरसा तिलकं मुनीनाम् ॥३९॥ य इदं प्रातरुत्थाय पठेत्ते कवचं सदा ॥ आयुरारोग्य सं-
तानै स्तस्यस्त व्यस्तवो भवेत् ॥४०॥ एवं गिरींद्रजे श्रीमद्धनुमत्कवचं शुभम् ॥ त्वया पृष्टं मया प्रीत्या
विस्तराद्विनिवेदितम् ॥४१॥ रामदास उवाच ॥ एवं शिष्य मुखाच्छ्रुत्वा पार्वती कवचं शुभम् ॥ हनुमं-
तः सदा भक्त्या पपाठ तन्मना सदा ॥४२॥ एवं शिष्य त्वयाप्यत्र यथा पृष्टं तथा मया ॥ हनुमत्कव-
चं चेदं तवाग्रे विनिवेदितम् ॥४३॥ इदं पूर्वं पठित्वा तु रामस्य कवचं ततः ॥ पठनीयं नरैर्भक्त्यानैक ए-
व पठेत्कदा ॥४४॥ हनुमत्कवचं चात्र श्रीरामकवचं विना ॥ ये पठंति नरा चात्र पठनं तद्वृथा भवेत्
॥४५॥ तस्मात्सर्वैः पठनीयं सर्वदा कवच द्वयम् ॥ रामस्य वायुपुत्रस्य सद्भक्तैश्च विशेषतः ॥४६॥ इ-
ति हनुमत्कवचम् ॥ इदानिं रामकवचं श्रृणु शिष्य वदामि ते ॥ परं गुह्यं पवित्रं च सर्व वांछितपूरकम्

॥१॥ सुतीक्ष्णस्त्वेकदाऽगस्तिं प्रोवाच रहसि स्थितम् ॥ भगवन्परमानंदं तत्वज्ञ करुणानिधे ॥२॥ गुरो त्वं
मां वदस्वाद्य स्तोत्रं रामस्य पावनम् ॥ अगस्तिरुवाच ॥ आजानुबाहुमरविंद दलायताक्षमाजन्म शुध्द रस हा-
स मुखप्रसादम् ॥ श्यामं गृहीत शर चापमुदार रूपं- रामं स राममभिराम मनुस्मरामि ॥३॥ श्रुणु वक्ष्या-
म्यहं सर्वं सुतीक्ष्ण मुनिसत्तम ॥ श्रीरामकवचं पुण्यं सर्व काम प्रदायकम् ॥४॥ अद्वैतानंदचैतन्य शुध्द
सत्वैक लक्षणः ॥ बहिरंतः सुतीक्ष्णात्र रामचंद्रः प्रकाशते ॥५॥ तत्व विद्यार्थिनो नित्यं रमंते चित्सुखात्म-
नि ॥ इति रामपदे नासौ परब्रह्माभिधीयते ॥६॥ जयरामेति यन्नाम कीर्तयन्नाभि वर्णयन् ॥ सर्व पापैर्वि
निर्मुक्तो याति विष्णोः परं पदम् ॥७॥ श्रीरामेति परं मंत्रं तदेव परमं पदम् ॥ तदेव तारकं विध्दि जन्ममृ-
त्यु भयापहम् ॥८॥ श्रीरामेति वदन्ब्रह्म भावमाप्नोत्य संशयः ॥ ॐ अस्य श्रीरामकवचस्य । अगस्त्य
ऋषिः ॥ अनुष्टुप् छंदः ॥ सीता लक्ष्मणोपेतः श्रीरामचंद्रो देवता श्रीरामचंद्रप्रसादसिध्द्यर्थं जपे विनियो-
गः ॥ अथ ध्यानं प्रवक्ष्यामि सर्वाभिष्ट फलप्रदम् ॥ नीलजीमूत संकाशं विद्युद्वर्णांबरावृत्तम् ॥९॥ कोमलां-
गं विशालाक्षं युवानमतिसुंदरम् ॥ सीता सौमित्रि सहितं जटा मुकुटधारिणम् ॥१०॥ सासितूण धनुर्बाण
पाणिं दानवमर्दनम् ॥ यदा चोरभये राजभये शत्रुभये तथा ॥११॥ ध्यात्वा रघुपतिं क्रुध्दं कालानल समप्र-
भम् ॥ चीरकृष्णाजिनधरं भस्मोध्दूलित विग्रहम् ॥१२॥ आकर्ण कृष्ट सशरं कोदंड भुजमंडितम् ॥ रणे
रिपून्रावणादि तीक्ष्णमार्गण वृष्टिभिः ॥१३॥ संहरं तं महावीरमुग्रमिंद्ररथास्थितम् ॥ लक्ष्मणाद्यैर्महावीरै-
र्वृतं हनुमतादिभिः ॥१४॥ सुग्रीवाद्यैर्महावीरैः शैलं वृक्षं करोद्यतैः ॥ वेगात्करालहंकारै र्भुंभुःकार महारवैः

॥१५॥ नदद्भिः परिवादद्भिः समरे रावणं प्रति ॥ श्रीराम शत्रुसंघान्मे हनं मर्द नरवादयः ॥१६॥ भूत प्रेत पिशाच्चादिन् श्रीरामासुविनाशय ॥ एवं ध्यात्वा जपेद्राम कवचं सिद्धिदायकम् ॥१७॥ सुतीक्ष्ण वज्र कवचं श्रुणु वक्ष्याम्यनुत्तमम् ॥ श्रीरामः पातु मे मूर्ध्नि पूर्वे च रघुवंशजः ॥१८॥ दक्षिणे मे रघुवरः पश्चिमे पातु पावनः ॥ उत्तरे मे रघुपति र्भालं दशरथात्मजः ॥१९॥ भ्रुवौ दूर्वादलश्यामस्तयोर्मध्ये ज – नार्दनः ॥ श्रोत्रं मे पातु राजेंद्रो दृशौ राजीवलोचनः ॥२०॥ घ्राणं मे पातु राजर्षि र्गंडं मे जानकीपतिः ॥ कर्ण- मूले खरध्वंसि भालं मे रघुवल्लभः ॥२१॥ जिव्हां मे वाक्पतिः पातु दंतवल्यौ रघूत्तमः ॥ ओष्ठौ श्रीरामचंद्रो मे मुखं पातु परात्परः ॥२२॥ कंठं पातु जगद्वंद्यः स्कंधौ मे रावणांतकः ॥ धनुर्बाणधरः पातु भुजौ मे वालि- मर्दनः ॥२३॥ सर्वाण्यंगुलि पर्वाणि हस्तौ मे राक्षसांतकः ॥ वक्षो मे पातु काकुत्स्थः पातु मे हृदयं हरिः ॥२४॥ स्तनौ सीतापतिः पातु पार्श्वं मे जगदीश्वरः ॥ मध्यं मे पातु लक्ष्मीशो नाभिं मे रघुनायकः २५ कौसल्येयः कटिं पातु पृष्ठिं दुर्गतिनाशनः ॥ गुह्यं पातु हृषिकेशः सक्थिनिं सत्यविक्रमः ॥२६॥ ऊरु शा- र्ङ्गधरः पातु जानुनि हनुमत्प्रियः ॥ जंघे पातु "" जघ्वापि पादौ मे ताटिकांतकः ॥२७॥ सर्वांगं पातु मे विष्णुः सर्वसंधिननामयः ॥ ज्ञानेंद्रियाणि प्राणादिन्पातु मे मधुसूदनः ॥२८॥ पातु श्रीरामभद्रो मे शब्दादिन्विष- यानपि ॥ द्विपदादिनि भूतानि मत्संबधिनि यानि च ॥२९॥ जामदग्न्य महादर्पदलनः पातु तानि मे ॥ सौ- मित्रिपूर्वजः पातु वागादिनिंद्रियाणि च ॥३०॥ रोमांकुराण्यशेषाणि पातु सुग्रीवराज्यदः ॥ वाङ्मनोबुध्य- हंकारैर्ज्ञानाज्ञान कृतानि च ॥३१॥ जन्मांतर कृतानीह पापानि विविधानि च ॥ तानि सर्वाणि दग्ध्वासु

हरकोदंड खंडन ॥३२॥ पातु मां सर्वतो रामः शार्ङ्ग बाणधरः सदा ॥ इति श्रीरामचंद्रस्य कवचं वज्र-
संमितम् ॥३३॥ गुह्याद्गुह्यतमं दिव्यं सुतीक्ष्ण मुनिसत्तम ॥ यः पठेच्छृणुयाद्वापि श्रावयेद्वा समाहि-
तः ॥३४॥ स याति परमं स्थानं रामचंद्र प्रसादतः ॥ महापातक युक्तो वा गो घ्नो वा भ्रूणहा तथा
श्रीरामचंद्रकवच पठनाच्छुद्धिमाप्नुयात् ॥ ब्रह्महत्यादिभिः पापै मुच्यते नात्र संशयः ॥३६॥ भो सु-
तीक्ष्ण यथा पृष्टं त्वया मम पुरा शुभम् ॥ तथा श्रीरामकवचं मया ते विनिवेदितम् ॥३७॥ रामदास -
उवाच ॥ एवं शिष्य त्वया पृष्टं श्रीरामकवचं वरम् ॥ हनुमत्कवचं चापि तथा ते विनिवेदितम् ॥३८॥ वा-
युपुत्रस्य रामस्य कवचेत्र नरैर्भुवि ॥ विना सीता कवचेन पठनीयं न वै कदा ॥३९॥ आदौ पठित्वा
कवचं वायुपुत्रस्य धीमतः ॥ पठनीयं ततः सीताकवचं सौख्यदायकम् ॥४०॥ ततः श्रीरामकवचं पठ-
नीयं महत्तमम् ॥ एवमेव हि मंत्राश्च जपनीयास्त्रयः क्रमात् ॥४१॥ विष्णुदास उवाच ॥ गुरोऽहं
श्रोतुमिच्छामि सीतायाः कवचं शुभम् ॥ तथान्यान्यपि वैदेह्या स्तोत्रादिनि वदस्वयत् ॥४२॥ सीताया-
स्तोषदं भूम्यां तत्सर्वं विस्तरेण च ॥ श्री महादेव उवाच ॥ इति तद्वचनं श्रुत्वा रामदासोऽब्रवीद्वचः
॥४३॥ १०१ ॥ इति श्रीशतकोटि रामचरितांतर्गत श्रीमदानंदरामायणे वाल्मीकिये मनोहरकां-
डे कवच द्वय वर्णनं नाम त्रयोदशः सर्गः ॥ शुभंभवंतु ॥ श्रीसीतारामचंद्रार्पणमस्तु ॥

अकोला

ता. ३०-७-५३

॥ श्रीगणेशायनमः ॥ श्रृणु शिष्य प्रवक्ष्यामि सीतायाः कवचं शुभम् ॥ पुरा प्रोक्तं सुतीक्ष्णाय यद्रम्यं कुंभ-
जन्मना ॥१॥ एकदा कुंभजन्मानं सुतीक्ष्णः प्राह वै मुनिः ॥ रहः स्थितं गुरुं दृष्ट्वा प्रणम्य भक्तिपूर्वकः ॥२॥
सुतीक्ष्ण उवाच ॥ गुरोऽहं श्रोतुमिच्छामि सीतायाः प्रीतिदानि हि ॥ यानि स्तोत्राणि कर्माणि तानि त्वं व-
क्तुमर्हसि ॥३॥ अगस्तिरुवाच ॥ सम्यक्पृष्टं त्वया वत्स सावधान मनाः श्रृणु ॥ आदौ वक्ष्याम्यहं रम्यं सीता-
याः कवचं शुभम् ॥४॥ या सीताऽवनिसंभवाथ मिथिलापालेन संवर्द्धिता । पद्माक्षनृपते सुताऽनल गता या
मातुलिंगोद्भवा ॥ या रत्नेलयमागता जलनिधौ या वेदवारं गता- लंकां सा मृगलोचना शशिमुखी मां पातु राम-
प्रिया ॥५॥ अस्य श्रीसीताकवचस्तोत्रमंत्रस्य । अगस्ति ऋषिः । श्रीसीता देवता । अनुष्टुप् छंदः । रमेति बीजम्
जनकजेति शक्तिः । अवनिजेति कीलकम् । पद्माक्ष सुतेत्यस्त्रम् । मातुलिंगीति कवचम् । मूळकासुरघातिनि इ-
ति मंत्रः ॥ श्रीसीतारामचंद्र प्रीत्यर्थे जपे विनियोगः ॥ अथांगुलि न्यासः ॥ ॐ ह्रां सीतायै अंगुष्ठाभ्यां नमः
॥ ॐ ह्रीं रमायै तर्जनीभ्यां नमः ॥ ॐ ह्रुं जनकजायै मध्यमाभ्यां नमः ॥ ॐ ह्रैं अवनिजायै अनामिकाभ्यां न-
मः ॥ ॐ ह्रौं पद्माक्षसुतायै कनिष्ठिकाभ्यां नमः ॥ ॐ ह्रः मातुलिंग्यै करतल करपृष्ठाभ्यां नमः ॥ एवं हृद-
यादि न्यासः कार्यः ॥ अथ ध्यानम् ॥ सीतां कमलपत्राक्षिं विद्युत्पुंज समप्रभाम् ॥ द्विभुजां सुकुमारागिं पीत
कौशेयवाससी ॥१॥ सिंहासने रामचंद्र वामभागस्थिता वरम् ॥ नानालंकारसंयुक्तां कुंडलद्वयधारिणिम्
॥२॥ चूडाकंकण केयूर रसना नूपुरान्विताम् ॥ सीमंथे रविचंद्राभ्यां निढले तिलकेन च ॥३॥ मयूराभरणे-
नापि घ्राणेति शोभिता शुभाम् ॥४॥ हरिद्रां कज्जलां दिव्यां कुंकुमं कुसुमानि च ॥ बिभ्रंतिरभि द्रव्यं च सुगंध-

स्नेहमुत्तमम् ॥५॥ स्मितानना गौरवर्णा मंदारकुसुमं करे ॥ बिभ्रंतिमपरे हस्ते मातुलिंगमनुत्तमम्॥६॥
रम्यहासां च बिंबोष्ठि चंद्रवाहन लोचनाम् ॥ कलानाथसमानास्यां कलकंठ मनोरमाम् ॥७॥ मातुलिंगो-
द्भवां देविं पद्माक्षदुहितांऽबुजाम् ॥ मैथिलिं रामदयितां दासिभिः परिजीविताम् ॥८॥ एवं ध्यात्वा जनक-
जां हेमकुंभपयोधराम् ॥ सीतायाः कवचं दिव्यं पठनीयं शुभावहः ॥९॥ श्रीसीताः पूर्वतः पातु दक्षिणेऽ
वतु जानकीः॥ प्रतीच्यां पातु वैदेहिः पातूदिच्यां च मैथिलिः ॥१०॥ अधः पातु मातुलिंगिः अूर्ध्वं पद्मा-
क्षजाऽवतु॥ मध्येऽवनिसुताःपातु सर्वतः पातु मां रमा ॥११॥ स्मितानना शिरःपातु पातु भालं नृपा-
त्मजा ॥ अवतु श्री भ्रुवोर्मध्ये मृगाक्षि नयनेऽवतु ॥१२॥ कपोले कर्णमूले च पातु श्रीरामवल्लभा ॥ ना-
साग्रं सात्विकिः पातु पातु वक्त्रं तु राजसी ॥१३॥ तामसी पातु मद्वाणिं पातु जिव्हां पतिव्रता॥ दंता-
न्पातु महामाया चुबुकं कनकप्रभा ॥१४॥ पातु कंठं सौम्यरूपा स्कंधौ पातु सुरार्चिता॥ भुजौ पातु
वरारोहा करौ कंकणमंडिता ॥१५॥ नरवान्रक्तनरबाः पातु कुक्षौ पातु लघूदरा॥ वक्षं पातु रामपत्नी
पार्श्वे रावणमोहिनिः ॥१६॥ पृष्ठिदेशे वन्हिगुप्ताऽवतु मां सर्वदैव हि ॥ दिव्यप्रभा पातु नाभिं कटिं रा-
क्षसमोहिनिः ॥१७॥ गुह्यं पातु रत्नगुप्ता लिंगं पातु हरिप्रिया ॥ ऊरु रक्षतु रंभोरू जानुनी प्रियभाषिणिः
॥१८॥ जंघे पातु सदा सुभ्रूः गुल्फौ चामरवीजिता ॥ पादौ लव सुता पातु पात्वंगानि कुशांबिका ॥१९॥
पादांगुलि सदा पातु मम नूपुरनिस्वना ॥ रोमाण्यवतु मे नित्यं पीतकौशेयवासिनिः ॥२०॥ रात्रौ पातु
कालरूपा दिने दानैक तत्परा ॥ सर्वकालेषु मां पातु मूळकासुरघातिनिः ॥२१॥ एवं सुतीक्ष्ण सीतायाः

कवचं ते मयेरितम् ॥ इदं प्रात समुत्थाय स्नात्वा नित्य पठेत्तु यः ॥ २२॥२७॥ जानकिं पूजयित्वा स सर्वान्कामानवाप्नुयात् ॥ धनार्थि प्राप्नुया द्रव्यं पुत्रार्थि पुत्रमाप्नुयात् ॥२८॥ स्त्री कामार्थि शुभ्रां नारिं सुखार्थि सुखमाप्नुयात् ॥ अष्टवारं जपनीयं सीतायाः कवचं सदा ॥२९॥ अष्टभूसुर सीतायै नरैः प्रि-त्यार्पयेत्सदा ॥ फलपुष्पादिकादिनि यानि तानि पृथग्पृथक् ॥३०॥ सीतायाः कवचं चेदं पुण्यदं पापनाशनम् ॥ये पठंति नरा भक्त्या ते धन्या मानवा भुवि ॥३१॥ पठंति रामकवचं सीतायाः कवचं विना ॥ तथा विना ल-क्ष्मणस्य कवचेन वृथा स्मृतम् ॥३२॥ तस्मात्सदा जपनीयं कवचानां चतुष्टयम् ॥ आदौ तु वायुपुत्रस्य लक्ष्मणस्य ततः परम् ॥३३॥ ततः पठेच्च सीतायाः श्रीरामस्य ततः परम् ॥ एवं सदा जपनीयं कवचा-नां चतुष्टयम् ॥३४॥ इति सीता कवचम् ॥ एवं सुतीक्ष्ण सीतायाः कवचं ते मयेरितम् ॥ अतः परं श्रृ-णुष्वान्यच्छीतायाः स्तोत्रमुत्तमम् ॥३५॥ यस्मिन्नष्टोत्तरशतं सीतानामानि संति हि ॥ अष्टोत्तरशतं सी-तानाम्ना स्तोत्रमनुत्तमम् ॥३६॥ ये पठंति नरास्त्वत्रस्तेषां च सफलो भवः ॥ ते धन्या मानवा लोके ते वैकुंठं व्रजंति हि ॥३७॥ ॐ अस्य श्रीसीतानामाष्टोत्तरशतमंत्रस्य ॥ अगस्ति ऋषिः ॥ अनुष्टुप् छंदः रमेति बीजम् ॥ मातुलिंगेति शक्तिः पद्माक्षेति कीलकम् ॥ अवनिजेत्यस्त्रम् ॥ जनकजेति कवचम् ॥ मूलकासुरमर्दिनीति मंत्रः ॥ श्रीसीतारामचंद्र प्रीत्यर्थं सकल मनोरथसीद्ध्यर्थं जपे विनियोगः ॥ अथां-गुलिन्यासः ॥ ॐ सीतायै अंगुष्ठाभ्यां नमः ॥ ॐ रमायै तर्जनीभ्यां नमः ॥ ॐ मातुलिंगै मध्यमाभ्यां नमः ॥ ॐ पद्माक्षजायै अनामिकाभ्यांनमः ॥ ॐ अवनीजायै कनिष्ठिकाभ्यां नमः ॥ ॐ जनकजायै क-

रतल करपृष्ठाभ्यां नमः॥ अथ हृदयादि न्यासः॥ ॐ सी० हृदयायनमः॥ ॐ र० शिरसेस्वाहा॥ ॐ मातुलिं० शिखायै वषट्॥ ॐ पद्मा० कवचाय हुम्॥ ॐ अव० नेत्रत्रयायै वषट्॥ ॐ जन० अस्त्राय फट्॥ ॐ मूलका० दिग्बंधः॥ अथ ध्यानम्॥ वामांके रघुनायकस्य रुचिरे या संस्थिता शोभना - या विप्राधिप यान रम्यनयना या विप्रपालानना॥ विद्युत्पुंज विराजमान वसना भक्तार्ति संखंडना - श्रीमद्राघवपाद पद्म युगुलं न्यस्ते क्षणा साऽवतु॥३८॥ श्रीसीता जानकी देवि वैदेहि राघवप्रिया॥ रमाऽवनिसुता रामा राक्षसांत प्रकारिणि॥३९॥ रत्नगुप्ता मातुलिंगि मैथिली भक्ततोषदा॥ पद्माक्षजा कंजनेत्रा स्मितास्या नूपुरस्वना॥४०॥ वैकुंठनीलयामा श्री मुक्तिदा कामरूपिणि॥ नृपात्मजा हैमवर्णा मृदुलांगि सुभाषिणि॥४१॥ कुशांबिका दिव्यदा च लवमाता मनोहरा॥ हनुमद्वंदितपदा मुग्धा केयूरधारिणि॥४२॥ अशोकवनमध्यस्था रावणादिक मोहिनि॥ विमानसंस्थिता सुभ्रु सुकेशा रसनान्विता॥४३॥ रजोरूपा सत्वरूपा तामसी वन्हिवासिनि॥ हेममृगासक्तचित्ता वाल्मीकाश्रमवासिनि॥४४॥ पतिव्रता महामाया पीतकौशेयवासिनि॥ मृगनेत्रा च बिंबोष्ठि धनुर्विद्याविशारदा॥४५॥ सौम्यरूपा दशरथस्नुषा चामरवीजिता॥ सुमेधादुहिता दिव्यरूपा त्रैलोक्यपालनि॥४६॥ अन्नपूर्णा महालक्ष्मी धीर्लज्जा च सरस्वती॥ शांतिः पुष्टिः क्षमा गौरी प्रभाऽयोध्यानिवासिनि॥४७॥ वसंत सीतला गौरी स्नानं संतुष्टमानसा॥ रमा नाम भद्रसंस्था हेमकुंभ पयोधरा॥४८॥ सुरार्चिता धृतिः कांतिः स्मृतिर्मेधा विभावरि॥ लघूदरा वरारोहा हेमकंकणमंडिता॥४९॥ द्विजपत्न्यर्पित निजभूषा राघवतोषिणि॥ श्रीरामसेवनरता रत्नताटंकधारिणि॥५०॥ रामवामांगसंस्था च

रामचंद्रैक रंजिनि ॥ सरयूजलसंक्रीडाकारिणि राममोहिनि ॥ ५१ ॥ सुवर्णतुलिता पुण्या पुण्यकीर्तिः कला-
वति ॥ कलकंठा कंबुकंठा रंभोरू गजगामिनि ॥ ५२ ॥ रामार्पितमना रामवंदिता रामवल्लभा ॥ श्रीरामपद
चिन्हांका रामरामेति भाषिणि ॥ ५३ ॥ रामपर्यंकशयना रामांघ्रिक्षालिनी वरा ॥ कामधेन्वन्नसंतुष्टा मातु
लिंगकरधृता ॥ ५४ ॥ दिव्यस्यंदनसंस्था श्री मूलकासुरमर्दिनि ॥ एवमष्टोत्तरशतं सीता नाम्नां सुपु-
ण्यदम् ॥ ५५ ॥ ये पठंति नरा भूम्यां ते धन्याः स्वर्गगामिनः ॥ अष्टोत्तरशतं नाम्ना सीतायाः स्तोत्रमुत्तम-
म् ॥ ५६ ॥ जपनीयं प्रयत्नेन सर्वदा भक्तिपूर्वकम् ॥ संति स्तोत्राण्यनेकानि पुण्यदानि महंति च ॥ ५७ ॥
नानेन सदृशानिह तानि सर्वाणि भूसुरा ॥ स्तोत्राणामुत्तमं चेदं भुक्तिमुक्तिप्रदं नृणाम् ॥ ५८ ॥ एवं सु-
तीक्ष्ण ते प्रोक्तमष्टोत्तरशतं शुभम् ॥ सीतानाम्नां पुण्यदं च श्रवणान्मंगलप्रदम् ॥ ५९ ॥ नरैः प्रातः समु-
त्थाय पठितव्यं प्रयत्नतः ॥ सीतापूजनकालेऽपि सर्व वांछितदायकम् ॥ ६० ॥ अन्यच्छीता तोषदा-
नि व्रतादिनि महंति च ॥ यानि संसद्यते शिष्य तानि सम्यक् वदाम्यहम् ॥ ६१ ॥ नारिभिस्तु सदा
कार्यं सीतायास्तुष्टि हेतवे ॥ वसंत सीतला गौरीस्नानं तीर्थे तु तत्कृते ॥ ६२ ॥ यत्र सीताकृतं तीर्थं
रामतीर्थं न वर्तते ॥ तदा लक्ष्म्याश्च गौर्याश्च सरस्वत्यादि योषिताम् ॥ ६३ ॥ तीर्थेषु च सदा कार्यं त-
दभावे नदीषु च ॥ यत्र यत्र रामतीर्थं तद्ग्रामे जानकी कृतम् ॥ ६४ ॥ ज्ञेयं तीर्थं तु सर्वत्र नैक ज्ञेयं तु राघवः
वसंत सीतलागौरी स्नानं सौभाग्यवर्द्धनम् ॥ ६५ ॥ न कुर्वंत्यत्रया नार्य स्नानं ता सप्तजन्मसु ॥ भवंति
विधवास्तस्मात्सदा स्नानं समाचरेत् ॥ ६६ ॥ सुतीक्ष्ण उवाच ॥ भो गुरो सीतलागौरी स्नानस्योद्यापनं

कथ ॥ स्त्रिभिःकार्यं वदस्वाद्य सविस्तारं शुभावहम् ॥६७॥ अगस्तिरुवाच ॥ सम्यक्पृष्टं त्वया शिष्य सावधान मनाः श्रृणु ॥ चैत्रमासे सिते स्त्रिभिस्तृतियायाः सदात्र वै ॥ ६८॥ कार्यं तु सीतलागौरीस्नानं त्रिंशद्दिनानि हि ॥ वैशाखस्य सिते पक्षे द्वितियायामुपोस्य च ॥६९॥ स्त्रिभिश्च विधिना कार्यं निशायामधिवासनम् ॥ पूर्ववच्च प्रकर्तव्यं मंडपादिकमुत्तमम् ॥७०॥ तत्र रमा नाम भद्रमष्टोत्तर सहस्त्रकम् ॥ अथवाष्टोत्तर शतं सूक्ष्मान्यन्यानि वा क्रमात् ॥७१॥ स्थापनीयं मध्यदेशे तन्मध्ये पंकजोपरि ॥ धान्यराश्यौ तोयपूर्णः स्थापनीयो घटः शुभः ॥७२॥ तन्मुखे ताम्रपात्रं च स्थापनीयं तु विस्तृतम् ॥ आच्छाद्य पात्र कौशेय वस्त्रेण तन्मनोरमम् ॥७३॥ तास्मिन्सीतारामयोश्च द्वे मूर्ति रुक्मनिर्मिते ॥ स्थापनीयं पूजनीये षोडशैरुपचारकैः ॥७४॥ नवमाशात्मको राम सीताऽष्टमाश निर्मिता म् ॥ निजशक्त्याथवा कार्ये द्वे मूर्ति रजतस्य वा ॥७५॥ गंधपुष्प धूप दीप नैवेद्य वसनादिकम् ॥ सर्वं पृथगष्टविधं जानक्यै तु निवदयेत् ॥७६॥ ततः स्त्रीणां वायनानि वस्त्रालंकार वस्तुभिः ॥ कुंकुमादि पूरितानि देयानि विविधानि च ॥७७॥ देयानि कास्यपात्राणि पक्वान्नपूरितानि च ॥ त्रयत्रिंश तथावाष्टौ स्त्रिभिर्देयानि भक्तितः ॥७८॥ यत्रस्त्रिभिश्चयुग्मानि भोजयच्च प्रयत्नतः ॥ तथावाष्टौ यथाशक्त्या भोजनीयानि षड्रसैः ॥७९॥ रात्रौ जागरणं कार्यं गीतवाद्यादि मंगलैः ॥ प्रातःकाले तृतियायां स्नात्वा संपूज्य जानकिम् ॥८०॥ होमश्चापि प्रकर्तव्यः सीतामंत्रेण यत्नतः ॥ तिलाज्यैः पायसैश्चापि सहस्त्रान्यष्ट भूसुरैः ॥८१॥ मुद्गहीनं नवान्नं च ज्ञेयमष्टान्न मुत्तमम् ॥ तत्सीता तोषदं ज्ञेयं तेन वा जुहुयात्सुरवम् ॥८२॥ ततः स्वयं सुहृन्मंत्रैर्भोक्तव्यं च यथा

सुखम् ॥ एवमुद्यापन विधिं तवाग्रे विनिवेदितः ॥८३॥ रामदास उवाच ॥ अगस्तिना सुतीक्ष्णाय य-
दिदं कथितं पुरा ॥ तत्सर्वं च त्वया पृष्टं मया तेऽद्य निवेदितम् ॥८४॥ विष्णुदास उवाच ॥ कथं रमा ना-
म भद्रं कार्यं स्त्रिभिः प्रपूजने ॥ तत्सर्वं विस्तरेणाद्य कथयस्व ममाग्रतः ॥८५॥ रामदास उवाच ॥
यथा प्रोक्तं मया शिष्य रामतोभद्रमुत्तमम् ॥ कार्यं रमा नाम भद्रं तथैव सकलं शुभम् ॥८६॥ किंचिद्वि-
शेषस्तत्रास्ति तत्तेऽद्य कथयाम्यहम् ॥ लिंगलेखेषु कर्तव्या वापिकाश्चैव पूर्ववत् ॥८७॥ मुद्रायामे-
व किंचिच्च विशेषास्ति श्रृणुष्व च ॥ नाकारश्च मकारश्च पूर्ववद्रचयेदधः ॥८८॥ ऊर्ध्वं रमेत्यक्षरे द्वे र-
चनीयेतु पूर्ववत् ॥ एवं कृत्वा रमानाम श्वेतवर्णं निरिक्षयेत् ॥८९॥ एतद्रमानामभद्रं देविनां पूजनादिषु ॥
नानाकर्मसु सर्वेषु कर्तव्यं च प्रयत्नतः ॥९०॥ विना रमानामभद्राधानि देव्याः कृतानि हि ॥ पूजनादिनि
कर्माणि तानि ज्ञेयानि मानवैः ॥९१॥ अत्कृतान्यत्र तस्माधि कर्तव्यं यत्नतस्त्विदम् ॥ कृता रमा नाम भद्रे
या पूजा मानवैर्भुवि ॥९२॥ सा देव्यै तोषदा ज्ञेयो तस्मात्कार्या प्रयत्नतः ॥ पूर्वोक्तानि दैवतानि तान्ये-
वात्र विचिंतयेत् ॥९३॥ आवाहयेच्च मुद्राया जानकिं रघुनंदनम् ॥ अन्यच्छ्रुणुष्व भो शिष्य सीताराम
प्रपूजने ॥९४॥ रमारामतो भद्रं च कार्यं वा मानवैर्भुवि ॥ तच्चापि पूर्ववत्सर्वं कर्तव्यं मानवैर्धिया ॥९५॥
इदं सीतारामयोश्च पूजनार्थं प्रकल्पयेत् ॥ रामनामाद्रमानामादिदं भद्रं महत्तमम् ॥९६॥ यत्र द्वयो-
र्नामिनी च रमारामेति चोत्तमे ॥ रमारामतोभद्रं च तस्माच्छ्रेष्ठं प्रकारयेत् ॥९७॥ रामासनोपमान्ये-
व दैवतान्यत्र चिंतयेत् ॥ एवं शिष्य त्वया पृष्टं यद्य तत्तन्मयोदितम् ॥९८॥ का तेऽन्यास्ति स्पृहा श्रोतुं

वद तत्प्रवदाम्यहम् ॥ विष्णुदास उवाच ॥ कवचं लक्ष्मणस्यापि पठनीयमिति स्मृतम् ॥९९॥ पुरा गुरो त्वया त्वच्च मां वदस्व सविस्तरम् ॥ भरतस्यापि कवचं शत्रुघ्नस्य तथा वद ॥१००॥ रामदास उवाच ॥ एवमेव सुतीक्ष्णेन पृष्टं च कुंभजन्मने ॥ पुरा तद्विस्तरेणाद्य तवाग्रे कथयाम्यहम् ॥१॥ सुतीक्ष्ण उवाच ॥ गुरो त्वया पुरा प्रोक्तं कवचं लक्ष्मणस्य च ॥ पठनीयं जनैश्चेति तन्मामद्य प्रकाशय २ भरतस्यापि कवचं शत्रुघ्नस्य तथा वद ॥ अगस्तिरुवाच ॥ आदौ सौमित्रिकवचं कथ्यतेऽद्य मया शुभम् ॥ १०३ ॥ इति श्रीशतकोटि रामचरितांतर्गत श्रीमदानंदरामायणे वाल्मीकिये मनोहरकांडे सीताकवचादि निरुपणं नाम चतुर्दशः सर्गः ॥ शुभं भवतु ॥ श्रीसीतारामचंद्रार्पणमस्तु ॥

आकोला ता- ४-८-५३

॥श्रीगणेशायनमः॥ अगस्तिरुवाच ॥सौमित्रिः रघुनायकस्य चरणाद्वंदे क्षणं श्यामलं- बिभ्रंतं स्वकरेण
रामशिरसिं छत्रं विचित्रं वरम् ॥ बिभ्रंतं रघुनायकस्य सुमहत्कोंदंड बाणासने - तं वंदे कमलेक्षणं जनकजा
वाक्ये सदा तत्परम् ॥१॥ ॐ अस्य श्रीलक्ष्मणकवचस्तोत्र मंत्रस्य अगस्ति ऋषिः॥ अनुष्टुप् छंदः ॥ श्री-
लक्ष्मणो देवता ॥ शेष इति बिजम् ॥ सुमित्रा नंदनेति शक्तिः॥ रामानुजेति कीलकम् ॥ रामदास इत्यस्त्रम् ॥
रघुवंशज इति कवचम् ॥ सौमित्रिरिति मंत्रः॥ श्रीलक्ष्मणप्रीत्यर्थं सकलमनोवांच्छित सिध्द्यर्थं जपे विनियो-
गः॥ अथ अंगुलिन्यासः ॥ ॐ लक्ष्मणाय अंगुष्ठाभ्यां नमः ॥ ॐ शेषाय तर्जनीभ्यां नमः॥ ॐ सुमित्रानंद-
नाय मध्यमाभ्यां नमः॥ ॐ रामानुजाय अनामिकाभ्यां नमः॥ ॐ रामदासाय कनिष्ठिकाभ्यां नमः॥ ॐ रघु-
वंशजाय करतल करपृष्ठाभ्यां नमः ॥ इति अंगुलि न्यासः॥ अथ हृदयादि न्यासः॥ ॐ लक्ष्मणाय हृदयायन-
मः ॥ ॐ शेषाय शिरसे स्वाहा ॥ ॐ सुमित्रात्मजाय शिखायै वषट् ॥ ॐ रामानुजाय कवचायहुम् ॥ ॐ रामदा-
साय नेत्रत्रयायै वषट् ॥ ॐ रघुवंशजाय अस्त्राय फट् ॥ ॐ सौमित्राय इति दिग्बंधः॥ अथ ध्यानं ॥ रामपृ-
ष्ठि स्थिरं रम्यं कुंडलद्वयधारिणम् ॥ नीलोत्पलदलश्यामं रत्नकंकणमंडितम् ॥ २॥ रामस्य मस्तके दिव्यं
बिभ्रतं छत्रमुत्तमम् ॥वर पीतांबरधरं मुकुटेनातिशोभितम् ॥३॥ तूणिरे कार्मुके चापि बिभ्रंतं च स्मितान-
नम् ॥ रत्नमालाधरं दिव्यं पुष्पमाला विराजितम् ॥४॥ एवं ध्यात्वा लक्ष्मणं च राघव न्यस्तलोचनम् ॥ कव-
चं जपनीयं हि ततो भक्त्यात्र मानवैः ॥५॥ ॐ लक्ष्मणः पातु पूर्वे दक्षिणे राघवानुजः॥ प्रतीच्यां पातु सौमि-
त्रिः पातूदिच्यां रघूत्तमः ॥६॥ अधः पातु महावीररूर्ध्वं पांतु नृपात्मजः॥ मद्ये पातु रामदासः सर्वतः सत्यपा-

लकः ॥७॥स्मिताननो शिरः पातु भालं पातूर्मिलाधवः ॥ भ्रुवोर्मध्ये धनुर्धारि सुमित्रानंदनोऽक्षणि ॥८॥ कपोले राममंत्री च सर्वदा पातु वै मम ॥ कर्णमूले सदा पातु कबंधभुजखंडनः ॥९॥ नासाग्रं मे सदा पातु सुमित्राऽऽनंदवर्धनः ॥ रामन्यस्तेक्षणः पातु सदा मेऽत्र मुखं भुवि ॥१०॥ सीतावाक्यकरः पातु ममवाणिं सदात्र हि ॥ सौम्यरूपो पातु जिव्हामनंतः पातु मे द्विजान् ॥११॥ चूबुकं पातु रक्षोघ्नः कंठं पात्वसुरार्दनः ॥ स्कंधौ पातु जिता रातिर्भुजौ पंकजलोचनः ॥१२॥ करौ कंकणधारि च नखान्रक्तनखोऽवतु ॥ कुक्षिं पातु विनिद्रो मे वक्षः पातु जितेंद्रियः ॥१३॥ पार्श्वे राघवपृष्ठिस्थः पृष्ठदेशं मनोरमः ॥ नाभिं गंभिरनाभिस्तु कटिं च रुक्ममेखलः ॥१४॥ गुह्यं पातु सहस्रास्य पातु लिंगं हरिप्रियः ॥ ऊरू पातु विष्णुतल्प्यः सुमुखोऽवतु जानुनि ॥१५॥ नागेंद्रः पातु मे जंघे गुल्फौ नूपुरवान्मम ॥ पादावंगदतातो व्यात् पात्वंगानि सुलोचनः ॥१६॥ चित्रकेतुपिता पातु ममपादांगुलिः सदा ॥ रोमाणि मे सदा पातु रविवंशसमुद्भवः ॥१७॥ दशरथसुतः पातु निशायां मम सादरम् ॥ भूगोलधारि मां पातु दिवसे दिवसे सदा ॥१८॥ सर्वकालेषु मामिंद्रजिद्धताऽवतु सर्वदा ॥ एवं सौमित्रिकवचं सुतीक्ष्ण कथितं मया ॥१९॥ इदं प्रातः समुत्थाय ये पठंत्यत्र मानवः ॥ ते धन्या मानवा लोके तेषांच सफलो भव ॥२०॥ सौमित्रेः कवचस्यास्य पठनान्निश्चयेन हि ॥ पुत्रार्थि लभते पुत्रान्धनार्थि धनमाप्नुयात् ॥२१॥ पत्निकामी लभेत्पत्निः गोधनार्थि तु गोधने ॥ धान्यार्थि प्राप्नुयाद्धान्यं राज्यार्थि राज्यमाप्नुयात् ॥२२॥ पठितं रामकवचं सौमित्रि कवचं विना ॥ घृतेन हीन नैवेद्य स्तेन दत्तो न संशयः २३ केवलं रामकवचं पठितं मानवैर्यदि ॥ तत्पाठे न संतुष्टा न भवेद्रघुनंदनः ॥२४॥ अतः प्रयत्नतश्चेदं सौमित्रि-

कवचं नरैः ॥ पठनीयं सर्वदैव सर्व वांच्छितदायकम् ॥२५॥ इतिलक्ष्मणकवचम् ॥ अतःपरं भरतस्य कवचं
ते वदाम्यहम् ॥ सर्व पापहरं पुण्यं श्रीरामभक्तिदम् ॥२६॥ कैकेयीतनयं सदा रघुवरं न्यस्तेक्षणं श्यामलं-
सप्तद्वीपपते विदेहतनयाकांतस्य वाक्ये रतम् ॥ श्रीसीताधवसव्यपार्श्व निकटे स्थित्वा वरं चामरं- धृत्वा द-
क्षिणसत्करेण भरतं तं वीजयंतं भजे ॥२७॥ ॐ अस्य श्रीभरतकवच मंत्रस्य॥ अगस्ति ऋषिः॥ श्रीभर-
तो देवता ॥अनुष्टुप् छंदः॥ शंख इति बीजम् ॥ कैकेयीनंदन इति शक्तिः ॥ भरतखंडेश्वर इति कीलकम् ॥ रामा-
नुज इति अस्त्रम् ॥सप्तद्वीपेश्वरदास इति कवचम् ॥ रामांशज इति मंत्रः ॥ श्रीभरत प्रीत्यर्थे सकलकामना
पूर्त्यर्थे जपे विनियोगः ॥अथांगुलि न्यासः ॥ ॐ भरताय अंगुष्ठाभ्यां नमः ॥ ॐ शंखाय तर्जनीभ्यां नमः
ॐ कैकेयीनंदनाय मध्यमाभ्यां नमः ॥ ॐ भरतखंडेश्वराय अनामिकाभ्यां नमः ॥ ॐ रामानुजाय कनि-
ष्ठिकाभ्यां नमः ॥ ॐ सप्तद्वीपेश्वरदासाय करतलकरपृष्ठाभ्यां नमः ॥ एवं हृदयादि न्यासः ॥ ॐ भर०
हृदयाय नमः ॥ ॐ शंखा० शिरसे स्वाहा ॥ ॐ कैकेयीनं० शिखायै वषट् ॥ ॐ भ० खं० कवचाय हुम् ॥ ॐ
रामा० नेत्रत्रयायै वषट् ॥ ॐ स० द्वी० दा० अस्त्रायफट् ॥ ॐ रामांशजाय चेति दिग्बंधः ॥ अथ ध्यानम् ॥
रामचंद्र सव्यपार्श्वे स्थितं कैकेयिजं सुतम् ॥ रामाय चामरेणैव वीजयंतं मनोरमम् ॥२८॥ रत्नकुंडल केयू
र कंकणादि सुभूषितम् ॥ पीतांबर परिधानं वनमाला विराजितम् ॥२९॥ मांडवी धौतचरणं रसना नूपु-
रान्वितम् ॥ नीलोत्पल दलश्यामं द्विजराज समाननम् ॥३०॥ आजानुबाहु भरतखंडस्य प्रतिपालकम्
॥ रामानुजं स्मितास्यं च शत्रुघ्नपदवंदितम् ॥३१॥ रामन्यस्तेक्षणं सौम्यं विद्युत्पुंज समप्रभम् ॥ रामभक्तं

महावीरं वंदे तं भरतं शुभम् ॥ ३२॥ एवं ध्यात्वा तु भरतं रामपादे क्षणं हृदि ॥ कवचं पठनीयं हि भरत-
स्येदमुत्तमम् ॥३३॥ ॐ पूर्वे भरतः पातु दक्षिणे कैकयीसुतः ॥ नृपात्मजः प्रतीच्यां हि पातूदिच्यां र-
घूत्तमः ॥३४॥ अधः पातु श्यामलांगश्चोर्ध्वं दशरथात्मजः ॥ मध्ये भरतवर्षेशः सर्वतः सूर्यवंशजः ॥३५॥
शिरस्तक्षपिता पातु भालं पातु हरिप्रियः ॥ भ्रुवोर्मध्ये जनकजावाक्यैकतत्परोऽवतु ॥३६॥ पातु जनक-
जामाता मम नेत्रे सदात्र हि ॥ कपोले मांडवीकांतः कर्णमूले स्मिताननः ॥३७॥ नासाग्रं मे सदा पातु कै-
केयी तोषवर्धनः ॥ उदारांगो मुखं पातु वाणिं पातु जटाधरः ॥३८॥ पातु पुष्करतातो मे जिव्हान् दंतान् प्र-
भामयः ॥ चूबुकं वल्कलधरः कंठं पातु वराननः ॥३९॥ स्कंधौ पातु जितारातिर्भुजौ शत्रुघ्नवंदितः ॥ करौ
कवचधारी च नखान्खड्गधरोऽवतु ॥४०॥ कुक्षी रामानुजः पातु वक्षः श्रीरामवल्लभः ॥ पार्श्वे राघवपार्श्व-
स्थः पातु पृष्ठिं सुभाषणः ॥४१॥ जठरं च धनुर्धारि नाभिं शरकरोऽवतु ॥ कटिं पद्मेक्षणः पातु गुह्ये रामैक-
मानसः ॥४२॥ राममित्रः पातु लिंगं ऊरू श्रीरामसेवकः ॥ नंद्रिग्रामास्थितः पातु जानुनि मम सर्वदा ॥४३॥
श्रीरामपादुकाधारि पातु जंघे सदा मम ॥ गुल्फौ श्रीरामबंधुश्च पादौ पातु सुरार्चितः ॥४४॥ रामाज्ञापालकः पा-
तु ममांगान्यत्र सर्वदा ॥ मम पादांगुलिः पातु रघुवंशसुभूषणः ॥४५॥ रोमाणि पातु मे रम्यः पातु रात्रौ सु-
धिर्मम ॥ तूणिरधारि दिवसे दिवसे पातु मां सदा ॥४६॥ सर्वकालेषु मां पातु पांचजन्यः सदा भुवि ॥ एवं
श्रीभरतस्येदं सुतीक्ष्ण कवचं शुभम् ॥४७॥ मया प्रोक्तं तवाग्रे हि महामंगलकारकम् ॥ स्तोत्राणामुत्तमं
स्तोत्रमिदं ज्ञेयं सुपुण्यदम् ॥ पठनीयं सदा भक्त्या रामचंद्रस्य हर्षदम् ॥ पठित्वा भरतस्येदं कवचं।—

रघुनंदनः ॥ ४९॥ यथायातं परं तोषं तथा स्वकवचेन न ॥ तस्मादेतत्सदा जाप्यं कवचानामनुत्तमम्
॥५०॥ अस्यात्र पठनात्मर्त्यः सर्वान्कामानवाप्नुयात् ॥ विद्याकामो लभेद्विद्या पुत्रकामो लभेत्सुतम्
॥५१॥ पत्निकामो लभेत्पत्नि धनार्थि धनमाप्नुयात् ॥ यद्यन्मनोऽभिलषितं तत्तत्कवचपाठतः ॥५२॥
लभ्यते मानवैरत्र सत्यं सत्यं वदाम्यहम् ॥ तस्मात्सदा जपनीयं रामोपासक मानवैः ॥५३॥ इति भरत
कवचम् ॥ अथ शत्रुघ्नकवचं सुतीक्ष्ण श्रृणु सादर ॥ सर्वकामप्रदं रम्यं नरा सद्भक्तिवर्धनम् ॥५४॥
शत्रुघ्नं धृतकार्मुकं धृत महत्तूणीर बाणोत्तमं - पार्श्वे श्रीरघुनंदनस्य विनयाद्वामे स्थितं सुंदरम् ॥ रामं स्वी-
यकरेण ताल दलजं धृत्वातिचित्रं वरं - सूर्याभ व्यजनं सभास्थित महं तं वीजयंतं भजे ॥५५॥ ॐ अस्य
श्री शत्रुघ्न कवचस्तोत्र मंत्रस्य अगस्ति ऋषिः ॥ श्रीशत्रुघ्नो देवता अनुष्टुप् छंदः ॥ सुदर्शन इति बिजम्
॥ कैकयीनंदन इति शक्तिः ॥ श्रीभरतानुज इति कीलकम् ॥ भरतमंत्रि इत्यस्त्रम् ॥ श्रीरामदास इति
कवचम् ॥ लक्ष्मणांशज इति मंत्रः ॥ श्रीशत्रुघ्नप्रीत्यर्थं सकल मनेप्सित कामना सीद्ध्यर्थं जपे विनि-
योगः ॥ अथांगुलि न्यासः ॥ ॐ शत्रुघ्नाय अंगुष्ठाभ्यां नमः ॥ ॐ सुदर्शनाय तर्जनीभ्यां नमः ॥ ॐ कैक-
यीनंदनाय मध्यमाभ्यां नमः ॥ ॐ भरतानुजाय अनामिकाभ्यां नमः ॥ ॐ भरतमंत्रिणे कनिष्ठिकाभ्यां
नमः ॥ ॐ श्रीरामदासाय करतल करपृष्ठाभ्यां नमः ॥ इत्यंगुलिन्यासः ॥ एवं हृदयादि न्यासः ॥ ॐ श०
हृदयायनमः ॥ ॐ सु० शिरसेस्वाहा ॥ ॐ कै० नं० शिखायै वषट् ॥ ॐ भरतानु० कवचायहुम् ॥ ॐ भर-
तमंत्रिणे नेत्रत्रयायै वषट् ॥ ॐ रा० अस्त्राय फट् ॥ ॐ लक्ष्मणांशजेति दिग्बंधः ॥ अथ ध्यानम् ॥

रामस्य संस्थितं वामपार्श्वे विनयपूर्वकम् ॥ कैकेयीनंदनं सौम्यं मुकुटेनाति रंजितम् ॥५६॥ रत्नकंकण-
केयूर वनमाला विराजितम् ॥ रसनाकुंडलधरं रत्नहार सुनूपुरम् ॥५७॥ वीजयंतं व्यजनेन जानकीकां-
तमादरात् ॥ रामन्यस्तेक्षणं वीरं कैकेयीतोषवर्धनम् ॥५८॥ द्विभुजं कंजनयनं दिव्य पीतांबरान्वितम्
सुभुजं सुंदरं मेघश्यामलं सुंदराननम् ॥५९॥ रामवाक्ये दत्त कर्णं रक्षोघ्नं खड्गधारिणम् धनुर्बाणधरं
श्रेष्ठं धृततूणिरमुत्तमम् ॥६०॥ सभायां सस्थितं रम्यं कस्तुरी तिलकांकितम् ॥ मुकुटस्थावतंसेन शो-
भितं च स्मिताननम् ॥६१॥ रविवंशोद्भवं दिव्यरूपं दशरथात्मजम् ॥ मधुरावासिनं देवं लवणासु-
रमर्दनम् ॥६२॥ एवं ध्यात्वा तु शत्रुघ्नं रामपादेक्षणं हृदि ॥ पठनीयं वरं चेदं कवचं तस्य पावनम्
॥६३॥ ॐ पूर्वेऽवतु शत्रुघ्नः पातु याम्ये सुदर्शनः ॥ कैकेयीनंदनः पातु प्रतीच्यां सर्वदा मम ॥६४॥ पातू-
दिच्यां रामबंधुः पात्वधो भरतानुजः ॥ रविवंशोद्भवश्चोर्ध्वं मध्ये दशरथात्मजः ॥६५॥ सर्वतः पातु मामत्र
कैकेयीतोषवर्धनः ॥ श्यामलांगः शिरं पातु भालं श्रीलक्ष्मणाग्रजः ॥६६॥ भ्रुवोर्मध्ये सदा पातु सुमुखोत्राव-
नीतले ॥ श्रुतिकीर्तिपतिर्नेत्रे कपोले पातु राघवः ॥६७॥ कर्णौ कुंडलकर्णोन्यात् नासाग्रं नृपवंशजः ॥
मुखं मम युवा पातु पातु वाणिं स्फुटाक्षरः ॥६८॥ जिव्हां सुबाहुतातोन्याद्युपकेतुपिता द्विजान् ॥ चूबुकं
रम्यचूबुकः कंठं पातु सुभाषणः ॥६९॥ स्कंधौ पातु महातेजः भुजौ राघववाक्यकृत् ॥ करौ मे कंकणधरः
पातु खड्गि नरवान्मम ॥७०॥ कुक्षी रामप्रियः पातु पातु वक्षो रघूत्तमः ॥ पार्श्वे सुरार्चितः पातु पातु पृ-
ष्ठिं वराननः ॥७१॥ जठरं पातु रक्षोघ्नः पातु नाभिं सुलोचनः ॥ कटिं भरतमंत्री मे गुह्यं श्रीरामसेवकः ॥

॥७२॥ रामार्पितमनाः पातु लिंगमूरू स्मिताननः ॥ कोदंडपाणिः पात्वत्र जानुनि मम सर्वदा ॥७३॥ राम-
मित्रः पातु जंघे गुल्फौ पातु सुनूपुरः ॥ पादौ नृपतिपूज्योव्याच्छ्रीमान्यादांगुलिर्मम ॥७४॥ पात्वंगानि
समस्तानि ह्युदारांगः सदा मम ॥ रोमाणि रमणीयोव्याद्रात्रौ पातु सुधार्मिकः ॥७५॥ दिवसे सत्यसंधोव्या-
न्याद्भोजने शरसत्करः ॥ गमने कमलकंठोव्यात्सर्वदा लवणांतकः ॥७६॥ एवं शत्रुघ्नकवचं मया ते
समुदीरितम् ॥ ये पठंति नरास्त्वत्ते सर्वदा सौख्यभागिनः ॥ ७७॥ शत्रुघ्नस्य वरं चेदं कवचं मंगलप्रदम् ॥
पठनीयं नरैर्भक्त्या पुत्रपौत्रप्रवर्धनम् ॥७८॥ अस्य स्तोत्रस्य पाठेन यं यं कामं नरोऽर्थयेत् ॥ तं तं लभे-
न्निश्चयेन सत्यमेतद्वचोमम ॥७९॥ पुत्रार्थी प्राप्नुयात्पुत्रं धनार्थी धनमाप्नुयात् ॥ इच्छाकामं तु कामा-
र्थी प्राप्नुयात्पठनादिना ॥८०॥ कवचस्यास्य भूम्यां हि शत्रुघ्नस्य विनिश्चयात् ॥ तस्मादेतत्सदा भक्त्या
पठनीयं नरैः शुभम् ॥८१॥ आदौ नरैर्मारुतेश्च पठित्वा कवचं शुभम् ॥ ततः शत्रुघ्नकवचं पठनीयमिदं
शुभम् ॥८२॥ पठनीयं भरतस्य कवचं परमं ततः ॥ ततः सौमित्रिकवचं पठनीयं नरैः सदा ॥८३॥
पठनीयं ततः सीताकवचं भाग्यवर्धनम् ॥ ततः श्रीरामचंद्रस्य कवचं सर्वदोत्तमम् ॥८४॥ पठनीयं नरै-
र्भक्त्या सर्ववांछितदायकम् ॥ एवं षट्कवचान्यत्र पठनीयानि सर्वदा ॥८५॥ पठनीयं षट्कवचानां
श्रेष्ठं मोक्षैकसाधनम् ॥ ज्ञात्वात्र मानवैर्भक्त्या कार्यं च पठनं सदा ॥८६॥ अशक्तेनात्र चत्वारि पठनी-
यानि सादरम् ॥ हनुमंतश्च सौमित्रेः सीताया राघवस्य च ॥८७॥ इमानि पठनीयानि चत्वारि क-
वचानि हि ॥ चतुर्वर्णां कवचानां पठने मानवाय च ॥८८॥ न यद्यत्रावकाशश्चेत्तदा त्रीणि पठेन्न-

रैः ॥ मारुतेश्चाथ सीतायास्तथा श्री राघवस्य च ॥ ८९॥ त्रीणामपि कवचानामवकाशो यदा नहि॥
पठनार्थं मानवाय तदाद्वे कवचे स्मृते ॥९०॥ मारुतेश्चाथ रामस्य सीताया राघवस्य वा ॥ नैकमेव
पठेच्चात्र श्रीरामकवचं शुभम् ॥९१॥ अवकाशे कवचानां षट्कमेव सदा नरैः ॥ पठनीयं क्रमेणैव क-
र्तव्यानालसः कदा ॥९२॥ यदाऽवकाशो नास्त्येव तदा तेषां सुखार्थये ॥ मया विशेषः प्रोक्तोऽयं न
सर्वेषां मयेरितः ॥९३॥ इति शत्रुघ्नकवचम् ॥ रामदास उवाच ॥ एवं शिष्य त्वया यद्यत्पृष्टं तत्तन्म-
योदितम् ॥ अन्यत्किंचित्प्रवक्ष्यामि तच्छृणुष्वाद्य सादरम् ॥९४॥ गीतैः प्रबंधैः श्रीरामः सदा गेयोऽ
त्र मानवैः ॥ वीणावाद्यादिभिर्भक्त्या नृत्यान्यपि समाचरेत् ॥९५॥ दशरथनंदनेति पूर्वमुक्त्वा ततः
परम् ॥ मेघःश्यामेति वै चोक्त्वा तथा रविकुलेति च ॥९६॥ मंडन राजारामेति द्वाविंशाक्षरजस्त्वयम्
मनुः सदा जपनीयो वीणावाद्येन सुस्वरः ॥९७॥ दशरथ नंदन मेघःश्याम रविकुलमंडन राजारामे-
ति मनुः ॥ कीर्तनस्य मनोर्नैव कार्यो न्यासो जपे स्मृतः ॥ एवं सर्वेषु मंत्रेषु बोधव्यं मानवैर्भुवि ॥९८॥
राम जयेति चोक्त्वातु त्रिवारं चात्र सुस्वरम् ॥ रामेति त्र्यक्षरे त्वंते चोक्त्वा वीणास्वरेण च ॥९९॥ चतुर्द-
शाक्षरश्चायं कीर्तनार्थे मयेरितः ॥(ॐ श्रीराम जयराम जयजय रामेति मनुः)॥ मंत्रशास्त्रेषु ये मंत्रा
स्ते जपार्थं प्रकीर्तिताः ॥ इमे मंत्राः कीर्तनार्थं ज्ञातव्या मानवोत्तमैः ॥१॥ एतेषामपि चेद्भक्त्या मंत्राणां
च जपः कृतः ॥ तदा भस्मी भविष्यंति. तेषां पापानि वै क्षणात् ॥२॥ अन्यान्मंत्रान्प्रवक्ष्यामि तान् शृ-
णुष्व द्विजोत्तमः ॥ राजीवलोचनेत्युक्त्वा मेघःश्यामेति वै ततः ॥३॥ तथा सीतारंजनेति राजारामेति वै

ततः ॥ एकोनविंशद्वर्णैश्च राममंत्रस्त्वयं स्मृतम् ॥४॥ (राजिवलोचन मेघःश्याम सीतारंजन राजारामेति मंत्रः) अयं मंत्रः सुस्वरेण कीर्तनीयो मुहुर्मुहुः ॥ वीणास्वरेण संयुक्तश्चासने गमनेऽपि च ॥५॥ श्री शब्द पूर्वं जय शब्द मध्यं- जय द्वयेनापि पुनः प्रयुक्तम् ॥ त्रिःसप्त कृत्वा रघुनाथ नाम- जपं निहन्या द्विजकोटि हत्या ॥६॥ त्रयोदशाक्षरश्चायं राममंत्रः शुभावहः॥ जपनीयः कीर्तनीयः सर्वदाऽयं मुहुर्मुहुः ॥७॥——
(श्रीराम जयराम जयजय रामेति मनुः) अयं मंत्रः सुस्वरेण तथा वीणा स्वरादिना ॥ कीर्तनीयो मुदा मर्त्यै मंत्रशास्त्रेऽप्ययं मुदः ॥ ८ ॥ तस्मात्सदा जपनीयः सर्वसिद्धि प्रदायकः ॥ अष्टादशाक्षरं मंत्रं त्वन्यं श्रृणु शुभप्रदम ॥९॥ उक्त्वा सीतारंजनेति मेघःश्यामेति वै ततः ॥ कौसल्यासुतेत्युक्त्वाथ राजारामेति वै ततः ॥११०॥ (सीतारंजन मेघःश्याम कौसल्यासुत राजारामेति मनुः) अष्टादशाक्षरश्चायं कीर्तनीयो महामनुः ॥ वीणास्वरसमेतश्च कलकंठेन सुस्वरः ॥११॥ रविवर कुल जातं वंदे चेति प्रकीर्त्य च ॥ सुरभूसुरेत्युक्त्वाग्रे गीतं चेति ततः परम् ॥१२॥ सप्तदश सुवर्णैश्च राममंत्रस्त्वयं शुभम् ॥ कीर्तनीयः सुस्वरं हि वीणा वाद्य स्वरादिना ॥१३॥(रविवरकुल जातं वंदे सुरभूसुर गीत मिति मनुः) विष्णुदास श्रृणुष्वान्यान्राममंत्रान्शुभावहान् ॥१४॥ एषां स्मरणमात्रेण महापाप लयं व्रजेत् ॥ कौसल्यासुतेत्युक्त्वाथ रामेति द्वेऽक्षरे तथा ॥१५॥ तथा सीतारंजनेति मेघःश्यामेति वै ततः ॥ षोडशाक्षर मंत्रोऽयं कीर्तनीयः शुभावहः ॥१६॥ वीणास्वरपूर्वकश्च कलकंठेन सुस्वरः ॥ (कौसल्यासुत राम सीतारंजन मेघःश्याम) सर्व पापक्षयकरः सर्व वांछितदायकः ॥१७॥ दशरथनंदनेति पूर्वमुक्त्वा ततः परम् ॥ मेघःशामेति वै चोक्त्वा

सीतेति द्वेक्षरे ततः ॥ १८॥ रंजनेति ततश्चोक्त्वा राजारामेति वै ततः ॥ विंशाक्षर मनुश्चायं महापातक नाशनम् ॥१९॥ (दशरथनंदन मेघःश्याम सीतारंजन राजारामेति मनुः॥) अयं विंशाक्षरो मंत्रः कीर्तनीयः सुखप्रदः ॥ वीणास्वर समेतश्च महत्पुण्य प्रदः स्मृतः ॥१२०॥ वंदे रघुवीरमिति चोक्त्वा चैव ततःपरम्॥ उक्त्वा सीताकांतमिति रणधीरमिति क्रमात् ॥२१॥ चतुर्दशाक्षरश्चायं राममंत्रः शुभावहः ॥ कीर्तनीयोजनैर्भक्त्या महामंगल कारकः ॥२२॥ (वंदे रघुवीरं सीताकांतं रणधीरम्) जयराम जयराम संकीर्त्य सुस्वरं ततः ॥ जय जयेति संकीर्त्य रामेति द्वेक्षरे पुनः ॥ २३॥ (जय राम जय राम जयजय राम) चतुर्दशाक्षरश्चायं तृतियः कथितो मनुः ॥ कीर्तनि योजनैर्नित्यं महापातक नाशनः ॥२४॥ मनुः सीता राघवेति पंचवर्णात्मकः स्मृतः ॥ जपनीयः कीर्तनीयो वीणा वाद्येन सुस्वरः ॥२५॥ (सीताराघव) भजेति द्वेक्षरे पूर्वं सीताराममिति क्रमात् ॥ मानसेति ततश्चोक्त्वा भजेति द्वेक्षरे पुनः ॥२६॥ ततो राजाराम इति मंत्रः पंचदशाक्षरः॥ कीर्तनीयो मनुश्चायं वीणावाद्येन सुस्वरः ॥ २७॥ (भज सीतारामं मानस भज राजारामम्) श्रीसीताराममित्युक्त्वा वंदे चोक्त्वा ततः पुनः ॥ श्री राजाराममिति च कीर्तयेत्सुस्वरं मुहुः ॥२८॥ (श्रीसीतारामं वंदे श्रीराजारामम्) द्वादशाक्षर मंत्रोऽयं कीर्तनीयः सदा जनैः ॥ वीणा वाद्यादिना पुण्यः सर्व वांछित दायकः ॥ २९॥ रावणमर्दनेत्युक्त्वा रामश्चोक्त्वा ततःपरम् राघवेति ततश्चोक्त्वा वाली चेति पुनः क्रमात् ॥१३०॥ मर्दनेति पुनश्चोक्त्वा रामेति द्वेऽक्षरे पुनः॥ स्मृतोऽष्टादशवर्णैश्च द्वितियोऽयं मनुः शुभः ॥३१॥ (रावणमर्दन राम राघव वालीमर्दन राम) अयं

मंत्रः कीर्तनीयः सर्वदा मानवोत्तमैः ॥ श्रीसीताराममिति च मानसेति ततः परम् ॥३२॥ भजेति द्वेऽक्ष-
रे चोक्त्वा राजेति द्वेऽक्षरे पुनः ॥ राममिति द्वेऽक्षरे च मंत्रायं परमः शुचिः ॥३३॥ चतुर्दशाक्षरश्चायं
चतुर्थश्च मयेरितः ॥ कीर्तनीयः सुस्वरोऽयं वीणावाद्य पुरःसरः ३४॥ (श्रीसीतारामं मानस भजराजा-
रामम् ॥ सीताराम जयेत्युक्त्वा राजारामेति वै ततः ॥ अयं दशाक्षरो मंत्रः कीर्तनीयोत सुस्वरः ॥३५॥
(सीताराम जय राजाराम) श्रीसीताराममिति च वंदे राममिति क्रमात् ॥ जयरामं ततश्चोक्त्वा त्रयोदशा-
क्षरो मनुः ॥३६॥ कीर्तनीयः सदा मर्त्यैः सर्वपातक नाशनः ॥ वीणावाद्यादिना नित्यं द्वितियोऽयं मनु
स्मृतः ॥३७॥ (श्री सीतारामं वंदे रामं जयरामम् ) मां पाह्यतिऽदौ चोक्त्वा हि दिनं राघव चेति हि
॥ त्वत्पाद युगलीनं वै चेत्येषः षोडशाक्षरः ॥३८॥ कीर्तनीयो मनुर्मर्त्यैः सर्वपातक कृंतनः ॥ वीणावाद्य
स्वरेणां च कलकंठेन सुस्वरः ॥३९॥ (मां पाह्यति दीनं राघव त्वत्पद युगलीनम् ॥) द्वितियोऽयं मया
प्रोक्तो मंत्रोऽत्र षोडशाक्षरः ॥ जयजयेति वै चोक्त्वा राघवेति ततःपरम् ॥१४०॥ सप्ताक्षर मनुश्चा-
यं कीर्तनीयः सदा नरैः ॥ ४१॥ (जय जय राघव) जय जयेति संकीर्त्य तथा रघुवरेति च ॥ अष्टाक्षर
मनुश्चायं कीर्तनीयः सदा नरैः ॥४२॥ (जय जय रघुवर) त्वं मां पालय इत्युक्त्वा सीतारामेति वै पु-
नः ॥ नवाक्षर मनुश्चायं कीर्तनीयः सदा नरैः ॥४३॥ (त्वं मां पालय सीताराम) सीताराम जयेत्युक्त्वा
मनुः षष्ठाक्षरस्त्वयम् ॥ कीर्तनीयः सदा मर्त्यै वीणा वाद्येन सुस्वरः ॥४४॥ (सीताराम जय) श्रीसीतारामे-
ति मनुर्ज्ञेयः पंचाक्षरः परः ॥ कीर्तनीयः सदा मर्त्यै महापातक नाशनः ॥४५॥ (श्रीसीताराम) सीतारामे

ति मनुश्चतुर्वर्णात्मकं शुभम् ॥ श्रीरामेति त्र्यक्षरश्च रामेति द्व्यक्षरो मनुः॥४६॥ (सीताराम) (श्रीराम)
(राम) राकारो बिंदुना युक्तश्चैकवर्णात्मको मनुः॥ अयं सदा जपनीयः कीर्तनीयो न वै कदा॥४७॥ (रा)
राम जयेतिश्चोक्त्वादौ सीतारामेति वै ततः॥ राघवेति ततश्चोक्त्वा मंत्रस्त्वेकादशाक्षरः॥४८॥ (रामं
जय सीताराम राघव) दशरथनंदनेति रघुकुलेति वै ततः॥ भूषणेति ततश्चोक्त्वा कौसल्येति ततः पुनः
विश्रामेति ततश्चोक्त्वा पंकजलोचनेति च ॥ रामेति द्वेक्षरे चापि ह्यष्टाविंशाक्षरो मनुः॥१५०॥ अयं म-
हान्कीर्तनीयो वीणा वाद्येन सुस्वरः॥ प्रोक्तं पातकविध्वंसि सर्ववांछितदायकः॥५१॥ (दशरथनंदन
रघुकुलभूषण कौसल्याविश्राम पंकजलोचन राम) सीताराम जयेत्युक्त्वा राघवेति ततः परम् ॥ रामे-
ति द्वेऽक्षरे चापि मंत्रस्त्वेकादशाक्षरः॥५२॥ कीर्तनीयः सुस्वरोऽयं मंत्रो वीणास्वरेण च॥ महापातक
हृत्प्रोक्तो सर्ववांछितदायकः॥५३॥ (सीताराम जय राघव राम) एकादशाक्षरश्चायं मंत्रः प्रोक्तो मयो-
ऽत्र हि ॥ द्वितियः परमः श्रेष्ठो महापातकनाशनम् ॥५४॥ पंचवटिस्थितेत्युक्त्वा राम जय जयेति च
दशरथनंदनेति रामेति द्वेऽक्षरे तथा ॥५५॥ एकविंशाक्षरश्चायं कीर्तनीयो महामनुः॥ कलकंठेन म-
र्त्यैश्च महापातकनाशनम्॥५६॥ (पंचवटिस्थितराम जय जय दशरथनंदन राम) दशरथसुतेत्युक्त्वा
बालं वंदेत्विति क्रमात्॥ रामं घननीलमिति मंत्रोऽयं षोडशाक्षरः॥५७॥ द्वितृतियोऽयं मया प्रोक्तः
कीर्तनीयो मनोरमः॥ वीणावाद्य स्वरेणैव महापुण्य विवर्द्धनः॥५८॥ (दशरथसुत बालं वंदे रामं
घननीलम् ॥) कोदंडखंडनेत्युक्त्वा दशास्यमर्दनेति च ॥ कौसल्यासुतरामेति सीतारंजन चेति वै

॥५९॥ राजारामेति चोक्त्वा चैकोनत्रिंश वर्णकः ॥ कीर्तनीयो मनुश्चायं वीणावाद्येन सुस्वरः ॥१६०॥
(कोदंडखंडन दशशिर मर्दन कौसल्यासुत राम सीतारंजन राजाराम) कोदंडभंजनेत्युक्त्वा रावण-
मर्दनेतिच ॥ कौसल्येति ततश्चोक्त्वा विश्रामेति ततः परम् ॥६१॥ सीतारंजनेति ततो राजारामेति
वै ततः ॥ सप्तविंशाक्षरश्चायं मनु प्रोक्तः शुभप्रदः ॥६२॥ (कोंदंड भंजन रावणमर्दन कौसल्या वि-
श्राम सीतारंजन राजाराम) कोदंडखंडनेत्युक्त्वा वालीताडन चेति वै ॥ लंकादाहनेति ततः पाषा-
णतारणेति च ॥६३॥ रावणमर्दनेत्युक्त्वा रविकुलेति वै ततः ॥ भूषणेति ततश्चोक्त्वा कौसल्येति ततः
परम् ॥६४॥ विश्रामेति ततश्चोक्त्वा सीतारंजन चेति वै ॥ राजारामेति वै चोक्त्वा पंचाशदक्षरो मनुः
॥६५॥ अयं सदा कीर्तनीयो वीणा वाद्येन सुस्वरः ॥ मंत्राणी च वरिष्ठोऽयं महापातकनाशनः ॥६६॥
(कोदंडखंडन वालीताडन लंकादाहन पाषाणतारण रावणमर्दन रविकुलभूण कौसल्याविश्राम
सीतारंजन राजाराम ) एवं नानाविधान्मंत्राः संति शिष्य सहस्रशः ॥ सहस्रवर्णपर्यंतं कस्तान्वक्तु
भवेत्क्षमः ॥६७॥ एते सर्वे कीर्तनीया एव वीणा पुरःसराः ॥ इमे मंत्रा जपनीयानज्ञेया मानवोत्तमैः
॥६८॥ मंत्रशास्त्रेषु ये प्रोक्तास्ते जप्या एव मानवैः ॥ ते मंत्रा कीर्तनीया नकीर्तनीयास्त्वि मे स्मृताः
॥६९॥ एतान्मंत्रान्पुरस्कृत्य प्रबंध विविधाः शुभाः ॥ रचनीया बुद्धिमंते र्नानाभाषाभिरादरात् १७०
ये ये नोक्ता मया मंत्रा स्तान्युक्ता रचयेन्नरैः ॥ रचने नैव दोषोस्ति तैस्तुष्टो जायते हरिः ॥७१॥
मंत्रैर्प्रबंधैः काव्यश्च स्तुतिभिः कीर्तनादिभिः ॥ प्राचिनै र्वा कल्पितैर्वा रामो गेयः सदा नरैः ॥७२॥

एनकेन प्रकारेण कार्यं राघवचिंतन ॥ पापराशिः क्षणा दग्धा श्रीराम चिंतनेन हि ॥७३॥ भवत्यत्र न संदेहः पावकेन यथा कुटि ॥ दंभेन वाऽति भक्त्या वा निष्कामाद्वा सकाम तेः ॥७४॥ यद्यत्र राघवो गीत स्तेन पापं हुतं भवेत् ॥ यथा वन्हिस्तूलराशिं स्पर्शितः कामनां विना ॥ कामेन वा देहत्येव क्षणात्तद्वन्न संशयः ॥७५॥ मंत्रैः प्रबंधैः काव्यैश्च नानाचारित्रवर्णनैः ॥ अत्यशुद्धैः स्तुतो रामः कल्पितैरपि स्वेच्छया ॥ तैश्च तुष्टोभवत्यत्र श्रीरामो नात्र संशयः ॥७६॥ विनाश्रयेण रामस्य यत्कृतं स्तवनादिकम् तेनापि तुष्टः श्रीरामो भवत्येव न संशयः ॥७७॥ आश्रयेणापि या निंदा कृता श्रीराघवस्य च ॥ सा भवेन्नरका यैव नात्र कार्या विचारणा ॥७८॥ किं शास्त्रैश्च पुराणैश्च पठितैः पाठितैरपि ॥ यदि रामे रतिर्नास्ति तैर्भवे मानवस्य च ॥७९॥ रामप्रीतिर्युतस्यात्र मूर्खस्यापि नरस्य च ॥ तद्भाषाकृत स्तुत्याद्यैः प्रसन्नो जायते हरिः ॥१८०॥ तस्माच्छ्रीरामचंद्रस्य प्रीत्या यद्यत्कृतं भुवि ॥ तेनाति तुष्टः श्रीरामो भवत्येव न संशयः ॥८१॥ रामो गेयश्चिंतनीयो राम स्तव्यो रामः सेवनीयोऽत्र रामः ॥ ध्येयो रामो वंदनीयोऽत्र रामो ॥ दृश्यो रामः सर्व भूतांतरेषु ॥१८२॥ इति श्रीशतकोटि रामचरितांतर्गत श्रीमदानंद रामायणे वाल्मीकिये मनोहरकांडे लक्ष्मणादीनां कवचादि वर्णनं नाम पंचदशः सर्गः ॥ शुभं भवतु ॥ श्रीसीतारामचंद्रार्पणमस्तु ॥

आकोला

ता॰१६-८-५३

॥श्रीगणेशायनमः॥ रामदास उवाच ॥ एवं यद्य त्वया पृष्टं तन्मया परिवर्णितम्॥ किमन्यच्छ्रो
तु कामस्त्वं तद्वदस्व वदामि ते ॥१॥ विष्णुदास उवाच ॥ किंचिद्भुतं हनुमतस्त्वं मां वदस्तुमिहार्हसि॥
रामदास उवाच ॥ यदा रामस्त्रिकुटाद्रौ नागपाशैस्तु पीडितः॥●॥ नारदस्य वचः श्रुत्वा सस्मार विन-
तासुतम् ॥२॥ तदा सौ काश्यपी वीरः समागत्य रणांगणम्॥ प्रणाममकरो तस्मै रामायामिततेजसे ३
निवार्य पन्नगास्त्रं तन्मेघनाद समीरितम्॥ तुष्टाव रघुवीरं तं ससैन्यं च सलक्ष्मणम्॥४॥ उवाच प्र-
णिपत्याथ रामभद्रं खगेश्वरः॥ श्रीगरुड उवाच ॥ आश्चर्यमिदमत्यंतं यद्भवां नस्मरद्धि माम्॥५॥ संति
वीरे महारुद्रे सगणे श्रीहनुमति ॥ सुग्रीवे च नले नीले सुषेणे जांबवत्यपि ॥६॥ अंगदे दधिवक्त्रे च ता-
रे च तरले तथा ॥ मैंदे संति महावीर्ये किं मेऽत्रास्ति प्रयोजनम्॥७॥ श्रीराम उवाच ॥ भवद्भीतिमुपाग-
म्य विदताश्च भुजंगमाः॥ एतेषु सत्सु वीरेषु किमु सैन्यमपीडयन्॥८॥ गरुड उवाच ॥ रामदेव म-
हाबाहो कपिनां चरितं श्रृणु ॥ आत्मनोऽपि समाविष्टान्मा कुरुष्वात्र गर्हणम्॥ ९॥ साक्षात्त्वं भगवान्वि-
ष्णुर्लक्ष्मीस्तु जनकात्मजा ॥ सौमित्रिः फणिराजोऽयं रुद्राश्च कपयः स्मृतः॥१०॥ सुग्रीवो वीरभद्रोऽयं
शंभुरेष स्मृतो नलः॥ विद्धि दाशरथे नूनं गिरिशो नील एव च ॥११॥ महायशाः सुषेणोऽयं जांबुवा-
नश्चाप्य जैकपात्॥ अहिर्बुध्न्यस्त्वंगदोऽत्र दधिवक्त्रः पिनाकधृक्॥१२॥ अयुताजित्वयं तारः स्था-
णुश्च तरले मतः॥ मैंदो भर्गतनुः साक्षाद्धनुमानन्भगवान्स्मृतः॥१३॥ अवतीर्णा महारुद्रास्त्वदर्थं
रघुनंदन ॥ अवसन्सर्वदेशेषु नाना पर्वतमध्यतः॥१४॥ धृत्वा च कपिरूपाणि अवतेरुर्महितले॥

सर्वेऽपि कपि तां प्राप्ता कारणं तद्ब्रवीमिते ॥१३॥ पुरा देवासुरैः सिंधोर्मथिता व्याधयो भवेत्॥ नानापीडा कराः सर्वा लूता विस्फोटकादयः ॥१४॥ तैरेव व्याधिभिः सर्वं पीडितं जगतीतलम्॥ ऋषयोऽपि नृपालाश्च ब्रह्माणं शरणं ययुः ॥१५॥ ऊचुश्च जगतानाथं ब्रह्मांड कमलोद्भवः॥ त्राहि त्राहि जगन्नाथ व्याधिभ्यो जगतीमिमाम्॥१६॥ पीडितां दारुणैर्दोषैर्ज्वरादैश्च महोल्बणैः॥ त्रिदोषैर्जर्जरीभूतां विश्वमैर्व्याकुलि कृताम्॥१७॥ औषधानि न सिध्यंति मंत्र यंत्राणि चैव हि॥ पीडयंति च महारोगा मानवानाश्रुकारिणः॥१८॥ एत ते कथितं सर्वं ब्रह्मन्त्वत्पुरः सुधिः॥१९॥ तत्तेषां वचनं श्रुत्वा रुद्रान्संप्रार्थयद्विधिः॥ तेऽपि श्रुत्वा ब्रह्मवाक्यं रुद्रा एकादशामलाः॥२०॥ समाश्वास्य विरंचि ते वीरभद्रादयः सुराः॥ संभूत वानरेष्वेव सुग्रीव प्रमुखाद्रमे॥२१॥ पर्यटन्पर्वतोग्राणि मंडलानी च सर्वशः॥ नादयंतो जगत्सर्वं बुभुःकारैः सुदारुणैः॥२२॥ क्ष्वेडितैर्क्रीडनेस्तेषां व्याधयो नाशमाप्नुयुः॥ ततस्तु सकलां दृष्ट्वा वानरैर्वेष्टितां भुवम्॥२३॥ तुतोष भगवान्ब्रह्मा ददौ तेभ्यो वरान्बहुन्॥ ब्रह्मोवाच॥ युष्मापि च स्त्वमुद्रास्तु मृतसंजीवनि कलाः॥२४॥ अज्ञास्तु सर्व जगति वेगोस्तुः मनसः समः॥ युष्मान्स्मरंति ये मर्त्या पूजयंति भवत्तनुः॥२५॥ पातका विविधा कृत्वा चित्रतोरणसंयुताः॥ भक्ष्या भोज्यानि खाद्यानि लेह्य पेह्य च सर्वशः॥२६॥ यक्षान्नुदिष्य ये मर्त्या जुव्हवंति हुताशने॥ हविः पुण्यतमं रुद्रास्तेषां सिद्धिर्न संशयः॥२७॥ पायसेनैव साज्येन तथैव तिल सर्पिषा॥ यजंति भवतां वृंदः ते यांति परमं पदम्॥२८॥ एवं वै रुद्रमखिलं

गाथा वैश्वानरि स्तथा ॥ मानस्तोकेति वा मंत्रो मनोज्योतिरथापि वा ॥२९॥ भवतां यजनं चात्र गा-
यत्र्या वा प्रकीर्तितम् ॥ एवं ये मानवालोके विधानं परिकुर्वते ॥३०॥ व्याधिं मुक्त्वा मुखासिना स्ते
त्रयात्यक्षयं पदम् ॥ गरुड उवाच ॥ इति राम पुरा वृत्तं कपिनां कथितं मया ॥३१॥ एषु रुद्रेषु सर्वेषु
हनुमन्भद्रनायकः ॥३२॥ विधानं तत्र कर्तव्यं यत्रास्ति हनुमत्तनुः ॥ गोपुरे हनुमन्मूर्तिः शिलायां
च प्रतिष्ठितम् ॥३३॥ तत्र सर्वं प्रकर्तव्यं विधानं सुरसत्तम ॥ राम उवाच ॥ केन केन प्रकारेण
क्रीयते कपिपूजनम् ॥३४॥ पताकाः कीदृशी तत्र कति कार्या विहंगमः ॥ हवनं कति संख्याकं
किं द्रव्यं को जपोत्र वै ॥३५॥ किं दानं केन विधिना तन्मन्माचक्ष्व सुव्रत ॥ गरुड उवाच ॥ जनमा-
रे समुत्पन्ने ग्रामे वा पत्तनेऽपि वा ॥३६॥ प्रभवंत्यौषधं नैव मणि मंत्र पुरः क्रिया ॥ विधानं तत्र
कर्तव्यमेकादश्यां तिथौ नृप ॥३७॥ प्रातःकाले समुत्थाय कृतशौचो द्विजोत्तमः ॥ स्नात्वा गंगाजले
पुण्ये तिलामलक संस्कृतः ॥३८॥ एकादशद्विन श्रेष्ठा सोपवासान्निमंत्रयेत् ॥ जागरस्तैस्तु कर्त-
व्यः सर्वोपस्करयं युतः ॥३९॥ आदौ तु मंडपं कृत्वा सर्वत्रापि सुशोभितम् ॥ पुष्पमंडपिका मध्ये
मंडपेस्थापयेध्दरिन् ॥४०॥ पंचामृतैस्तु स्नपनं रुद्रेभ्यः परिकल्पयेत् ॥ ततस्तु कुसुमैः पूजा श-
तपत्रादिभिः शुभैः ॥४१॥ चंदनं च सकर्पूरं देयं रुद्रास्तु लेपनम् ॥ दशांगं धूपमादद्याद्दीपैर्नीराज-
येत्तमः ॥४२॥ नैवेद्यं विविधं दद्या तांबूलेनैव संयुतम् ॥ एकादश पताकास्तु पटैः सुपरिकल्पयेत्
॥४३॥ या या यस्मै समुद्दिष्टा पताका च सुशोभना ॥ तस्य तस्यैव रूपं तु तस्यामेव प्रकल्पयेत् ४४

एवं कृते विधाने च सुपताका सुतोरणैः ॥ प्रातःकाले तु राजेंद्र जागरांते द्विजोत्तमः ॥४५॥ कृत स्नानो नदीतोये होमं कुर्यात्समाहितः ॥ पायसेन तु साज्येन तथैव तिलसर्पिषा ॥४६॥ अ यु तं हवनं कृत्वा पुनः पूजा प्रकल्पयेत् ॥ पताका हनुमन्द्वारे तस्यैव च निधापयेत् ॥४७॥ राजद्वारे तु सौग्रीवीं सौषेणीमापणे न्यसेत् ॥ नलनील पताके तु शिवद्वारे तु विन्यसे ॥४८॥ तारस्य तरल-स्यापि मैंदस्य ह्यंगदस्य च ॥ रामाद्बहिश्चतुर्दिक्षु मार्गेषु स्थापयेद्धिया ॥४९॥ जलस्थाने जांबवंतो दधिवक्त्रं चतुष्पथे ॥ स्थापयेत्परमां दिव्यां महावाद्यादि मंगलैः ॥५०॥ द्वारदेशे जनानां च रुद्रमूर्तिं विलेखयेत् ॥ चित्रिता पंचवर्णैश्च ग्रामसूत्रैश्च वेष्टयेत् ॥५१॥ प्रत्यहं कारयेद्विद्वान् भक्त्या ब्राह्मण तर्पणम् ॥ दद्याद्वस्त्राणि ऋत्विग्भ्यो सालंकाराणि भूपतिः ॥५२॥ छत्राणि करपत्रै-श्च पादुकाश्च विशेषतः ॥ धेनुं पयस्विनिं दद्यादाचार्या सवत्सकम् ॥५३॥ सदक्षिणां सवस्त्रां च सालंकारा गुणान्विताम् ॥ द्विजाय महिषिं दद्यात्तथैव पृथिविपते ॥५४॥ अन्येभ्यो ब्राह्मणेभ्य-श्च सप्तधान्यानि भूरिश ॥ लवणं स घृतं देयं तैलं च सगुडं तथा ॥५५॥ शय्यादानानि भूरिणि छत्राणि विविधानि च ॥ एतत्कृत्वा विधानं च राजा क्षेममवाप्नुयाः ॥५६॥ रुद्र एवात्र निर्दिष्टो जपेत्सर्वै सुलक्षणः ॥ अथवा वा हनं शस्तं मानस्तोके इति स्फुटम् ॥५७॥ इति श्रीशतकोटि रामचरितांतर्गत श्रीमदानंदरामायणे वा॰ मनो॰ काण्डे हनुमत्पताकारोपण व्रतवर्णनं नाम षोडशः सर्गः ॥ शुभं भवतु ॥ श्रीसीतारामचंद्रार्पणमस्तु ॥

आकोला
१९-८-५२

॥ श्रीगणेशाय नमः ॥ रामदासउवाच ॥ विष्णुदास त्वया यद्यत्पृष्ट तत्तन्मयेरितम् ॥ रामाज्ञ-
या तव प्रीत्याऽऽनंद चारित्रमुत्तमम् ॥१॥ रामेणैव ममास्येन तवोद्दिष्टमादरात् ॥ त्वय्यस्ति रा-
म संप्रीतिस्तस्माद्रामेण मे द्विज ॥२॥ आज्ञापितं पूजनांते पुरा तव तपोबला ॥ आनंदरामचरितं
ममेदं मंगलप्रदम् ॥३॥ विष्णुदासाय विप्राय कथयस्वेति वै मुहुः ॥ त्वदर्थं पूजनांते मे दर्शनं दत्त-
वान्विजम् ॥४॥ नवोत्तरशतश्लोक साररामायणेन च ॥ पुरा मे स्थितेन्नात्र रामेण स्मारितोऽ
प्यहम् ॥५॥ श्रीराघवोपदिष्टेन महामंगलदेन च ॥ नवाधिक शतश्लोक साररामायणेन च ६
यद्यन्मया विस्मृतं च श्रुतं पूर्व कथानकम् ॥ मम तच्च स्मरितं वाल्मीकि मुखनिर्गतम् ॥७॥ त-
तो मया विष्णुदास राघवस्याज्ञया तव ॥ शतकोटिमिता रामचरितात्स विविच्य च ॥८॥ सारं
सारं च कथितं महामंगलकारकम् ॥ विष्णुदासउवाच ॥ यत्त्वया कथितं चेदमानंदसंज्ञकं मम
॥९॥ श्रीरामचरितं रम्यं ममतोषार्थमुत्तमम् ॥ शतकोटिमितात्त्यत्किं कथितं च विविच्य च १०
अथवा भरतखंडांतर्भागादुक्तं वदस्व तत् ॥ रामदास उवाच ॥ शतकोटिमितं कृत्स्नं मया रामा-
यणं शुभम् ॥११॥ विविच्य ज्ञानदृष्ट्यात्र तवेदमुपदेशितम् ॥ विशेषात्स्मरितं चापि साररामायणं
श्रवात् ॥१२॥ रामोपदेशिताद्रम्यात्ततस्ते कथितं मया ॥ विष्णुदास उवाच ॥ शतकोटिमिते रामच-
रिते पातकापहे ॥१३॥ कति कांडानि सर्गाश्च तन्मां वक्तुंत्वमर्हसि ॥ रामदास उवाच ॥ नवल-
-क्षाणि कांडानि शतकोटिमिते द्विज ॥१४॥ सर्गा नवति लक्षाश्च ज्ञातव्या मुनिकीर्तिताः ॥ को-

टिनां च शतं श्लोका मानं ज्ञेयं विचक्षणैः ॥१५॥ विष्णुदास उवाच ॥ गुरोऽहं श्रोतुमिच्छामि य- त्वां श्रीराघवेण हि ॥ उपदिष्टं मदर्थं हि साररामायणं शुभम् ॥१६॥ नवोत्तरशतं श्लोकं संमितं च मनोहरम् ॥ तत् त्वं वदाधुना पुण्यं परं कौतुहलं मम ॥१७॥ रामदास उवाच ॥ सम्यक् पृष्टं त्वया शिष्य सावधान मनाः शृणु ॥ साररामायणं तेऽद्य प्रोच्यते रामकीर्तितम् ॥१८॥ अविर्भूत्वा पूज- नांते मदग्रे भ्रातृभिः श्रिया ॥ मां प्रोवाच रघुश्रेष्ठः प्रसन्नमुखपंकजः ॥१९॥ श्रीरामचंद्र उवाच॥ रामदास शृणुष्वाद्य यत्सारं प्रोच्यते तव ॥ चरित्रं सकलं स्वीयं मया तत्त्वं सविस्तरम् ॥२०॥ वि- ष्णुदासाय शिष्याय मद्भक्ति निरताय च ॥ कथयस्व यथान्यच्च ज्ञानदृष्टं यथा श्रुतम् ॥२१॥ य- था भरतखंडांतर्भागे चापि त्वये क्षितम् ॥ स्मरणार्थं [illegible] त्वहं किं- चित्तव वक्ष्यामि सादरम् ॥२२॥ पार्वति शिव संवादः सूर्य वंशार्द्ध पार्थिवाः ॥ मत्पित्रो र्हरणं लंकां रावणेन विसर्जनम् ॥२३॥ दशरथ विवाहश्च कैकेय्ये द्विवरार्पणम् ॥ कैकेय्ये द्विजशापश्च वरदानं कराय च ॥२४॥ राज्ञः शापो वैश्यहत्या ऋष्यश्रृंगार्थमुद्यमः ॥ ऋष्यश्रृंगो मुनेस्तेजः प्रतापाद्वन्हि नार्पितम् ॥२५॥ पायसं तद्विभक्ते च गृध्रौ भागं गिरौ नयत् ॥ अंतर्गर्भा नृपपत्न्य स्ता सा मासान्सु दोहदाः ॥२६॥ ततो भूम्या ब्रह्मणा मत्प्रार्थना मंथरा जनिः ॥ चैत्रमासि ममोत्पत्तिर्बंधुभिश्च हनुमता ॥२७॥ बालक्रीडा मत्कृता च व्रतबंधस्ततो मम ॥ वेदाभ्यासो वसिष्ठाच्च तीर्थ यात्रा च बंधुभिः ॥२८॥ विश्वामित्र धनुर्विद्या ताटिका मर्दनं वने ॥ आरंभो रणदिक्षायाः सुबाहोर्मर्दनं मखे ॥२९॥

मारिचे क्षेपणं चापि ह्यहल्योद्धरणं मया ॥ स्वयंवरं च शापश्च मुनिपत्न्या सविस्तरम् ॥३०॥ नौकापे-
न हि गंगायां मदंघ्रिक्षालनं कृतम् ॥ सैवं धनुर्जामदग्न्य न्यस्तं भग्न सभांगणे ॥३१॥ सीतोत्पत्तिश्च
सीताया लंकागमन निर्गमौ ॥ बंधुनां मे विवाहश्च जामदग्न्य पराजयः ॥३२॥ दिपावल्युत्सवश्चापि नृ-
पैः पथि महारणः ॥ जीवनं भरतस्यापि मन्दावि मुनिनेरितम् ॥३३॥ वृंदा शापः पितुः पुण्यं कैकेयी पूर्व-
कर्म च ॥ ततो मद्दिनचर्यात्र गर्भाधान महोत्सवः ॥३४॥ नारदाग्रे प्रतिज्ञा मे यौवराज्यार्थमुद्यतः ॥ कैकेयी
वरदानेन दंडकं गमनं मम ॥३५॥ दर्शनं गूहकस्यापि सीतावाक्यं च जान्हवीम् ॥ भरद्धाज वाल्मीक-
यो दर्शनं गिरौ स्थितिः ॥३६॥ काकाक्षि भेदनं चापि राज्ञश्च मरणं पुरि ॥ दर्शनं भरतस्यापि भर-
तस्य विसर्जनम् ॥३७॥ सीतायास्तिलकोऽरण्येऽनसूया भूषणार्पणम् ॥ विराधमर्दनं मार्गे नाना-
ऽऽश्रम विलोकनम् ॥३८॥ अगस्तेश्चाथ गृध्रस्य दर्शनं शंबमर्दनम् ॥ विरूपणं शूर्पनखायाः खर-
रादि विमर्दनम् ॥३९॥ सीतादेह विभाज्यश्च मारीचस्य वधो मया ॥ सीताया हरणं लंकां संगर-
श्च जटायुषः ॥४०॥ इंद्रेण पायसं दत्तं सीतायै गिरिजेक्षणम् ॥ कबंधमर्दनं मार्गे शबर्यापूजित
स्त्वहम् ॥४१॥ ततः सख्यं कपिंद्रेण शिरसः क्षेपणं मया ॥ छेदनं सप्तताडानां सर्पेण मालिका हृ-
ता ॥४२॥ वालेर्घातो मया तत्र सीताशुद्ध्यर्थमुद्यमः ॥ हनुमताब्धितरणं लंकायां जानकीक्षणम्
॥४३॥ मंदोदरी समुत्पत्तिर्वनपाक्षादि मर्दनम् ॥ लंका दाहश्च देहांतं कर्तुं सिध्दो भवत्कपिः ॥४४॥
जांबूनद वृक्षशाखा कथाब्धेस्तरणं पुनः ॥ बहुमुद्रादर्शनं च सेतुबंधस्ततः परम् ॥४५॥ कालनेमि

॥ बिभीषणाभिषेकश्च विश्वनाथ कथा शुभा ॥ गंधमादन विस्तारः न संगरस्ततः परम् ॥४६॥

वधश्चाथ तथै रावणमर्दनम् ॥ मैरावण मर्दनं च मया मंचकभंगनम् ॥ ४७॥ कुंभकर्ण वधश्चापि मेघनादस्य मर्दनम् ॥ ततो होमस्य विध्वंस स्ततो रावणमर्दनम् ॥४८॥ सीतया दिव्यदानं च स्वपुरीं गमनं मम ॥ रणदीक्षा समाप्तिश्च राज्याभिषेचनं मम ॥४९॥ उत्पत्ति रावणादिनामिंद्रजीत पराक्रमः ॥ मानभंगो रावणस्य वालि सुग्रीव जन्मनि ॥५०॥ वायुपुत्र जन्मकर्म वरदानं हनुमत्तमः ॥ शापोऽपि वायुपुत्राय ह्यगस्त्यश्च विसर्जनम् ॥५१॥ गंगायात्रा समुद्योगः सरयू भेदनं ततः ॥ मया स्वबाणरेखा च सीतावाक्य विसर्जनम् ॥५२॥ कुंभोदरस्य वाक्येन पृथ्वीयात्रा मया कृता॥ कुमारी वरदानं च सुरभि केन मेऽर्पिता ॥५३॥ चिंतामणेः शिवाल्लाभ स्ततोऽयोध्या प्रवेशनम् ॥ सारंभो वाजिमेधस्य पृथ्वी वाजि विमोचितः ॥५४॥ तुरगायससैन्याय मार्गदानं तु गंगया ॥ पृथ्वीप्रदक्षिणां कृत्वा वाटेऽश्वस्य प्रवेशनम् ॥५५॥ तमसातट शालां च कुंभोदर प्रदर्शनम् ॥ अष्टोत्तर शतं नाम्ना ममस्तोत्र मुनीरितम् ॥५६॥ दिनचर्या ध्वजारोपा ववभृतोत्सवा मम ॥सीता दानं च तन्मुक्तिर्मत्तीर्थादि वरार्पणम् ॥५७॥ ततो यज्ञसमाप्तिश्च दशयज्ञा विषेशतः ॥ ततो मम स्तवराजः क्रीडाशाला प्रवर्णनम् ॥५८॥ पक्षिणां नवकं स्तोत्रं जानक्यावर्णनं मया ॥ देह रामायणं पत्न्यै मया कथितमुत्तमम् ॥५९॥ दिनचर्या पुनर्मे हि सीतालंकार वर्णनम् ॥ पक्वान्नानां च विस्तारो जलक्रीडां च सीतया ॥६०॥ माध्यान्हिकं भोजनादि मम कर्म प्रवर्णनम् ॥ द्विजपत्न्यै भूषणानां दानं जनकजाकृतम् ॥६१॥ रात्रौ नानास्थलेष्वत्र मत्क्रिडा विविधा स्त्रिया ॥ रुक्म षोडशमूर्तिनां व्यासाग्रे दानम-

र्पितम् ॥६२॥ ततो निर्जर पत्नीभ्यो वरदान मयार्पितम् ॥ गुणवत्यै वरदानं पिंगलायै वरार्पणम्
॥६३॥ सीतायाः प्रत्ययार्थं च दिव्यदानं मया मुदा ॥ कुरुक्षेत्रेऽगस्तिपत्न्यासंवादे जानकीजयः
सीताया दोहदार्थं हि क्रीडा रामादिषु कृता ॥ सीमंतोनयनादिनि नानाकर्माणि वै ततः ॥६५॥ विस-
र्जितश्च जनको वाल्मीकेराश्रमं मया ॥ सीतया द्वे निजेरूपे कृतं मद्वाक्यगौरवात् ॥६६॥ अंगुष्ठयो
लिखितः कैकेय्या रावणो महान् ॥ लोकानां रजकस्यापि ह्यपवादाद्विदेहजा ॥६७॥ मया रजस्तमो
युक्ता त्यक्ता नीतश्च तद्भुजः ॥ गुप्तरूपेण पुत्रस्य कृतं गत्वा तु जातकम् ॥६८॥ शतयज्ञा मया ग-
त्वा कृताः श्रीजान्हवीतटम् ॥ वाल्मीकेन लवानां च लवः पुत्रः कृतः परः ॥६९॥ तयोः कृतं च मुनि-
ना रामरक्षाभिमंत्रणम् ॥ कमलानां च हरणे लवस्य विजयो महान् ॥७०॥ रामायणस्य श्रवणं पुत्रा-
स्याभ्यां मयाऽध्वरे ॥ युध्दं लव कृतं चाथ जलैस्तस्याभिषेचनम् ॥७१॥ मया युध्दं कुशेनाथ सी-
ताया शपथस्ततः ॥ सीताया ग्रहणं चापि विशंत्या भूतलं पुनः ॥७२॥ ततो यज्ञसमाप्तिश्च बंधु
पुत्र निजस्ततः ॥ बालक्रीडोपनयनं वेदानां ग्रहणं क्रमात् ॥७३॥ बालानां शुभचिन्हानि सीताया
पुत्रलालनम् ॥ सर्वेषां व्रतबंधाश्च तेषां यात्रास्ततः परम् ॥७४॥ भूरिकीर्तेः पत्रिकाया तत्पुरं गमनं
मम ॥ व्यग्रतासीत्पुरस्त्रीणां दर्शनार्थं तदा मम ॥७५॥ वंदितोऽहं नृपैः सर्वै स्तदा राजसभांगणे
क्रमेण वर्णनं चाथ पार्थिवानां हि नंदया ॥७६॥ कुशकंठे चंपिकया रत्नमाला विसर्जनम् ॥ क्रमेण
वर्णनं चापि पार्थिवानां सुनंदया ॥७७॥ सुमत्या रत्नमालाया लव कंठे विसर्जनम् ॥ उत्साहोथ वि-

-वाहश्च नानासन्मान पूर्वकः ॥७८॥ गमनं हि स्नुषाभ्यां च सीताया स्वपुरिं मम ॥ निग्रहो जल
देविनां बालिकानां प्रमोचनम् ॥७९॥ सर्वेषां च विवाहश्च पृथक्पुत्र गृहाणि हि ॥ कांतिपुर्याश्च मद-
नसुंदरीहरणं ततः ॥८०॥ यूपकेतो विंवाहश्च पौत्राणां अंगना ततः ॥ पौत्रीणां गणा चापि सर्वेः सौ-
ख्यततोमसम् ॥८१॥ सहस्रनाम स्तोत्रो मे कल्पवृक्ष सुरद्रुमौ ॥ समानीतौ मया स्वर्गाद्भुवं
दुसु ईक्षणात् ॥८२॥ मत्कृष्णोपासकैश्च संवादश्च परस्परम् ॥ काकाय वरदानं च शत स्त्रीणां
वरार्पणम् ॥८३॥ स्थानान्युक्तानि निद्रायै कृतः क्रोधोनुगादिषु ॥ शतशीर्षारावणस्य पौंड्रिकस्य वधो-
ऽपि च ॥८४॥ सीतायै विरहो जातो हतश्च मूळकासुरः ॥८५॥ सीतायाश्च स्तुतिः कैन लंकायां च
प्रवेशनम् ॥ लंकायां परि तश्चापं भ्रमीत्वागमनं पुरिम् ॥८६॥ लाभः कपिलवाराह मूर्तै दत्तां च
बंधवे ॥ लवणासुर घातश्च मधुराया निवेशनम् ॥८७॥ पुत्राणां राज्यभागांश्च सप्तद्वीप जयो
मया ॥ यति शूद्र गृध्र शिक्षा सप्त प्रेत सुजीवनम् ॥८८॥ शूद्राणां वरदानं च द्विजस्त्रीणां वरा-
पर्णम् ॥ षोडशसहस्राणां च वराश्च मृगया मम ॥८९॥ कालिंदे वरदानं च पिप्पलं छेत्तुमुद्यमः
वाल्मीके र्वचनाद्धास्यं कर्तुमाज्ञापितुं जनान् ॥९०॥ शापोऽश्विनि कुमाराभ्यां गणयोश्च परस्प-
रम् ॥ ब्रह्मणा मेऽवताराणां वर्णनं च पृथक्कृतम् ॥९१॥ जन्मत्रयं च वाल्मीके र्वर्वनाम स्तुतिर्मि-
म ॥ मद्राज्य वर्णनं चाथ हेमायाश्च स्वयंवरम् ॥९२॥ चित्रांगदेन संग्रामः कथा कंकणयोस्तथा ॥
लवस्य जीवदानं च राममुद्रा सुविस्तरः ॥९३॥ रामनाथपुरं दानं विप्रै र्दृष्टश्च मारुतिः ॥ दिनचर्या

मम ततः स्वल्पसंतति कारणम् ॥९४॥ कर्ण ध्वनेः कथा चापि मेऽवतारेष्वयं वरः ॥ पत्रपार्श्वे श्री-
रामेति लेखनस्य च कारणम् ॥९५॥ सगुणायै वरदानं द्वे रूपे च मया धृते ॥ तुलसीपत्र संधि-
श्च रामायण श्रुतेः फलम् ॥९६॥ सुमंत्र जीवदानं च संग्रामश्च यमेन हि ॥ सप्तद्वीपेषु सर्वत्र
धर्मशिक्षा मया कृता ॥९७॥ नारदोक्तं शतश्लोकैश्चरित्रं मम पावनम् ॥ पौराणामुपदेशश्च म-
न्मातृणां परास्यतः ॥९८॥ मनः पूजा बहिर्पूजा नवरूप धरस्त्वहम् ॥ रामलिंगतो भद्राणां नाना
भेदा विचिन्निताः ॥९९॥ मासनवम्या विस्तारः कथा स्त्रीराज्य संभवा ॥ मम नाम लेखनस्योद्याप-
नं दान विस्तरः ॥१००॥ चिरंजीवित्व विस्तारो वेदादीनां श्रुतेः फलम् ॥ सार्द्ध मासद्वयं नाम
मद्व्रतं तिथि विस्तरः ॥१॥ गौरीव्रतस्य विस्तारो दोलके ममपूजनम् ॥ नवम्यां मूर्तिदानं च दम-
नोत्सव विस्तरः ॥२॥ काम्यदैवत विस्तारो रकाराद्ये वरोगुणः ॥ मम नाम्नाश्च महिमा मन्नामा-
र्थ उदाहृतः ॥३॥ चैत्रव्रतस्य विस्तारो राक्षसादि गतिःस्मृता ॥ अद्वैतं दर्शितं लोकान्नारीणां
च वरार्पणम् ॥४॥ मन्मुद्रावस्त्र महिमा कवचं मे हनुमतः ॥ सीताया लक्ष्मणादिनां कवचानि पृ-
थग्पृथक् ॥५॥ सीतला व्रतमाहात्म्यं तस्य चोद्यापनं तथा ॥ रमानाम तो भद्रं च मंत्राश्च कीर्तना-
य च ॥६॥ पताकारोपणं नाम व्रतं मारुतितोषदम् ॥ मयोपदिष्टमेतत्ते साररामायणं त्वपि ॥७॥
हनुमत्ता शरसेतोरर्जुनस्यात्र खंडनम् ॥ वाल्मीकिना सोमवंशनृप वृत्तं निवेदनम् ॥८॥ पुत्रयोर-
भिषेकश्च प्रस्थानं हस्तिनापुरम् ॥ ततो महान्संगरश्च पुत्रयोश्च जयो मम ॥९॥ब्रह्मणा प्रार्थ-

ना मेऽत्र वाल्मीकेश्च कुशस्य च ॥ रिपु स्त्रीणां प्रार्थनया सीतापुत्र न्यवारयत ॥ ११०॥ ततो विधेश्च वाक्येन वैकुंठं गंतुमुद्यतः॥ सोमवंशोद्भवायाथ दत्तं वै हस्तिनापुरम् ॥ ११॥ अजमीढाभिषेकश्च सर्वेषां च विसर्जनम् ॥ कुशस्य गमनं स्वीय पुरिं राज्यं शशास सः ॥ १२॥ सर्पश्वश्रु कुमुद्वत्या रविवंश समुद्भवः ॥ वरदानं लक्ष्मणाय वानरेभ्य स्तथा मया ॥ १३॥ अयोध्यासंस्थितानां च ततो देहविसर्जनम् ॥ वानरास्ते सुरा जाता सीता जाता रमा मम ॥ १४॥ लक्ष्मणो पन्नगो जातः शंखोऽभूद्भरता स्तदा ॥ सुदर्शनं च शत्रुघ्नो विष्णुरूप धरस्त्वहम् ॥ १५॥ तदोर्मिलादिकानां च प्रयाणं सर्व योषिताम् ॥ नीराजनं सुरस्त्रीभिस्तेषां सांतानिकं पदम् ॥ १६॥ शंभुना च स्तुतश्चाहं गरुडारोहणं मया ॥ पुष्पवृष्टि र्मयि तदा वैकुंठगमनं मम ॥ १७॥ वैकुंठे रमया स्थित्वा देवानां च विसर्जनम् ॥ सूर्यवंशोऽनुक्रमश्चानंद रामायणस्य च ॥ १८॥ कांडसंख्या सर्ग ग्रंथसंख्या फलश्रुतिः ॥ रामायण श्रवणस्योद्यापनं च महत्तमम् ॥ १९॥ ग्रंथदानमनुष्ठान प्रकारा पंच वै ततः ॥ अनुष्ठानोद्यापनं च शकुनस्य च विस्तरः ॥ १२०॥ संवादस्य पूर्णतापि युवयोर्गुरु शिष्ययोः॥ आशंका छेदनं दव्याः कालाश्च पठनस्य च ॥ २१॥ रामायणस्य महिमा चैकश्लोकेन वै त्विदम् ॥ रामध्यानं चेश देव्योः संवादस्यापि पूर्णता ॥ २२॥ एवं मया रामदास साररामायणं तव ॥ स्मरणार्थ चरित्राणां संक्षेपेण निवेदितम् ॥ २३॥ इदं गोप्यं त्वया कार्यं महत्पुण्यप्रदं स्मृतम् ॥ शतकोटि मिते ग्रंथात्सारं सारं मयोदितम् ॥ २४॥ कः क्षमः सकलं वक्तुं विना वाल्मीकिना भुवि ॥

स एव धन्यो वाल्मीकि येन मच्चरितं कृतम् ॥ २५॥ साररामायणमिदं ये पठंत्यत्र मानवाः॥ ते-
षां भुक्तिश्च मुक्तिश्च द्विज दास्याम्यहं मुदा ॥२६॥ कृत्स्नं रामायणं श्रोतुं पठितुं वा नरोत्तमा-
न् ॥ अवकाशो यदा नास्ति तदैतत्सं पठेन्नरैः ॥२७॥ अन्यद्यद्यत्मया कर्म कृतं पूर्वं शुभाशुभ-
म् ॥ तन्मच्छंदा तव मुखान्निर्गमिष्यति निश्चयात् ॥२८॥ त्वद्दृष्टिगोचरं कृत्स्नं चरितं मे भविष्य-
ति ॥ विष्णुदासाय शिष्याय वद त्वामधुना सुखम् ॥२९॥ श्रीरामदास उवाच ॥ एवं श्रीरामचंद्रे-
ण यथात्र कथितं मम ॥ साररामायणं रम्यं तदिदं ते निवेदितम् ॥१३०॥ इदं रम्यं पवित्रं च महा-
पातकनाशनम् ॥ सर्वदा मानवैर्जप्यं भुक्ति मुक्ति प्रदायकम् ॥३१॥ कृत्स्नं रामायणं श्रुत्वा यत्फ-
लं लभ्यते नरैः ॥ तदस्य पठनादेव सत्यं सत्यं वचो मम ॥३२॥ तस्मान्नृभिः सदा जप्यं सर्वेषां
शांतिकारणम् ॥ पुत्र पौत्रप्रदं स्त्रीदं महत्सौख्यप्रदं नृणाम् ॥३३॥ रामायणानि शतशः संति शि-
ष्यावनी तले ॥ नानेन सदृशं किंचिन्न भूतो न भविष्यति ॥ १३४॥ इति श्रीशतकोटि रामचरितां-
तर्गत श्रीमदानंदरामायणे वाल्मीकिये मनोहरकाण्डे श्रीरामचंद्रोपदिष्ट साररामायणं ना-
म सप्तादशः सर्गः ॥ शुभं भवतु ॥ श्रीसीतारामचंद्रार्पणमस्तु ॥

आकोला

श्रावणवद्य ३ शके १८७५

॥श्रीगणेशाय नमः॥ विष्णुदास उवाच ॥ कपिध्वजोऽर्जुनश्चेति मया पूर्वं श्रुतं गुरो ॥ तन्नामकारणं मां त्वं विस्तराद्वक्तुमर्हसि ॥१॥ रामदास उवाच ॥ सम्यक्पृष्टं त्वया शिष्य सावधान मनाः शृणु ॥ द्वापारांते भावि कथां त्वां वदामि च सत्कृताम् ॥२॥ एकदा कृष्णरहितोऽर्जुनः स्यंदन संस्थितः ॥ ययावरण्ये विचरन्मृगयार्थं हि दक्षिणाम् ॥३॥ एकाकी सूतसंस्थाने स्थित्वा तत्कृत्य साचरन् ॥ हत्वा वने मृगान्धन्वी माध्यान्हे स्नातुमुद्यतः ॥४॥ ययौ रामेश्वरं सेतौ धनुष्कोट्यां विगाह्य च ॥ माध्यान्हकृत्यं संपाद्य पुनः स्यंदनसंस्थितः ॥५॥ अब्धेस्तटे विचचार किंचिद्गर्वसमन्वितः ॥ एतस्मिन्नंतरेऽरण्ये पर्वतोपरि संस्थितः ॥६॥ ददर्श मारुतिं वीरो सामान्य कपिरूपिणः ॥ राम रामेति जल्पंतं पिंगलामधरं शुभम् ॥७॥ तमर्जुनोऽब्रवीद्वाक्यं किं नामास्ति कपे तव ॥ तदर्जुन वचः श्रुत्वा विहस्य कपिरब्रवीत् ॥८॥ यत्प्रतापाच्च रामेण शिलाभिः शतयोजनः ॥ बद्धोऽयं सागरे सेतुस्तं मां त्वं विद्धि वायुजम् ॥९॥ इति तद्गर्वसहितं वाक्यं श्रुत्वाऽर्जुनस्तदा ॥ गर्वाद्विहस्य प्रोवाच मारुतिं पुरतः स्थितम् ॥१०॥ वृथा रामेण सेत्वर्थं श्रमः पूर्वं कृतस्त्वयम् ॥ कथं तेन शरः सेतु कृत्वा कार्यं कृतं नहि ॥११॥ तदर्जुन वचः श्रुत्वा मारुतिः प्राह तं पुनः ॥ मत्तुल्य कपिभारेण शरसेतुः पयोनिधौ ॥१२॥ न्युब्जिष्यतिति मत्वा तं नाकरोद्रघुनंदनः ॥ तत्कपिर्वचनं श्रुत्वाऽर्जुनो मारुतिमब्रवीत् ॥१३॥ कपिभाराद्यदा सेतुर्जलमग्नो भविष्यति ॥ धनुर्विद्या धन्विनः का तदा वानरसत्तमः ॥१४॥ अधुनाऽहं करिष्यामि शरसेतुं तवाग्रतः ॥ त्वं तस्योपरि नृत्यादि कुरुष्वात्र यथासुखम् ॥१५॥ धनुर्विद्या

ममाद्य त्वं कपे पश्य तुमर्हसि ॥ तदर्जुन गिरं श्रुत्वा तमाह सस्मितः कपिः ॥१६॥ ममांगुष्टभारेण शरसेतुस्त्वया कृतः ॥ चेन्मग्नोसि समुद्रे हि तदा कार्यं त्वयात्र किम् ॥१७॥ तत्कपे र्वाक्य माकर्ण्य सोऽर्जुनः प्राह तं पुनः ॥ यदि मग्न शरःसेतु स्त्वरात्तर्ह्यहं कपे ॥१८॥ विशाम्यत्रानलं सत्यं त्वं चाप्यद्य पणं वद ॥ तत्प्रतिज्ञां कपिः श्रुत्वाऽर्जुनं वचनमब्रवीत् ॥१९॥ मम अंगुष्टभारेण त्वत्सेतुश्चेन्नलोपितः ॥ तर्हि त्वत् ध्वज संस्थोऽहं तव साहाय्यमाचरे ॥२०॥ तथास्त्वित्यर्जुनः प्राह टनत्कृत्य महद्धनुः ॥ निर्ममे शरसंजालैः सेतुं दृढतरं घनम् ॥२१॥ शतयोजन विस्तीर्णं सागरस्योर्ध्वतः स्थितम् ॥ तत्सेतुं मारुतिर्दृष्ट्वाऽर्जुनाग्रेंऽगुष्ट भार तः ॥२२॥ अकरोत्सागरे मग्नं क्षणमात्रेण लीलया ॥ तदा देवाः सगंधर्वा किन्नरोरग राक्षसाः ॥२३॥ विद्याधराश्चाप्सरसः सिध्दाद्या गगनस्थिताः ॥ मारुतिं ह्यर्जुनस्याग्रे ववर्षुः पुष्पवृष्टिभिः ॥२४॥ तत्कर्मणार्जुनस्यापि चिंता कृत्वाब्धि रोधसि ॥ निवारितोऽपि कपिना देहं त्यक्तुं समुद्यतः ॥२५॥ एतस्मिन्नंतरे कृष्णस्तं प्राह बटुरूपधृक् ॥ ज्ञात्वाऽर्जुनसखात्सर्वं पूर्ववृत्त पणादिकम् ॥२६॥ उभाभ्यां यद्यच्चरितं पूर्वं तच्च वृथागतम् ॥ साक्षित्वेन विना कर्म सत्यं मिथ्या न बुद्ध्यते ॥२७॥ साक्षित्वेनाधुना मेऽत्र वायुभ्यां कर्म पूर्ववत् ॥ कर्तव्यं तदहं दृष्ट्वा सत्यं मिथ्या वदाम्यहम् ॥२८॥ तद्बटोर्वचनं श्रुत्वाद्धाकू च तु स्तथेति च ॥ ततश्चकारार्जुनः स शरःसेतुं हि पूर्ववत् ॥२९॥ सेतोरंतर्गतं चक्रं श्रीकृष्णश्चाकरोत्तदा ॥ ततः स्वांगुष्ठभारेण कपिः सेतुं प्रपीडयेत् ॥३०॥ सेतुं दृढं कपिर्ज्ञात्वा पाद जानु करादिभिः ॥ बलेन

पीडयामास सेतुस्तैश्च चचालन ॥ ३१ ॥ तदा तूष्णिं हनुमान्स वीच्चारयामास पूर्वकम् ॥ पूर्वं
मयांगुष्ठभारात्सेतुश्चाब्धौ विलोपितः ॥ ३२ ॥ हस्तादिभिः कथं नायमिदानिं चात्र लुप्यते ॥ कारणं
बटुरेवात्र बटुर्नायं हरिस्त्वयम् ॥ ३३ ॥ हस्तित्यहं विजानामि स्मृतं पूर्वं वरादिकम् ॥ मद्गर्वपरिहारोऽ
द्य कृष्णेनानेन कर्मणा ॥ ३४ ॥ कृतोऽस्त्यत्र क्व कृष्णाग्रे मन्मर्कटसु पौरुषम् ॥ इति निश्चित्य मन-
सि कपिः सोऽर्जुनमब्रवीत् ॥ ३५ ॥ जीतं त्वया बटो यौगान्तव साहाय्यमाचरे ॥ नायं बटुस्त्वयं कृष्णः
सेतु चक्र प्रवेश कृत् ॥ ३६ ॥ त्वत्साहाय्यार्थमायातः सत्यं ज्ञातो मयाऽर्जुन ॥ अनेन रामरूपेण त्रे-
तायां मे वरोऽर्पितः ॥ ३७ ॥ दास्यामि दर्शनं तेऽहं द्वापारे कृष्णरूपधृक् ॥ तत्सत्यं वचनं चाद्य
कृतं त्वत्सेतुहेतुतः ॥ ३८ ॥ इत्यर्जुनं कपिर्यावदब्रवीतावदग्रतः ॥ बटुरेवा भवत्कृष्णः पीतवासा घनप्रभः
॥ ३९ ॥ मद्दर्शनोर्ध्वरोमाभं प्रणनामांजनीसुतः ॥ आलिंगितोऽपि कृष्णेन स मेने कृतकृत्यताम् ॥ ४० ॥
चक्रं ययौ यथास्थानं श्रीकृष्णस्याज्ञया तदा ॥ सागरेण स्ववीचीभिः शरसेतुर्विलोपितः ॥ ४१ ॥ तदार्जुनो
गर्वहीनो मेने कृष्णेन जीवितः ॥ कृष्ण स्तदाऽर्जुनं प्राह त्वया रामेण स्पर्द्धितम् ॥ ४२ ॥ हनुमते धनुर्विद्या
तवातोऽत्र मृषा कृता ॥ यत्प्रतापादिति गिरा त्वयापि वायुनन्दन ॥ ४३ ॥ रामेण स्पर्द्धितं यस्मा तस्माद-
र्जुन संज्ञितः ॥ अतःपरं गतगर्व स्त्वं मां भज निरंतरम् ॥ ४४ ॥ इत्युक्त्वा मारुतिं पृष्ट्वाऽर्जुनेन तत्पु-
रं ययौ ॥ अतः कपिध्वजश्चेति जनैरर्जुन ईर्यते ॥ ४५ ॥ इति भावि कथा पृष्टा त्वया सापि मयोदिता ॥
किमग्रे श्रोतुकामोसि तत्पृच्छस्व वदामि ते ॥ ४६ ॥ विष्णुदास उवाच ॥ गुरोऽधुना राघवस्य वैकुंठा-

रोहणोत्सवम् ॥ मां वदस्व सविस्तारं येनाहं तोषमाप्नुयाम् ॥ ४७॥ रामदास उवाच ॥ पूर्णकांड तवा-
ग्राहं वदिष्यामि श्रृणुष्व तत् ॥ यस्मिन्श्रीरामचन्द्रस्य वैकुंठारोहणोत्सवः ॥ ४८॥ इदं मनोहरं कांड म-
या ते समुदीरितम् ॥ ये श्रृण्वंति नरा भूम्या तेषां रामे मतिर्भवेत् ॥४९॥ मनोऽभिलषितान्कामान् ते
लभंति न संशयः ॥ पुत्रार्थि प्राप्नुयात्पुत्रं धनार्थि धनमाप्नुयात् ॥५०॥ इदं रम्यं पवित्रं च श्रवणान्मं-
गलप्रदम् ॥ पठनीयं प्रयत्नेन रामसद्भक्तिवर्धनम् ॥५१॥ आनंदरामायणमध्य संस्थं- मनोहरं काण्डमि-
दं विचित्रम् ॥ पठंति श्रुण्वंति गृण्हंति मर्त्या स्ते स्वीय कामानखिलान्लभंति ॥५२॥ इदं पवित्रं परमं वि-
चित्रम् नाना चरित्रं त्वतिपुण्यदं च ॥ सदा नरैः श्राव्यमिदं शुभं श्री सीतापतेर्भक्ति विवृद्धकारि ॥५३॥
इति श्रीशतकोटि रामचरितांतर्गत श्रीमदानंदरामायणे वाल्मीकिये मनोहरकांडे हनुमत्ता शर-
सेतुभंगा नामाष्टादशः सर्गः ॥ शुभं भवतु ॥ श्री सीतारामचंद्रार्पणमस्तु ॥

आकोला पृष्ठसंख्या ११२ श्लोकसंख्या ३१०३+७७= ३१८०
गणेशचतुर्थी शके १८७५ रा·अं· जवळेकर

॥श्रीगणेशायनमः॥ श्रीसीतारामचंद्राभ्यांनमः॥ अथ शासति राजेंद्रे रामे सीताति रंजिते ॥ स-
-भायामेकदा दूतः सुषेणस्य गजाव्हयात् ॥१॥ समाययौ विकलः स रामं नत्वा ब्रवीद्वचः॥ राम
राजीवपत्राक्ष सोमवंशोद्भवै नृपैः ॥२॥ संवेष्टितं गजपुरं नलाद्यैश्चिर जीवितैः॥ तद्दूतवचनं श्रु-
-त्वा राघवोऽतीव विस्मितः॥३॥ वसिष्ठं प्राह मद्राज्ये न कदा पार्थिवोत्तमाः ॥ समागता मयायो-
-द्धुं किमिदानीं हि श्रूयते ॥४॥ किं कारणं गुरोचात्र विचारय सविस्तर॥ तद्रामवचनं श्रुत्वा तं
गुरुः प्रत्यभाषत ॥५॥ प्रष्टव्यमद्य वाल्मीकिं येन ते चरितं कृतम् ॥ तच्छ्रुत्वा लक्ष्मणं प्रेष्य समा-
हूयाथ तं मुनिम् ॥६॥ सीतया पूजनं कृत्वा रामो वृत्तं न्यवेदयत् ॥ वाल्मीकिस्तु तदा प्राह रामं
किंचिद्विहस्य सः॥७॥ किं त्वं नवेत्सि राजेंद्र विनोदान् मां तु पृच्छसि ॥ श्रुणुष्व तर्हि वाक्यं स सर्वे
श्रृण्वंतु तेऽप्रियाः ॥८॥ एकादशसहस्राणि वत्सराणि तथा पुनः॥ एकादश समाश्चापि मासास्त्वैका-
दशैव हि ॥९॥ एकादश दिनाश्चात्र राज्यं ते निश्चितं मया ॥ शतकोटि मिते काव्ये पुरैवतेऽवता-
-रता ॥१०॥ तन्मध्येऽत्रह्यतीतानि सहस्राणि तथा समाः॥ अतीताः शेषभूताश्च मासाः शेषं दिनादि-
कम् ॥११॥ अष्टादश दिनैर्न्यूनदग्रे वर्षे प्रभोऽत्रयत् ॥ शेष भूतं संगरेण तत्परिपूर्णं भविष्यति ॥१२॥
अयं कालोऽवतारस्य समाप्तेस्ते समागतः॥ गत्वा भागीरथिं पुण्यां पूर्वजैनवनीतलम् ॥१३॥ प्रापितां
तव राजेंद्र तस्यां स्नात्वा यथाविधि ॥ स्तुतो ब्रह्मादिकैः सर्वैः पदं स्वीयं गमिष्यसि ॥१४॥ तन्मुने
र्वचनं श्रुत्वा राघवो वाक्यमब्रवीत् ॥ एतावत्कालपर्यंतं नलाद्याः कुत्र संस्थिताः ॥१५॥ कुतोऽधुना

समायातास्तत्सर्वं विस्तराद्वद ॥ तद्रामवचनं श्रुत्वा वाल्मीकिर्वाक्यमब्रवीत् ॥१६॥ श्रृणु राम
महाबाहो सर्वं ते कथयाम्यहम् ॥ अत्रिर्मुनिः पुरा राम पौर्णिमायां कृतायुगे ॥१७॥ वैशाख्यामे-
-कदा सोमं दृष्ट्वा नारिमुखोपमम् ॥ मुमोच वीर्यं भूम्यां स तस्मात्पुत्रो बभूवह ॥१८॥ सोम संदर्शना-
ज्जातः सोमाख्यः स बभूवह ॥ सोऽरण्ये जान्हवीतीरे चकार तपमुत्तमम् ॥१९॥ एतस्मिन्नंतरे
तत्र कश्चिद्धस्ति समाययौ ॥ निहतः पक्षिभिस्तत्र तदृष्ट्वा कौतुकं महत् ॥२०॥ सोमो विचा-
-रयामास पक्षिभिर्निहतः करी ॥ अस्या भूम्याः प्रभावोयं पुरं तत्र चकार सः ॥२१॥ हस्ति-
नाशात्पुरं जातं तस्मात्तद्धस्तिनापुरम् ॥ तत्र पौरैः कृतो राजा सोम एव रघूत्तमः ॥२२॥ तस्य जातो
बुधः पुत्रो तावुभौ जगतितलम् ॥ सद्विपं स्ववशं कृत्वा सुरलोकं प्रजग्मतुः ॥२३॥ तत्र जि-
त्वा सुरान्सर्वान्सुरस्त्रीभिश्च संस्तुतौ ॥ मुक्त्वा देवान्स्वर्गलोके निवासं चक्रतुर्मुदा ॥२४॥
तयोर्ददौ वरान्ब्रह्मा युवा मद्वंशसंभवाः ॥ युवाभ्या मोचितस्त्वद्य देवसंघयुतस्त्वहम् ॥२५॥ यु-
वाभ्यां तर्ह्यहं वच्मि वरान् श्रृणुत बालकौ ॥ युष्मद्वंशे नृपाः केचिदूर्ध्वं त्रि पुरुषोर्ध्वतः ॥२६॥ अन्यैः
पराजिताः सप्तपुरुषा न भवंति हि ॥ इति दत्वा वरान्ब्रह्मा ययौ निजपदं प्रति ॥२७॥ ततः सोमाय दौ-
-हित्रि दत्ता पद्मावति शुभा ॥ इंद्रेण तत्र तौ सोम बुधौ स्वैरं स्थितौ चिरम् ॥२८॥ बुधस्य तनयो भू-
म्यां नाम्ना ख्यातः पुरुरवाः ॥ चकार राज्यं धर्मेण तदा तद्धस्तिनापुरे ॥२९॥ तस्य पुत्रः स गव्यो भू-
गव्य पुत्रोऽल्प उच्यते ॥ अल्पपुत्रो नलः श्रीमान् दिग्पालान् जेतुमुद्यतः ॥३०॥ राज्ये पुरुरवादिश्च

-त्रीन् स्थाप्य निजपूर्वजान्॥ सप्तद्विप नृपैर्युक्तः प्रययौ मेरुमुन्नतम्॥३१॥आदौ जित्वा स वन्हि हि यमं जित्वाथ नैऋतिम्॥ प्रययौ वरुणं जेतुं रावणादिभिरन्वितः॥३२॥ एतस्मिन्नंतरे राम तूर्णं सैन्येन रावणः॥ प्रययौ नाकलोकं हि सुरानिंद्रादिकान् रणे॥३३॥ जित्वा निनाय स्वां लंकां सोमो युद्धाय सात्मजः॥ निर्ययौ सुहृदः सर्वान्सेंद्रा मोचयितुं सुरान्॥३४॥ तदा निवारयामास ब्रह्मा सोमं त्वरान्वितः॥ विष्णुर्भूत्वा नृवेषेण रावणं हि हनिष्यति॥३५॥ त्वमाद्य रावणं याहि वरस्तस्मै मयार्पितः॥ तद्ब्रह्मवचनं श्रुत्वा ययौ सोमोऽमरावतीम्॥३६॥भूम्यां नलस्ततो जित्वा वरुणं पवनं तथा॥ जित्वा कुबेरमीशाश्च कृतकार्यमनन्यत॥३७॥आत्मानं च ततः स्वर्गे चंद्रे जेतुं समुद्यतः॥ एवं नलाय भ्रमतागतं तच्च कृतायुगम्॥३८॥ त्रेतायुग समाप्तौ स ददर्श सकलं बलम्॥ तत्रादृष्ट्वा रावणं स दूतात्सुश्रावरौत्विति॥३९॥ देवान्स्ववशगान्कृत्वा लंकां स्वां स गतः पुरा॥ तत्रमार्गे तु भ्रमता नलाय नघुकः सुतः॥४०॥जातस्तस्य जातिकस्तत्सुतो नसया स्मृतः॥ तस्य पुत्रो लघुभ्दूतः सुरथस्तत्सुतः स्मृतः॥४१॥अजमीढस्तु तत्पुत्रस्त्वेवं वंशो भवत्पथि॥ ततः समंत्रयामास नलो मंत्रिजनैः सह॥४२॥किमर्थमिंद्रलोकं तं गंतव्यमधुना यदि॥ भुवि देवाः समानीता लंकाया रावणेन हि॥४३॥अस्माकं सेवकः सोऽस्ति दशास्यः करभारदः॥ निजपुरं प्रगंतव्यमधुना चिरकालतः॥४४॥दिगाश्चयाद्धयं सर्वे जीवितास्मश्चिरं त्विह॥ पुरुरवादिकास्तेनः पूर्वजाः संतिवामृताः॥४५॥ नस्माभिश्चिरकालं हि तद्धृत्तं भ्रमतः श्रुतम्॥ अतः स्वीय पुरं गत्वा द्रष्टव्यास्ते

त्रिपूर्वजाः ॥४६॥ चेत्सोम बुधयोर्नाकं गंतव्यं दर्शनेच्छया ॥ तर्हि ताभ्यां युता देवा किं जीता रावणे-
न हि ॥४७॥ किं ताभ्यां रहिता देवा जीताश्चेति न वेद्म्यहम् ॥ अतस्तत्सकलं वृत्तं विदितं हस्तिना-
पुरे ॥४८॥ भविष्यति ततो युद्धे कर्तव्यं तत्करोम्यहम् ॥ इति निश्चित्य स नलः शनैः स्वनगरं
ययौ ॥४९॥ एतस्मिन्नंतरे राम त्वं जातोस्यवनितले ॥ हत्वा तं रावणं देवा मोचितास्ते दिवंगताः
॥५०॥ सप्तद्वीपांतरस्था ये नृपास्ते स्ववशीकृताः ॥ पुरुरवादिकान् त्रिंश्च निर्बंध्यात्र गजाह्वये ५१
सुषेणः स्थापितः पूर्वं वानरैः सहितस्त्वया ॥ त्रयः पुरुरवाद्यास्ते स्वस्व काले मृतास्त्विह ॥५२॥ इ-
-दानीं ते समायाताः सोमवंशोद्भवा नृपाः ॥ नलाद्याः सप्तस्वपुरं सप्तद्वीपनृपैः सह ॥५३॥ स्वक्रियाये
स्ववशगाः कृता द्वीपांतरस्थिताः ॥ नृपास्तेषा पूर्वजाश्च स्वसैन्यस्ते नृपोत्तमाः ॥५४॥ बलिनः कोटि-
शः सर्वे समायाता गजाह्वयम् ॥ भविष्यति त्वयातैश्च संगरैः सोमवंशजैः ॥५५॥ तदा ब्रह्मा सुरैर्युक्तः
समागत्य तवांतिकम् ॥ पदयोस्ते प्रणामाश्च नलाद्यैः कारयिष्यति ॥५६॥ कृत्वा कः प्रार्थनां तेऽपि
त्वां वैकुंठ प्रणेष्यति ॥ एवं राम सविस्तारं तवाग्रे कथितं मया ॥५७॥ यत्पृष्टं मां त्वया पूर्वं नला-
दीनां कथानकम् ॥ विवाहकांडमारभ्य रम्यं रामायणं शुभम् ॥५८॥ समग्रं हि मयाराम पुरानं
श्रावितं तव ॥ पुत्राभ्यामधुना सर्वं श्रुणुश्व रघुनंदन ॥५९॥ इत्युक्त्वा कुशलवयोश्चकाराज्ञां मुने-
स्ततः ॥ विवाहकांड कांडानि चत्वारि जगतः शिशु ॥६०॥ तत्सर्वं राघवः श्रुत्वा परां मुदमवापसः ॥
विदुः सर्वजनाश्चापि वैकुंठारोहणं प्रभोः ॥६१॥ इति श्रीशतकोटि रामचरितांतर्गत श्रीमदानंद

रामायणे वाल्मीकिये पूर्णकांडे सोमवंशनृपकथानकविस्तारो नाम प्रथमः सर्गः ॥ शुभंभवतु॥
श्रीसीतारामचंद्रार्पणमस्तु॥

॥श्रीगणेशायनमः॥ श्रीरामदासउवाच ॥ अथराम स्तदा प्राह वाल्मीकिं मुनिसत्तमम् ॥ अगंतव्यं
त्वया तत्र मुनिभिस्तु गजाव्हयम्॥१॥ तथेति स मुनिः प्राह राघवं भक्तवत्सलम् ॥ ततः लक्ष्मणं
शीघ्रं राघवो वाक्यमब्रवीत् ॥२॥पत्राणि प्रेषयस्वाद्य कुमारान् राज्यसंस्थितान्॥ स्व स्व राज्ये
मंत्रिणश्च कृत्वात्रागम्य तां बलैः॥३॥एवमेव विलेख्यानि जंबुद्विपपतीन्वरान्॥ तथा द्वीपपतिं-
श्चापि दूतास्तान त्वरयंतु नः॥४॥ तथेति लक्ष्मणश्चोक्त्वा तथा चक्रे यथोदितः॥ राघवेण सभाम-
ध्ये वाल्मीकि गुरुसन्निधौ॥५॥ ततः प्राह पुनः श्रीमान् राघवः लक्ष्मणं मुदा ॥ वासोगेहानि सर्वाणि
बहिर्मम रघुद्वह॥६॥ मुहुर्तो वर्तते श्वो वै सेनां चोदयसादरात्॥आयुधान्यथ यंत्राणि जीर्णानि
च बहूनि हि॥७॥ पूर्वजैर्निहितान्येव कोशागारेषु वै सदा॥ तानि निष्काषनीयानि तेषां कालोऽद्य
वर्तते॥८॥अंतःपुराणि सर्वाणि बहिर्नेयानि मेऽग्रतः॥ अग्निहोत्र पुरस्कृत्य सीताप्यग्रेनुगच्छतु
॥९॥कोशागराणि सर्वाणि बहिर्नेयानि वाहनैः॥हस्त्यश्व रथ पादाता नेयाः सर्वे बहिस्त्वया॥१०॥
इत्याज्ञाप्य रघुश्रेष्ठो लक्ष्मणं विनयान्वितम्॥ मंत्रिणो नैगमांश्चैव वसिष्ठं चेदमब्रवीत्॥११॥
अभिषेक्ष्यामि भरतं सप्तद्वीपपतेः पदे॥ लक्ष्मणो मां विना नैव भूम्यां वासं करिष्यति॥१२॥ एवं वद-
ति राजेंद्र पौरास्ते भयविव्हलाः॥द्रुमाइवच्छिन्नमूला दुःखार्ता पतिताभुवि॥१३॥ मुर्छितो भरतश्चा
पि श्रुत्वा रामाभि भाषितम्॥ गर्हयामास राज्यं स प्राह दुःखद्रघूत्तमम्॥१४॥सत्येन तु शपेनाहं
त्वां विना दिविता भुवि॥कांक्ष्ये राज्यं रघुश्रेष्ठ शपे त्व सदयोः प्रभो॥१५॥अमुं योग्यं वरं राज्यन्नभि

षिंचस्व राघव ॥ अयोध्यायां कुशवीरं सप्तद्वीपपतेः पदे ॥१६॥ लवोऽभिषेचितः पूर्वं स एव तेषु ग-
च्छतु ॥ १७॥ भरतेनोदितं श्रुत्वा पतिता स्ताः समीक्ष्य च ॥ प्रजा वै भयसंविग्ना राम विश्लेषकातराः
॥१८॥ वसिष्ठो भगवान् राममुवाच सदयं वचः ॥ पश्यता तादरात्सर्वाः पतिता भूतले प्रजाः ॥१९॥ ता
सां भावानुगं राम प्रसादं कर्तुमर्हसि ॥ श्रुत्वा वसिष्ठवचनं ताः समुत्थाप्य पूज्य च ॥२०॥ सस्नेहो रघु-
नाथ स्ताः किं करोमितिचाब्रवीत् ॥ ततः प्रांजलयः प्रोचुः प्रजा भक्त्या रघुद्वहम् ॥२१॥ गंतुमिच्छसि
वैकुंठं त्वमस्माकं नय प्रभो ॥ यत्र गच्छेसि त्वं राम ह्यनुगच्छामहे वयम् ॥२२॥ अस्माकमेषा परमा
प्रीती धर्मोयमक्षयः॥ तवानुगमने राम हृद्भूतानो दृढामतिः ॥२३॥ पुत्रदारादिभिः सार्द्धमनुयामोद्य स-
र्वथा॥ तपोवनं वा स्वर्गं वा पुरं वा रघुनंदन ॥२४॥ ज्ञात्वा तेषां मनोदार्ढ्यं कारुण्याद्रघुनायकः ॥ भक्तं
पौरजनं दीनं बाढमित्यब्रवीद्वचः ॥२५॥ कृत्वैव निश्चयं राम तस्मिन्नेवावनि प्रभुः॥ कुशं तमभिषिक्तुं
वै चोदयामास लक्ष्मणम् ॥२६॥ सौमित्रिश्चापि गुरुणा विप्रै पौरजनै स्तदा॥ शोभयित्वा स्वनगरीं
मुदातमभ्यषेचयत् ॥२७॥ अभिषेके कुशस्यासीन्महोत्साहो गृहे गृहे॥ रामावरोधे सुमहान्समुत्साह
स्तदाभवत् ॥२८॥ तदा सिंहासनासीनः छत्रचामर शोभितः ॥ प्रजाः सर्वा कुशपतिं प्रणामं चक्रुरादरात्
॥२९॥ तदा कुशनृपो विप्रान्धनंबरतरं ददौ ॥ प्रजा स्तं पूजयामासुर्वस्त्रालंकारवाहनैः ॥३०॥ ततः प्रपू-
जयेत्सर्वाः प्रजाः स कुशभूपतिः॥ भोजयामास विप्राद्यान्कोटिशः स कुशेश्वरः ॥३१॥ अथ रामाज्ञया
शीघ्रं सौमित्रिः सीतयासह॥ अंतः पुराणि सर्वाणि निनाय नगरींबहिः ॥३२॥ नानावाहनसंस्थानि

नृत्यवाद्यादि मंगलैः ॥ ततो रामः स्वयं बंधुपुत्राद्यैः सर्वतो वृतः ॥ ३३ ॥ मुनिभिर्जयशब्दैश्च स्तुतो
मंगलनिस्वनैः ॥ अयोध्याया बहिः पौरैर्ययौ मागधसंस्तुतः ॥ ३४ ॥ रथारूढश्चामराद्यैर्विजीतैश्च शनै
र्मुदा ॥ विवेश बासो गेहानि तदा रामो जनैः सह ॥ ३५ ॥ न नृतुर्वरनार्यश्च तदा श्रीराघवाग्रतः ॥ त-
-तः पौरा सावरोधाश्चांडाला ता विनिर्ययुः ॥ ३६ ॥ निन्युस्ते सारमेयां तान् पुर्याः पौराश्च तोषदा-
न् ॥ नासन्पक्षिकुलैा ताद्यास्तत्पुर्यां ते बहिर्ययुः ॥ ३७ ॥ नासित्कोऽपि तदा पुर्यां जनैः शुन्या ब-
भूव सा ॥ अयोध्यानगरीं पुण्या गजभुक्तकपित्थवत् ॥ ३८ ॥ एतस्मिन्नंतरे सर्वे द्विपांतर निवासि-
-नः ॥ जंबुद्विपांतरस्थाश्च ययुः सैन्यै नृपोत्तमाः ॥ ३९ ॥ कोटिशो राघवं नेमु स्ततो नेमुः कुशेश्व-
रम् ॥ उपायनानि रामाय कुशाय च पृथक् पृथक ॥ ४० ॥ दत्वा संपूजितास्ताभ्यां तस्थुः सर्वे नृ-
पोत्तमाः ॥ ततोंऽगद श्चित्रकेतुः पुष्करस्तक्ष एवच ॥ ४१ ॥ सुबाहुर्युपकेतुश्च ययुः सर्वे निजैर्ब-
लैः ॥ सावरोधा सपुत्राश्च स पौत्रास्ते स्नुषादिभिः ॥ ४२ ॥ प्रणेमु राघवादिंश्च सीतादिश्चापि सादरा
त् ॥ रामेणालिंगिताः सर्वे सीतया भोजिताअपि ॥ ४३ ॥ तस्थुः सर्वे सभायां ते स्वस्व पौरजनैः स-
ह ॥ तदागतानृपान्सर्वान् रामो वृत्तं न्यवेदयत् ॥ ४४ ॥ पुनः पप्रच्छतान् सर्वान्संस्थितान् रघुनंद-
नः ॥ युष्माकं पूर्वजाः सर्वे समायाता गजाव्हये ॥ ४५ ॥ भव तां रोचते युद्धं यदि तैः पूर्वजैः सह ॥
आगंतव्यं तर्हि सर्वैर्मयासह गजाव्हयम् ॥ ४६ ॥ नोचेद्भवद्भिर्गंतव्यमित एव निजं स्थलम्
निर्बंधोऽत्र न मे ज्ञेयः सर्वैः पार्थिवसत्तमैः ॥ ४७ ॥ इति रामवचः श्रुत्वा नृपा राघवमब्रुवन् ॥ राम

राम महावीर्य वयं सर्वे तवानुगाः ॥४८॥ त्वयै ववर्द्धिताः सर्वे तवान्नैः पोषिता वयम्॥ वीराः क्षत्रियवंशिया रणे तात प्रहारिणः ॥४९॥ तवाज्ञया वधामोद्य पितृपुत्रान् रणाजिरे ॥ नास्मान् त्वं विद्धि राजेंद्र स्वामिकार्ये पराङ्मुखवान् ॥५०॥ इति तेषां वचः श्रुत्वा तान्समालिंग्य राघवः ॥ संपूज्याभरणैर्वस्त्रैः सुखं सुष्वाप सीतया ॥५१॥ ततः प्रभाते श्रीरामो गत्वा तां शरयू नदीम् ॥ स्नात्वा दानानि वै दत्वा सीतया विधिपूर्वकम् ॥५२॥ नत्वा तां सरयूं पुण्यां गंतुं पप्रच्छ वै मुहुः ॥ तद्रामवचनं श्रुत्वा सरयू राममब्रवीत् ॥५३॥ एतावत्कालपर्यंतं स्थित्वा त्वं दर्शनेच्छया॥ अहमद्य त्वया राम यास्यामि त्वत्पदंत्वितः ॥५४॥ तत्तस्या वचनं श्रुत्वा तामाह राघवः पुनः ॥ यावत्कथा मम शुभा स्थास्यत्यत्रघनाशनि ॥५५॥ तावत्त्वमंशरूपात्र वस लोकाघनाशनि ॥ तथेति रामवचनादंशरूपं निधाय सा ॥५६॥ साकेतेत्र पूर्णरूपा ययौ रामेण तत्पदम् ॥ अथ रामः सरय्व्या सो परिक्रम्य निजां पुरिम् ॥५७॥ साष्टांग तां नमस्कृत्य गंतुं पप्रच्छ पूज्य च ॥ अयोध्येंऽब नमस्तेऽस्तु त्वयाहं रक्षितस्त्विह ॥५८॥ आज्ञां ददस्व पृच्छामि स्वस्थलं गंतुमुद्यतः क्षमस्व मेऽपराधास्त्वं पुनर्दर्शनमस्तु ते ॥५९॥ इति राम वचः श्रुत्वा पुरी राघवमब्रवीत् ॥ एतावत्कालपर्यंतं स्थिता त्वद्दर्शनेच्छया ॥६०॥ यास्ये त्वया समर्था नसोढं त्वद्विरहं त्वहम् ॥ तत्तस्या वचनं श्रुत्वा पुरीं प्राह रघुत्तमः ॥६१॥ यावत्कथा मम शुभा स्थास्यत्यत्रघनाशनि ॥ तावत्त्वमंशधृग्रूपा वसात्र मृण्मयि चिरम् ॥६२॥ तथेति रामवचनादंशरूपात्र मृण्मयि ॥ अयोध्या संस्थि-

ता दिव्या हैमी रामेण सा ययौ ॥६३॥ अयोध्यया सरय्व्यापि रामः सेनास्थलं ययौ ॥ अयो-
ध्यायाःसरय्व्याश्च प्रभावो न गतौत्वितः ॥६४॥ अथ सीता महानागीमारुरोह सखीजनैः॥ पृथ-
क् नागीषूर्मिलाद्यास्ताः समारुरुहुस्तदा ॥६५॥ अथ रामो मुदा वेगात्समारुह्य गजोपरि ॥ उवाच ल-
क्ष्मणं वाक्य पुष्पके सकलान् जनान् ॥६६॥ पौरानारोहयस्व त्वं बंधुभ्यां च सुतादिभिः॥ नागारूढैः
पृथक् शीघ्रं समारुह्य गजोपरि ॥६७॥ अनुगच्छस्व मत्पृष्ठे लक्ष्मणः स तथाकरोत्॥ अथ सर्वे नृप
तयो नाना यानेषु संस्थिताः॥६८॥ ययुः स्वस्व बलैर्युक्ता शीघ्रं श्रीरामपार्श्वतः॥ ययावग्रेत्वग्रसरो
रज्जु कुद्दालधारिभिः ॥६९॥ दृषत्कार तक्षकैश्च कुठारटंकि पाणिभिः॥ ततो ययो महानागः पताका
ध्वज शोभितः ॥७०॥ ततो ययौर्यंत्रहस्ता नानावाहनसंस्थिताः॥ ततो ययौ शतघ्नीभिः पूरिताः
शकटाः शुभाः ॥७१॥ ततोऽश्वसंस्था वाद्यानि वादयंतो ययुर्भटाः॥ ततोऽश्वसंस्था शतशो ययुस्ते
वेत्रपाणयः॥७२॥ ततो ययुर्मागधाश्च बंदिनो यानसंस्थिताः॥ ततो नटाश्चारणाश्च यानस्थाः सुवि-
भूषिताः ॥७३॥ ततस्ता वारनार्यश्च काष्टमंचकवाहिताः॥ मस्तकेषु भटैर्मार्गे नृत्यंत्यः प्रययुः सुख-
म्॥७४॥ ततो ययु भूषितास्ते श्रीरामस्य तुरंगमाः॥ ययुस्तलुण्यः शतशः शस्त्रहस्ताः सुभूषिताः
॥७५॥ ततः पुरुषवद्वेषान्बिभ्रंत्यः प्रमदोत्तमाः॥ गोपितास्याः कंचुकिन्यस्तुरंगादिषु संस्थिताः ७६
ततो ययुर्दंडहस्ता दासीपुत्रा सुभूषिताः॥ ततो ययौ रामचंद्रस्तत्पृष्ठे लक्ष्मणो ययौ॥७७॥ तत्पृ-
ष्ठे भरतश्चापि शत्रुघ्नश्च ततो ययौ ॥ ततः कुशो लवश्चाथ ततः सह्यंगदो ययौ ॥७८॥ ययौ त-

-तश्चित्रकेतुः पुष्करश्च ततो ययौ ॥ ततस्तक्षः सुबाहुश्च यूपकेतुस्ततो ययौ ॥ ७९॥ ततः सी-
ता ययौ शीघ्रमुर्मिला च ततःपरम् ॥ मांडवी श्रुतिकीर्तिश्च स्नुषाः सर्वाः क्रमाद्ययौ ॥ ८०॥ ततस्ते
मंत्रिणः सर्वे शिबिकाश्च प्रभोस्ततः ॥ ततो ययुर्वानराश्च कोटिशः पर्वतोपमः ॥ ८१॥ ततो ययुर्नृ
पाः सर्वे कोटिशो वारणस्थिताः ॥ ततो नृपाणां सैन्यानि ययुर्वाजीस्थितानि हि ॥ ८२॥ ययुस्त-
तस्ते यंत्राणां शकटाः कोटिशो वराः ॥ शतघ्नी खड्ग चर्मादि पूरिताः शकटास्ततः ॥ ८३॥ त-
तो वारणमुख्याश्च नववाद्यसमन्विताः ॥ ततश्चोष्ट्रा सुबाणानां ततःपृष्ठ सरादयः ॥ ८४॥ ए-
वं रामःशनैर्मार्गे चामराद्यैः सुवीजितः ॥ सीतया जालरंध्रैश्च विक्षितश्च मुहुर्मुहुः ॥ ८५॥ ययौ
शनैः शनैः श्रीराम् स्तुतो मागधबंदिभिः ॥ पश्यन्नृत्यान्यप्सरसां श्रृण्वन्स गायनान्यपि ॥ ८६॥
सेनानिवेश स्थानानां यात्राकांडे यथोदिता ॥ मया पूर्व सुरचना तद्वदासीत्पुनस्त्विह ॥ ८७॥
इति श्रीशतकोटि रामचरितांतर्गत श्रीमदानंद रामायणे वाल्मीकिये आदिकाव्ये पूर्णकांडे
रामदास विष्णुदास संवादे राम प्रस्थानं नाम द्वितीयः सर्गः ॥ शुभं भवतु ॥ श्रीसीतारामचंद्रा
र्पणमस्तु ॥

॥श्रीगणेशाय नमः ॥ अथ रामः शनैर्मार्गे नानादेशान्विलंघ्य च ॥ एकादश दिनैः प्राप सेनया तद्ध-
जान्हयम् ॥१॥ राममागतमाज्ञाय सुषेणो वेगवत्तरः ॥ प्रत्युद्ययौ स कपिभिर्विंशल्लक्ष समन्वितैः ॥२॥ न-
त्वा रामं च सीतां च सर्वं वृत्तं न्यवेदयेत् ॥ राम राम महाबाहो प्रतापात्तव वै मया ॥३॥ चतुर्दश दिनं
युद्धं कृत मेऽभिः सुदुष्करम् ॥ अधुना त्वं समायातः क्वै ते स्थास्यंति भूतले ॥४॥ सुषेणश्च वचश्चेत्थं
श्रुत्वा तमर्चयत्प्रभुः ॥ अथ रामः स जान्हव्याश्चोत्तरे परमे तटे ॥५॥ सेना निवासमकरोद्ददर्श रिपुवा-
हिनिम् ॥ तां निशां समतिक्रम्य द्वितिये दिवसे ततः ॥६॥ चोदयामास युद्धाय वानरान्रघुनंदनः ॥
तत स्ते वानराः सर्वे जान्हव्यामवप्लुत्य च ॥ ७॥ रामं सीतां नमस्कृत्य निर्ययुः समरं मुदा ॥ तत स्ते
वानराश्चक्रुः सिंहनादान्भयप्रदान् ॥८॥ वादयामासु र्वाद्यानि दुद्रुवुः शत्रुवाहिनिम् ॥ नलाद्या स्तेऽपि श्री-
रामसेनां दृष्ट्वाऽतिविस्मिताः ॥९॥ चकिता भयभीताश्च निर्ययुः संगरं जवात् ॥ तत स्ते वानराः सर्वे
गंगामुल्लंघ्य वेगतः ॥१०॥ दृषद्भिः पर्वतैर्वृक्षैः शिलाभिर्मुष्टिभिः पदैः ॥ निजघ्नुः शत्रुवीरान् ते कीर्तयंतो र-
घूत्तमम् ॥११॥ नलवीराश्च ते सर्वे शस्त्रैस्तीक्ष्णै कपीश्वरान् ॥ निजघ्नु समरे वेगाद्बभूव तुमलो रणः ॥१२॥
अथ तै र्वानरै सर्वैर्बलाद्वृक्षैः प्रपीडिताः ॥ पराङ्मुखाःकृताः सर्वे रणाते नलसैनिकाः ॥१३॥ तान्दृष्ट्वा
ते नलाद्याश्च रणाद्वीरान्पराङ्मुखानं ॥ निहतान्कपि वीरैश्च चोदयन्नृपति स्तदा ॥१४॥ तत स्ते पार्थि-
वाः सर्वे जंबुद्वीपनिवासिनः ॥ तथा द्वीपांतरोद्भूता ये वृध्दाश्च पुरोदिताः ॥१५॥ ययु र्युध्दाय सन्नध्दा
नानावाहन संस्थिताः ॥ तान्सर्वानागतान्दृष्ट्वा ययुः श्रीरामसैनिकाः ॥१६॥ जंबुद्वीपांतरस्थाश्च तथा

द्वीपांतरस्थिता ॥ युवानश्च नृपाः सर्वे नानावाहनसंस्थिताः ॥१७॥ सुग्रीवश्चांगदश्चाथ हनुमान्श्च बिभीषणः ॥ जांबवान्श्च सुषेणश्च संपातिर्मकरध्वजः ॥१८॥ गुहको भूरिकीर्तिश्च कंबुकंठः प्रतापवान् ॥ अथान्ये जनकाद्याश्च ययुः संग्रामभूतलम् ॥१९॥ तदोभयोर्महानासीत्सैन्ययो वीरनिस्वनः ॥ नववाद्यानि वै नेदुरुभयोः सैन्ययोः पृथक् ॥२०॥ तदा ब्रह्मादयो देवाः शिवेन सहिताश्च खे ॥ स बुधेनाथ सोमेन देवेंद्रेण युता मुदा ॥२१॥ नाना विमानमारूढा ददृशुर्युद्धकौतुकम् ॥ अथ चंद्रादयो देवाश्चक्रुर्मंत्र परस्परम् २२ महाभयं समुत्पन्नं प्रलयोऽद्य भविष्यति ॥ ब्रह्मदत्त वराश्चै ते सोमवंशोद्भवा नृपाः ॥२३॥ रामो विष्णुरयं साक्षात्कथं जय पराजयौ ॥ भविष्यतः कथं युद्धा निवृत्तिरुभयोरपि ॥२४॥ भविष्यति क उपायः कार्यो युद्धनिवारणे ॥ तदा ब्रह्मा सुराणाना किंचिद्दृष्ट्वा वयं रणम् ॥२५॥ करिष्याम स्तयो सरव्यं रामसोमजयोस्त्विह ॥ इत्युक्त्वा सकलान्वेधा ददर्श रणकौतुकम् ॥२६॥ अथोभयो सैन्ययोश्च बभूवुर्यत्र निस्वनाः ॥ यंत्रोत्थ वन्हिज्वालाभिर्व्याप्तादशदिशोऽभवन् ॥२७॥ यंत्रोत्थ नागकुटिकाभिर्जघ्नु स्ते परस्परम् ॥ शतघ्नीभिस्तथा जघ्नुः शकटस्थाभिरादरात् ॥२८॥ तथा वीरानि जघ्नु स्ते बाणैः खड्गैः परस्वधैः ॥ परस्परं तोरणैश्च भिंडिपालैश्च मुद्गरैः ॥२९॥ परिघैश्चक्र बाणैश्च कुंतैः शूलैश्च पट्टिशैः ॥ तदा जघान पितरं पुत्रः पुत्रं तथा पिता ॥३०॥ पितामह स्तथा पौत्रं पौत्रश्चापि पितामहम् ॥ अन्योन्यं कुलजात्यारव्यादिकं संश्राव्य वै मुहुः ॥३१॥ तथा रणे प्रपौत्राय जघान प्रपितामहः ॥ तथा बाणैः प्रपौत्रोऽपि जघान प्रपितामहम् ॥३२॥ मातामहं तु दौहित्र स्तदा बाणै प्रताडयत् ॥ तथा मातामहश्चापि दौहि

त्राय रणे हनत् ॥३३॥ एवं परस्परं चासीद्युद्धं तं लोमहर्षणम् ॥ तत्र ये ये हता वीराः संगरे रामसेव-
काः ॥३४॥ तान्सर्वान्जीवयामास तदा पवननंदनः ॥ द्रोणाचलौषधीभिश्च वारंवारं स्वसैनिकान् ॥३५॥
रिपु सैन्ये मृता ये ये ते मृता एव नोत्थिताः ॥ एवं तदा सोमवंश सैनिका स्ते क्षणं ययुः ॥३६॥ तदा लो-
हित पूरा सा बभूव सुरनिम्नगा ॥ अर्क पद्म मिता सेना नलादीनां तदा रणे ॥३७॥ निपातिता राघवीयै र्नृ-
पैः सा बहु संगरैः ॥ एवं बभूव समरः षण्मासं हस्तिनापुरे ॥३८॥ ततस्ते सोमवंशस्था नृपाः किंचिद्ब-
लैर्युताः ॥ विषण्णा विगतोत्साहा निर्ययुः संगरं स्वयम् ॥३९॥ तानागतान्तदा वीक्ष्य कुशाद्या बालका-
श्च ते ॥ रामादीनां ययु स्त्वग्रे रथस्था रणभूतलम् ॥४०॥ नलं ययौ कुशः शीघ्रं नघुकं स ययौ लवः ॥
जातिकर मंगदश्च तथा त्वनस यो नृपम् ॥४१॥ चित्रकेतुर्ययौ शीघ्रं तथा लघुभृतं नृपम् ॥ ययौ स पुष्करः
शीघ्रं तक्षोऽथ सुरथं ययौ ॥४२॥ अजमीढं सुबाहुश्च यूपकेतुर्ययौ बलम् ॥ यूपकेतुं हि तत्सैन्यं चका-
रा गोचरं शरैः ॥४३॥ वायव्यास्त्रेण चिक्षेप लव स्तल्लवणांभसि ॥ तदा ते सप्त वीराश्च नलाद्याः पर्वता
इव ॥४४॥ युयुधु रघुवीरस्य बालकैः सहसंगरे ॥ न विरेजुर्बलै र्हीनाः स्कंदहीन नगोपमाः ॥४५॥ कु-
शो विव्याध बाणै स्तं नलं संग्राममूर्द्धनि ॥ तदा नलः प्रभिन्नांगः स्वबाणै स्तं व्यतर्जयत् ॥४६॥ ततः
कुशः स्वबाणौघै नलस्याश्वान्ध्वजं धनुम् ॥ छत्रं सारथिनं छित्वा नलं बाणैरताडयत् ॥४७॥ नघुकं चापि
विव्याध स्वबाणौघै र्लव स्तदा ॥ नघुकश्च लवं बाणै स्तदा व्याकुलमातनोत् ॥४८॥ नघुकं निजबाणौ-
घैश्चकार विरथं लवः ॥ एवं जातिकरं बाणैरंगदः सं प्रताडयत् ॥४९॥ प्रताड्य जातिकरः परिघेणांगद -

स्तदा ॥ ततो जातिकरं बाणे रंगदो पातयत्भुवि ॥५०॥ चित्रकेतुः स्वबाणौघैः क्रोशे त्वनसयो नृपम् ॥
चिक्षेपस्यंदनाद्वेगा तदद्भुतमिवा भवत् ॥५१॥ तथा लघुभृतो बाणे हृदि विव्याध पुष्करम् ॥ तदा
स पुष्करः क्रोधा बाणे र्लघुभृतः रथे ॥५२॥ भित्ति चित्रोपमं कृत्वा वादयामास दुंदुभिः ॥ सुरथ-
श्चापि तक्षं स ववर्ष शरवृष्टिभिः ॥५३॥ तत स्तक्षः स्वबाणौघैः सुरथं गगनांगणे ॥ सरथं भ्रामया-
मास शुष्कपर्णं यथा मरुत् ॥५४॥ अजमीढ स्तदा सर्वान्पूर्वजान् व्याकुली कृतान् ॥ वीक्ष्य रामा-
त्मजाद्यै स्ते ववर्ष शरवृष्टिभिः ॥५५॥ सुबाहु स्तं स्वबाणौघैश्चकार विरथं तदा ॥ अजमीढ स्ततोऽ-
न्ये स रथे स्थित्वा ययौ पुनः ॥५६॥ मुमोच पवनास्त्रं स कुशादीनां विधे क्रुधा ॥ तद्दृष्ट्वा यूपकेतु
स्तं पन्नगास्त्रं मुमोच सः ॥५७॥ तदा ते कोटिशः सर्पा प्रपिबुः कंपनं क्षणात् ॥ रथस्थः स नलः स-
र्पान्दृष्ट्वा गारुडमुत्तमम् ॥५८॥ मुमोच पन्नगास्त्रस्य निवृत्यर्थं तदास्त्र वित् ॥ तदा कुशः प्रमुमो-
च राक्षसास्त्रं भयावहम् ॥५९॥ नघुकश्च तदा वेगाद्ब्रह्मस्त्रं तं मुमोच सः ॥ तदा क्रोधाल्लवश्चापि मे-
घास्त्रं तं विसर्जयेत् ॥६०॥ तदा लघुभृतश्चापि पवनास्त्रं तं मुमोच सः ॥ तदा स हनुमान्शीघ्रं व्यादा-
य विकटाननम् ॥६१॥ प्रपिबन्मरुतन्वेगान्ननाद जलद स्वनः ॥ एवं तच्च महद्युद्धं पुष्पका रामसं-
स्थितौ ॥६२॥ सीता रामौ मुदायुक्तौ लक्ष्मणाद्यै ददर्श तुः ॥ एवं युद्धं पंचमासान्सैकादश दिना-
न भूत् ॥६३॥ एकादशदिना मार्गे गतास्तेऽस्मिन्समीरिताः ॥ एवमेकादशैर्मासै रेकादश दिनैरपि
॥६४॥ त्रेतायुग भवैर्दिव्यैः समाप्तिः संगरस्य च ॥ अदृष्ट्वा स कुशो वेगाद्ब्रह्मास्त्रं संदधे तदा ॥६५॥
इति श्रीब्रात॰ श्रीमदा॰ रा॰ वा॰ पूर्णकांडे सोमवंश सूर्यवंशोद्भव नृपाणां युद्धवर्णनं नाम तृ॰ सर्गः

आकोला
ता॰ १६-९-५३

॥श्रीगणेशायनमः॥ ब्रह्मास्त्रं संदधानं तद्दृष्ट्वा वेधाः सुरैः सह ॥ सोमेन च बुधेनापि विमानेन ययौ भुवम् १
विमानादवरुह्याथ तदा ब्रह्मा कुशं ययौ ॥ कुशं तं प्रार्थयामास मा त्वमस्त्रं विसर्जय ॥२॥ पालयस्व वचो मे-
ऽद्य नाके सोमाय वै मया ॥ द्वापारांतं वरो दत्तस्त्वजेयाश्च रणाजिरे ॥३॥ भविष्यति नलाद्याश्च सर्वे युष्म-
त्कुलोद्भवाः पुरात्विति सुराग्रे हि कस्मिंश्चित्कारणांतरे ॥४॥ अत स्त्वं कुशमास्त्रं मे नलाद्येषु विसर्जय ॥
तद्ब्रह्मवचनं श्रुत्वा कुशो वाक्यमथाब्रवीत् ॥५॥ अधुना क्षणमात्रेण सर्वान्दग्धान्करोम्यहम् ॥ नोचेत्कथ-
य रामाय तस्याज्ञां मानयाम्यहम् ॥६॥ यदा त्वया वरो दत्त स्तदा किं विदितं तव ॥ नासीच्छ्रिरामसामर्थ्यं
ह्यधुना प्रार्थ्यसे मुधा ॥७॥ त्वयि चेद्वर्तते किंचित्सारं कर्तुं रणं मया ॥ तर्हि कुरुष्व साहाय्यं नलादीनां सुरैर्युतः
॥८॥ त्वया रणे संगरोद्य मम पश्य तु राघवः ॥ सीताऽपि पुष्पकासीना जालरंध्रैश्च पश्यतु ॥९॥ एवं कुश-
स्य वचनं श्रुत्वा लज्जायुतो विधिः ॥ सोमेनाथ बुधेनापि नलाद्यान्प्राह वेगतः ॥१०॥ रे रे मूढाः श्रृणुध्वं मे व-
चनं हि गतायुषः ॥ साक्षान्नारायणं रामं यूयं योद्धुं समुद्यताः ११ केनेयं शीक्षिता बुद्धि सर्वेषां घातकारि-
णि ॥ गच्छध्वं शरणं रामं नोचेद्यूयं मरिष्यथ ॥१२॥ मयायं जनकः साक्षाद्रामो विष्णुर्नसंशयः ॥ इति धि-
क्कृत्य तान्वेधा कुशं वचनमब्रवीत् ॥१३॥ यावद्यास्याम्यहं रामात्पुनस्त्वं कुश बालक ॥ तावच्चेन्मोक्षसे बा-
णं तर्हि मां हतवानसि ॥१४॥ इत्युक्त्वा तं कुशं वेधा नलाद्यैः परिवेष्टितः ॥ ययौ रामं सुरैर्युक्तः पुरस्कृत्य
वृषध्वज ॥१५॥ शिवमागतमाज्ञाय पुष्पकाद्रघुनंदनः ॥ प्रत्युद्गम्य शिवं नत्वा प्रणनाम ततो विधिम् ॥१६॥
तत स्तान्पूजयामास शिवादिन्रघुनंदनः ॥ ततः सभायां रामाय तिष्ठन्वेधा नलादिभिः ॥१७॥ प्रणामा-

न्कारयामास सोमेन च बुधेन च ॥ ततस्तान्सहसोत्थाय रामचंद्रः करेण हि ॥१८॥ श्रुत्वा तेषां हि ना-
मानि विधेरास्यात्पृथक्पृथक् ॥ ततः पप्रच्छ वेगेन ब्रह्माणं पुरतस्थितम् ॥१९॥ सर्वे किमर्थमानीतास्त्व-
त्रै ते सोमवंशजाः ॥ वद त्वं कारणं शीघ्रं सत्यमेव ममाग्रतः ॥२०॥ तद्रामवचनं श्रुत्वा रामं वेधा वचोऽ
ब्रवीत् ॥ राम राम महाबाहो पालयस्वाद्य मे वचः ॥२१॥ रक्षस्वै ता नृपानद्य वरदानान्मम प्रभो ॥ द्वापारां-
तमजेयत्वं दत्तमस्ति मया पुरा ॥२२॥ ममास्त्रं संदधानं तं निवारय कुशं सुतम् ॥ इति तद्वचनं श्रुत्वा विह -
स्य रघुनायकः ॥२३॥ सभायामाह ब्रह्माणमजेयत्वं त्वयोदितम् ॥ क्व गतं चाद्य समरात्किमर्थमिह चागताः
॥२४॥ तद्रामवचनं श्रुत्वा रामं प्राह विधिः पुनः ॥ सर्वेषां पुरतो मेऽस्ति बलं न तु तवाग्रतः ॥२५॥ त्वं तु
मे जनकः साक्षादतस्त्वां प्रार्थयाम्यहम् ॥ ततो रामः पुनः प्राह विहस्य चतुराननम् ॥२६॥ न श्रोष्यति वचो
मेऽद्य कुशोऽयं यौवनस्थितः ॥ प्रायः कुमारा वृद्धानां वाक्यमग्रे भजंति नः ॥२७॥ अन्यच्चापि शृणुष्व
त्वं यच्छास्त्रेऽप्युच्यते वचः ॥ लाडयेत्पंच वर्षाणि दशवर्षाणि ताडयेत् ॥२८॥ प्राप्ते तु षोडशे वर्षे पुत्रं
मित्रवदाचरेत् ॥ अत स्ते बालकाः सर्वे कुशाद्याः स्वार्थतत्पराः ॥२९॥ न श्रोष्यंति वचो मेऽद्य तान्गत्वा
प्रार्थयस्वहि ॥ ततः प्राह पुनर्ब्रह्मा रणक्रोधात्कुशो मया ॥३०॥ वाक्यं रम्यं मंजुलं च नैवाद्य वदति प्रभो ॥
ततः प्राह विधिं रामः पुनर्वाक्यं विनोदयन् ॥३१॥ विधे त्वं गच्छ वाल्मीकिं स त्वां युक्तिं वदिष्यति ॥ ततः
स रामवाक्येन वाल्मीकिं पुष्पकस्थितम् ॥३२॥ मुनिभि र्मुनिशालायामूर्ध्वे संवेष्टितं विधिः ॥ नलाद्यैः सहि-
तो गत्वा नत्वा वृत्तं न्यवेदयत् ॥३३॥ विधिं प्राहाथ वाल्मीकिर्ज्ञात्वा राममनोगतम् ॥ स्त्रीलब्ध जीविता-

श्चे ते भवंतु सुखिनस्त्विति ॥३४॥ नलादिनां स्त्रियः सर्वाः प्रार्थयं तु विदेहजाम् ॥ कुशोऽपि जानकीवाक्या-
च्छांति मेष्यति बालकः ॥३५॥ तथेति ते नलाद्याश्च दूतान्प्रेष्याथ सादरम् ॥ आनीय स्वकलत्राणि शतशानि
तदा जवात् ॥३६॥ जानकिं प्रेषयामासु स्ता सर्वाः पार्थिव स्त्रियः ॥ उपायनानि संगृह्य जानकिं प्रययुर्जवात् ३७
ददृशुर्जानकी नारीशालायां स्वसखीवृताम् ॥ स्नुषाभिः सेवितपदां पर्यंके निद्रितं मुदा ॥३८॥ ताः स्त्रीः समा-
गता सीता दृष्ट्वा चामरवीजिता ॥ मंचकादवरुह्याथ धृतपार्श्वोपबर्हणा ॥३९॥ स्वपृष्ठे मंचकं कृत्वा संस्थितासी-
त्सखी वृता ॥ स्नुषाभिर्वीजितां रम्यां प्रणेमु स्तां परस्त्रियः ॥४०॥ तासां सीमंतरत्नौघ प्रभया पदपंकजे ॥ वि-
रेजतु स्ते सीतायाश्चित्रराग विचित्र ते ॥ ४१॥ उपायनानि संगृह्य ताभ्यः सा जनकात्मजा ॥ समालिंग्य निवे-
श्याथ ताः प्राह सुस्वरं वचः ॥४२॥ किमर्थमागता यूयं मा भेतव्यमितः परम् ॥ कथयध्व स्वीयमिष्टं यत-
द्वद्य करोम्यहम् ॥४३॥ तदा ताः कथयामासुः सर्व वृत्तं सविस्तरम् ॥ देहि कंकणदानानि कुशं युद्धान्निवार-
य ॥४४॥ तथेति जानकी चोक्त्वा ज्ञात्वा राममनोगतम् ॥ नारी हस्तान्मोचनीयाश्चैते निर्जरवत्विति ॥४५॥
आरुह्य शिबिकायां सा ताभिर्युक्ता कुशं ययौ ॥ तदा तं सांत्वयामास क्रोधं त्यज कुशाधुना ॥ निवर्त स्वरणादद्य
श्रृणु मे वचनं शिशो ॥४६॥ तथेति जानकीवाक्याद्विहस्याथ कुशस्तदा ॥ मात्रा तै र्बंधुभिर्युक्तः सेनया सं
न्यवर्तत ॥४७॥ पुष्पकं प्रययौ सीता नृपस्त्री परिवेष्टिता ॥ कुशाद्या स्ते कुमाराश्च सभायां राघवो ययुः ॥४८॥
ततो वाल्मीकिना ब्रह्मा नलाद्यैः सहितस्तदा ॥ सनिर्जरः सभां गत्वा तस्थौ श्रीराघवाग्रतः ॥४९॥ कुशाद्या स्ते-
ऽपि श्रीरामं प्रणम्य तस्य सन्निधौ ॥ तस्थु स्ते नालिंगिताश्च स्त्रीभिर्नीराजिता अपि ॥५०॥ तदा रामोऽब्रवी-

द्वाक्यं ब्रह्माणं सदसी स्थितम् ॥ रणान्निवर्तिता बाला किमग्रे तव वांछितम् ॥५१॥ न मे राज्ये छत्रपतिर्द्धिति-
योत्र भविष्यति ॥ करणीयं नलाद्यैः किं तद्वदस्व सविस्तरम् ॥५२॥ तदासनादुत्थितः स वेधा रामाग्रतः स्थितः
उवाच मधुरं वाक्यं सभायां रघुनंदनम् ॥ ५३॥ राम राम महाबाहो भूभारश्च त्वया हृतः ॥ चिरकालं कृतं राज्यं
वैकुंठं पालयाधुना ॥५४॥ कुरु सत्यं वचो मेऽद्य ददस्व हस्तिनापुरम् ॥ नलादिभ्यस्त्वयोध्यायां कुशो राज्यं
प्रशासतु ॥५५॥ तदा रामो विधिं प्राह ममाप्येतत् रोचते ॥ वैकुंठं श्वा गमिष्यामि सीतया बंधुभिर्युतः ॥५६॥
दश वर्षसहस्राणि प्रोक्तमायुर्युगेत्र हि ॥ तन्मया स्वीयसामर्थ्यात्कृतमत्र विधे मृषा ॥५७॥ एकादशसहस्राणि
समा स्त्वेकादशैव तु ॥ तथैकादश मासाश्च गता मे दिवसा अपि ॥५८॥ शेषमायुष्य किंचिन्मे तत्श्वः पूर्णं भ-
विष्यति ॥ द्वादशायां घटिकायां सोऽहं वैकुंठमाश्रये ॥५९॥ ततो विधिं कुशः प्राह नलाद्या यदि मां विधे ॥ दा-
स्यंति करभारं मे तर्हि तिष्ठंतु चात्र ते ॥६०॥ मदाज्ञां पालयं त्वे ते तव वाक्यात्सुरक्षिताः॥ छत्रहीना सुखं त्व-
द्य वसंतु ह[illegible]पुरे ॥६१॥ तद्वाक्यं स विधिः श्रुत्वा पुनः प्राह कुशं प्रति ॥ छत्रमाज्ञापयस्त्वे तान्तवाज्ञा व-
शवर्तिनः ॥६२॥ दास्यंति करभार त्वां मम वाक्यं हि पालय ॥ तथेति स कुशः प्राह विधिं किंचित्स्मिताननः
॥६३॥ अथ ते सोमवंशस्था नृपाः सर्वे विधिं तदा ॥ प्रोचुर्वयं त्वया स्त्रीभिर्दिवं यास्यामरद्य वै ॥६४॥ अजमी-
ढेद्य नृपति भवत्वत्र गजाह्वये ॥ तथेति तान्विधिश्चोक्त्वा सभायां समुपाविशत् ॥६५॥ अथ ब्रह्माऽजमीढायां
ब्राह्मणैरभिषिच्य च ॥ गजाह्वये तं राजानं चकार राघवाज्ञया ॥६६॥ इति श्रीशतकोटि रामचरितांतर्गत
श्रीमदानंदरामायणे वाल्मीकिये पूर्णकांडे सोमवंश सूर्यवंशजयो मैत्रीकरणं नाम चतुर्थः सर्गः ॥ शुभं भवतु ॥ श्री-
सीतारामचंद्रार्पणमस्तु ॥

आकोला
भाद्रपद शु॰ १० शके १८७५

॥श्रीगणेशायनमः ॥ अथ रामं सुषेणश्च सुग्रीवश्च बिभीषणः ॥ वानराः प्रार्थयामासुर्वयं राम त्वयादिवम् ॥१॥
नास्यामो नात्र जीवामस्त्वया राम विना भुवि ॥ ददस्वाज्ञां त्वया गंतुं तदाह राघवोऽपि सः ॥२॥ बिभीषण
त्वया स्थेयं लंकायां ममवाक्यतः ॥ प्रचरिष्यति यावन्मे रामनामावनीतले ॥३॥ त्वं गच्छाद्यैव मे वाक्यात्त—
थेति स बिभीषणः ॥ नत्वा रामं ययौ लंकां राघवेणाति मानितः ॥४॥ ततः प्राह जांबवंतं राघवः पुरत स्थितम् ॥
हे जांबवन् यास्थेयं यावद्भूम्यां कथा मम ॥५॥ प्रचरिष्यति तावच्च द्वापारांते पुनर्मम ॥ भविष्यति दर्शनं
ते गच्छाद्यैव सुखं वस ॥६॥ त्वया कृतं यत्साहाय्यं लंकायां मे वनेऽपि च ॥ अतस्त्वं श्वशुरो भूत्वा द्वापारे
ख्यातिमेष्यसि ॥७॥ तथेति रामवचनाद्रामं सीतां प्रणम्य सः ॥ जांबवान्निर्ययौ शीघ्रं राघवेणाति पूजितः ८
रामः प्राह हनूमंतं वत्स तिष्ठ यथासुखम् ॥ यदा सेतौ पण स्ते हि द्वापारांतेऽर्जुनेन वै ॥९॥ भविष्यति शरैः सेतु
कर्तुं मे दर्शनं तदा ॥ त्वं लभिष्यसि गच्छाद्य सुखं वस भजस्व माम् ॥१०॥ तद्रामवचनं श्रुत्वा नत्वा रामं च
लक्ष्मणम् ॥ सीतां प्रणम्य हनुमान्गमनायोपचक्रमे ॥११॥ ततो रामो निजात्कंठान्नवरत्न विभूषितम् ॥ हारं ददौ
तदा सीता तं ददौ बाहुभूषणे ॥१२॥ ततो नत्वा रामचंद्रं सार्द्र नेत्रः स मारुतिः ॥ परिक्रम्य ययौ वेगा तप्तुं तु
हिमपर्वतम् ॥१३॥ ततोंऽगदं रामचंद्रः पूज्य वस्त्रादि मंडनैः ॥ प्रेषयामास किष्किंधां श्रृंगबेरं च गूहकम् १४
पातालं प्रेषयामास राघवो मकरध्वजम् ॥ वस्त्रादिभिस्तोषयित्वा सुहृद स्वस्थलानि हि ॥१५॥ ततो---------
रामः समाहूय यूपकेतुं महामनाः ॥ वस्त्रादिभि स्तोषयित्वा विदिशा नगरं प्रति ॥१६॥ प्रेषयामास सैन्येन
सोऽपि नत्वा रघूत्तमम् ॥ जानकिं च ययौ वेगात्स्त्री पुत्रैः परिवारितः ॥१७॥ एवं रामः सुबाहुं तं मथुरां प्रेषय—

त्तदा ॥ एवं रामः पुष्करं च प्रेषयामास बालकम् ॥१८॥ सैन्येन पुष्करावत्यां तक्ष तक्षशिलाव्हये ॥ ततोऽगदं गजाश्वतं प्रेषयामास राघवः ॥१९॥ धन रत्नं चित्रकेतुं स्त्री पुत्रं बल वाहनैः ॥ प्रेषयामास श्रीरामे स्तोषितं वसनादिभिः ॥२०॥ ततो लवं समाहूयं ससीतो रघुनंदनः ॥ वस्त्रालंकार यानाद्यैस्तोष्य स्त्री पुत्र संयुतम् ॥२१॥ उत्तरेषु कुरुष्वत्र प्रेषयामास सेनया ॥ कामधेनुं ददौ सीता लवा व्रजते मुदा ॥२२॥ ततः कुशं समाहूय रामः स्त्री पुत्र संयुतम् ॥ प्रेषयामास साकेतं सैन्येन पार्थिवै र्युतम् ॥२३॥ दत्वा स्वीयानि शस्त्राणि कोदंड च महोज्वलम् ॥ नाना यानानि वस्त्राणि रामश्चिंतामणिं ददौ ॥२४॥ स स्त्री पुत्रं कुशं तोष्य राघवो वाक्यमब्रवीत् ॥ वत्स गच्छ सुखं तिष्ठ भूमि धर्मेण पालय ॥२५॥ जंबुद्विप नृपान्सर्वान्तिथा द्वीपांतर स्थितान् ॥ सर्वान्येतान्पालयस्वत्पुत्रवत्कुशबालक ॥२६॥ इत्युक्त्वा तान्नृपान्प्राह युष्माभिःकुशबालकः ॥ मत्स्थाने माननीयोयं रक्षनीयस्त्वहर्निशम् ॥२७॥ तद्रामवचनं श्रुत्वा नृपाः प्रोचु रघूत्तमम् ॥ त्वत्तेज पूरितो बालस्त्वतोऽस्माकं शताधिकम् ॥२८॥ अस्त्यत्र नात्र संदेहः सत्यं विद्धि रघूत्तम ॥ यथा त्वया पालितो वयं तद्वत्कुशोप्ययम् ॥२९॥ रक्षिष्यति सदाऽस्माकं दृष्टो बालपराक्रमः ॥ इत्युक्त्वा राघवं नत्वा सर्वे ते पार्थिवोत्तमाः ॥३०॥ रामेण पूजिता सम्यक् वस्त्रालंकार वाहनैः ॥ ययुः कुशंपुरस्कृत्य स्व स्व सैन्य समन्विताः ॥३१॥ कुशोऽपि राघवं नत्वा मूर्ध्नि सीतावग्राहितः ॥ वसिष्ठेन रथे स्थित्वा पुरीं गंतु प्रचक्रमे ॥३२॥ तदा रामस्तं रजकं मंथरा प्रेषयत्पुरीम् ॥ कुशेन सह वेगेन समाहूयाथ सादरम् ॥३३॥ पूर्व वैरमनुस्मृत्य नाम्न यातामधर्मिणौ ॥ कृष्णावतारे तावेव रजको रजको भवत् ॥३४॥ मंथरा पूतना

जाता हतौ तौ पूर्ववैरतः ॥ ततः कुशः सार्द्रनेत्रः पश्यन्रामं च जानकीम् ॥ ३५॥ परिवर्त्य मुखं पृष्ठे
वारंवार रथे स्थितः ॥ गच्छ गच्छेति रामेण सीतयापि निजैः करैः ॥३६॥ सूचितः स ययौ सैन्यैर्वेष्टितः
स्वपुरीं प्रति ॥ ददर्श नगरीं शून्यां श्रीरामविरहातुराम् ॥३७॥ गत्वा पुर्यां महोत्साहैः निज सिंहासन-
स्थितः ॥ पूज्य सर्वान्पार्थिवांश्च समालिंग्य विसर्जयत् ॥३८॥ तेऽपि नत्वा कुशं स्वस्व स्थलं जग्मु
नृपोत्तमाः ॥ करभारं ददुस्तस्मै तदाज्ञा वशवर्तिनः ॥३९॥ मंथरा रजको द्वौ तौ दैवात्पुर्याबहिर्मृतौ ॥
प्राप तुर्जन्म साकेते मृतानां न पुनर्भवः ॥४०॥ अथ रामोऽब्रवीत्सर्वान्वानरान्जान्हवीतटे ॥मदर्थं
भ्रमिताः सर्वे यूयं वानरसत्तमाः ॥४१॥ द्वापारेऽग्रे पुनः सर्वे व्रजे गोपा भविष्यथ ॥ युष्माभिः सहितः
प्रीत्या करिष्याम्यशनादिकम् ॥४२॥ तदाऽब्रवीत्स सौमित्रिं रामः प्रीत्या पुरस्थितम् ॥ महान्श्रमः
कृतः पूर्व सेवायां मम दंडके ॥४३॥ भवत्वद्वापरे ज्येष्ठ स्ते शुश्रुषा करोम्यहम् ॥ ततस्तान्राघवः
प्राह ऋक्षान्पौरान्कपीनपि ॥४४॥ सर्वान्येव मया सार्द्धं प्रयातेति दयान्वितः ॥ ततो ददौ कल्पवृक्ष
पारिजातौ सुराधिपम् ॥४५॥ ततस्तं पुष्पकं प्राह कुबेरं वह सादरम् ॥ गच्छाद्यैव तथेत्युक्त्वा रामं नत्वा
तु पुष्पकः ॥४६॥ सीतां पृष्ट्वा ययौ शीघ्रं राघवेनाति मानितम् ॥ ततः प्राह रघुश्रेष्ठश्चोर्मिलां मांडवीं त-
था ॥४७॥ श्रुतिकीर्तिं समाहूय वाल्मीकिमुनिरग्रतः ॥ युष्माभिर्भर्तृदेहैश्च निजदेहानि वेगतः ॥४८॥
श्वोऽग्नौ दग्ध्वास्वर्गलोकं गंतव्यं ममवाक्यतः ॥ तथेति राघवं प्रोचुस्तदा ताश्चोर्मिलादिकाः ४९
नत्वा रामं ययुः सर्वाः स्वं स्वं तद्वसनं गृहम् ॥ अथ रामोऽपितां रात्रिं सीतया रुक्ममंचके ॥५० ॥

निनाय शंकराद्यास्ते सुरास्तस्थुर्मुनीश्वरैः ॥स्वस्व पत्न्या लक्ष्मणाद्याश्चक्रुः क्रीडा यथासुखम् ५१
इति श्रीशतकोटि रामचरितांतर्गत श्रीमदानंदरामायणे वाल्मीकिये पूर्णकांडे सर्वेषां विसर्ज-
नं नाम पंचमः सर्गः॥ शुभं भवतु ॥ श्रीसीतारामचंद्रार्पणमस्तु॥

आकोला
भाद्रपद कृ॰ ४ शके १८७५

॥ श्रीगणेशायनमः ॥ अथ रामः समुत्थाय प्रभाते सीतयासह ॥ अजमीढं समाहूय मंजुलं वाक्यमब्रवीत् ॥१॥ अद्याहं सीतया स्वीयं पदं गच्छामि बंधुभिः ॥ वानरैः सकलैः पौरैः त्वया शेषं तु यज्जडम् ॥२॥ वस्त्रं गृहादिकं सर्वं प्रेषणीयं कुशं प्रति ॥ यच्चरं कीटकां तं तन्मया यास्यति वै दिवम् ॥३॥ अतस्त्वं तं कुशं गत्वा सर्वं वृत्तं निवेदय ॥ करोत्युत्तरकार्याणि कुशोऽस्माकं सविस्तरम् ॥४॥ माकरोति कुशोऽस्माकं खेदं तं त्वं निवारय ॥ इति राम वचः श्रुत्वा साश्रुनेत्रस्तथेति सः ॥५॥ अजमीढस्तदा प्राह ननाम रघुनायकम् ॥ अथ राम शनैः पौरैः स्नात्वा भागीरथी जले ॥६॥ कृत्वा नित्य विधिं पूर्वं हुत्वा वन्हिं सविस्तरम् ॥ ददौ दानान्यनेकानि गंगासैकतसंस्थितः ॥७॥ ततः प्रास्थानिकं कर्म चकार स यथाविधि ॥ वन्हिन्विसर्जयामास वैकुंठं प्रति राघवः ॥८॥ तदा रामस्य प्रासादागता दक्षिणहस्ततः ॥ मूर्तिरूप धरा वेदा------तदा वैकुंठमाययुः ॥९॥ त्रिपदा प्रणवेनैव श्रीरामास्याद्विनिर्गता ॥ नत्वा रामं ययौ नाकं ययौ मेधा धृतिर्दया ॥१०॥ तेजो बलं यशः स्वर्गं ययौ सर्वं तदा पुरः ॥ ततः पौरा वानराश्च सर्वे भागीरथी जले ॥११॥ स्नात्वा निरोध्य वायुंश्च निजदेहानि ते त्यजुः ॥ अथ रामो मुदा गंगां स्पृष्ट्वा दर्भासनोपरि ॥१२॥ दर्भ पाणि स्थितस्तूष्णिमुत्तराभिमुखः स्त्रिया ॥ तावत्सर्वे ददृशुस्ते देवा विष्णुं पुरः स्थितम् ॥१३॥ चतुर्भुजं नील कांतिं पीतकौशेय धारिणम् ॥ कौस्तुभांकित हृद्देशं श्रीवत्सांकित शोभितम् ॥१४॥ सीता बभूव सा लक्ष्मी विष्णुवामांगसंस्थिता ॥ शेषो बभूव सौमित्रिः फणाभिरतिभासुराः ॥१५॥ शंखो बभूव भरतः श्रीविष्णोः सव्य सत्करे ॥ वामेकरे बभूवाथ शत्रुघ्नश्च सु-

दर्शनम् ॥१६॥ देवेषु विविशुः सर्वे वानरास्ते क्षणात्तदा ॥ चांडाल क्रीमि किटां ता अयोध्यापुरवासि-
नः ॥१७॥ प्रापु स्ते दिव्य देहानि विमानं संस्थिता बभुः ॥ तदा निनेदुर्वाद्यानि देवानां गगनांगणे ॥
१८॥ ववर्षु र्देवपत्न्यश्च पुष्पवृष्टिभिरादरात् ॥ ननृतुर्वै ह्यप्सर सा जगु र्गंधर्व किन्नराः॥१९॥ प्रण-
नाम तदा तार्क्ष्यः श्रीविष्णुं रविभा सुरम् ॥ देहानि मुमुचुः सर्वे स्त्रीभिःसोमादिकाश्च ते ॥२०॥ पति दे-
हानि चालिंग्य तदा ता उर्मिलादिकाः ॥ देहान्यग्नौ त्यजुः सर्वा रम्ये भागीरथी तटे ॥२१॥ अथ ता देव-
पत्न्यश्च रत्नदीपैः सहस्रशः॥ विष्णुं नीराजयामासुर्लक्ष्मीयुक्तं महाप्रभुम् ॥२२॥ विष्णुस्ततोऽब्र-
वीद्वाक्यं वेधसं मंजुलं शनैः ॥ अयोध्यावासिनः सर्वे तिर्यङ्मात्रादयः शुभाः ॥२३॥ एते समागता ब्र-
ह्मन्येषां स्थानं वदाधुना ॥ तद्विष्णोर्वचनं श्रुत्वा तदा ब्रह्माऽब्रवीद्वचः ॥२४॥ मल्लोकादुपरिष्टाच्च
लोकान्सांतानिकान्शुभान् ॥ एते यांतु जनाः सर्वे त्वद्दर्शन महोज्वलाः॥२५॥ ततः प्राह पुनर्विष्णुरयो-
ध्यायां मृताश्चये ॥ अग्रे तेऽपि समायांतु लोकान्सांतानिकान्शुभान् ॥२६॥ तथेति स विधिः प्राह
महाविष्णुं मुदान्वितः ॥ तत स्ते दिव्य देहाश्च साकेतपुरवासिनः ॥२७॥ नानाविमानसंस्थाश्च दि-
व्यवस्त्र विभूषिताः ॥दिव्यालंकार संयुक्ता ह्यप्सरोभिर्विलेपिता ॥२८॥ नानासुगंधगंधाद्यैर्दिव्य चामर
वीजिता ॥ विरेजुर्गगने चंद्रवदना रविभासुरा ॥२९॥ ततो ब्रह्मादयो देवाः प्रणेमुर्विष्णुमादरात् ॥ तुष्टु
वुर्विविधैः स्तोत्रैर्वेदघोषैर्मुनीश्वराः ॥३०॥ तदा तुष्टाव शंभुस्तं विष्णुं त्रैलोक्यपालकम् ॥ वनमाला
दधानं तं दिव्यचंदन चर्चितम् ॥३१॥ शंभुरुवाच ॥ राघवं करुणाकरं भवनाशनं दुरितापहं माधवं

खगगामिनं जलरूपिणं परमेश्वरम् ॥ पालकं जनतारकं भयहारकं रिपुमारकं त्वां भजे जगदीश्वरं न-
ररूपिणं रघुनंदनम् ॥३२॥१॥ भूधवं वनमालिनं घनरूपिणं धरणीधरं श्रीहरिं त्रिगुणात्मकं तुलसी-
धवं मधुरस्वरम् ॥ वामनं व्रजपालकं गिरिधारिणं वृषमर्दिनं त्वां भजे जगदीश्वरं नररूपिणं रघुनंदन
म् ॥३३॥ विठलं मधुरास्थितम् रजकांतकं गजमारकं अनंतं बकमारकं वृकघातकं तुरगार्दनम् ॥ नंदजं
वसुदेवजं बलियज्ञगं सुरपालकं त्वां भजे जगदीश्वरं नररूपिणं रघुनंदनम् ॥ ३४॥ केशवं कपिवेष्टि
तं कपिमारकं मृगमर्दिनं सुंदरं द्विजपालकं दितिजार्दनं दनुजार्दनम् ॥ बालपंखरमर्दिनं ऋषिपू-
जितं मुनिचिंतितं त्वां भजे जगदीश्वरं नररूपिणं रघुनंदनम् ॥ ३५॥ शंकरं जलशायिनं कुशबाल-
कं रथवाहनं शरयूनतं प्रियपुष्पकं प्रियभूसुरं लवबालकं श्रीधरं मधुसूदनं भरताग्रजं गरुडध्वजं
त्वां भजे जगदीश्वरं नररूपिणं रघुनंदनम् ॥ ३६॥ गोप्रियं गुरुपुत्रदं वदतांबरं करुणानिधिं भक्तपं-
जरं जनतोषदं सुरपूजितं श्रुतिभि स्तुतंम् ॥ भुक्तिदं जनमुक्तिदं जनरंजनं नृपनंदनं त्वां भजे
जगदीश्वरं नररूपिणं रघुनंदनम् ॥३७॥ चिद्धनं चिरजीविनं मणिमालिनं वरदोन्मुखं श्रीकरं धृति-
दायकं बलवर्धनं गतिदायकम् ॥ शांतिदं जडतारकं शरधारिणं गजगामिनं त्वां भजे जगदीश्वरं नररूपि-
णं रघुनंदनम् ॥३८॥ शार्ङ्गिणं कमलाननं कमलदृशं पदपंकजं श्यामलं रविभासुरं शशिसौख्यदं क-
रुणार्णवम् ॥ सत्पतिं नृपपालकं नृपवंदितं नृपतिप्रियं त्वां भजे जगदीश्वरं नररूपिणं रघुनंदनम् ॥३९॥
निर्गुणं सगुणात्मकं नृपमंडनं मतिवर्द्धनं अच्युतं पुरुषोत्तमं परमेष्ठिनं स्मितभाषिणम् ॥ ईश्वरं हनु-

मन्नतं कमलाधिपं जनसाक्षिणं त्वां भजे जगदीश्वरं नररूपिणं रघुनंदनम् ॥४०॥ इश्वरोत्तमे तदुत्तमे ममादराथत १११ नामकं यः पठेद्भुवि मानवस्तव भक्तिमान्तपनोदये त्वत्पदं निजबंधु पौर सुतैर्युतश्चिरमेत्यनोसोस्तुते पदसेवनेवतत्परो ममवाक्यतः ॥४१॥१०॥ इति स्तुत्वा महाविष्णुं प्रोवाच गिरिजापतिः॥ आरुहस्व रमानाथ गरुडोपरि वेगतः ॥४२॥ वैकुंठारोहणस्यायं कालो वाल्मीकिना कृतः ॥ एकादशसहस्राश्च समा स्त्वेकादशैव च ॥४३॥ तथैकादशमासाश्च दिनान्येकादशैव च ॥ तथैकादश घटिका पलान्येकादशैव च ॥४४॥ गतानि तेत्र भूम्यां हि जन्मादारभ्य राघव ॥ वसन्त पञ्चमी नाम्नी तिथिश्चैत्रासिताद्य हि ॥४५॥ पुण्येन्हि स्वपदं गंतुं त्वरां कुरु रमेश्वर॥ तदा विहस्य श्रीविष्णुर्वाल्मीकि मुनिपुंगवम् ॥४६॥ समालिंग्य मुनिर्दृष्ट्वा तस्थौ स गरुडोपरि ॥ ध्वनत्सु देव वाद्येषु स्तुवत्सु नानदादिषु॥ ४७॥ पुष्पै र्वर्षत्सु देवेषु प्रनर्तस्त्वप्सरस्सु च ॥ नाना विमानजालैश्च सर्वत्र परिवेष्टितः ॥४८॥ ययौ विष्णुः स वैकुंठं लोकान्पश्यन्शनैः शनैः॥ वैकुंठे स्वपदस्थित्वा विससर्ज शिवादिकान् ॥४९॥ तस्थौ लक्ष्म्यानंदमयः परिपूर्ण मनोरथः॥ खगेंद्र सेवित पदः शेषं तल्प विभूषितः ॥५०॥ अयोध्यावासिनः सर्वे ययुः सांतानिकं पदम्॥ तत स्ते मुनयः सर्वे ययुः स्व स्व स्थलं प्रति ॥५१॥ रामवाक्यात्सोऽजमीढः सांत्वयामास तं कुशम् ॥ स्वर्गारोहणविस्तार कथयामास तं तदा ॥५२॥ कुशेन मानितः सोऽपि ययौ स्वीयं गजाव्हयम् ॥ लब्ध्वा कुमुद्वतिं तस्यां कुशः पुत्रान्स निर्ममे ॥ ५३॥ एवं श्रीरघुनाथस्य स्वर्गारोहण कौतुकम् ॥

ये श्रृण्वंति नरा भक्त्या तेऽपि स्वर्गं प्रयांति हि ॥५४॥ वैकुंठारोहणाध्यायमिमं नित्यं पठेत्तु यः ॥ सोंऽते गच्छति वैकुंठं रामचंद्र प्रसादतः ॥५५॥ इति श्रीमदानंदरामायणे वाल्मीकिये पूर्णकांडे वैकुंठारोहणं नाम षष्ठः सर्गः ॥ शुभं भवतु ॥ श्रीसीतारामचंद्रार्पणमस्तु ॥

आकोला

भाद्रपद वद्य १२ शके १८७५

॥श्रीगणेशायनमः॥ श्रीरामदासउवाच ॥ एवं त्वया यथा पृष्ठं स्वर्गारोहण मंगलम्॥ श्रीरामस्य
मया चैतत्तवाग्रेऽद्य निवेदितम्॥१॥ किमन्या श्रोतुमिच्छास्ति ता त्वं वद वदाम्यहम्॥ इति तीर्थ
वचः श्रुत्वा विष्णुदास स्तदाऽब्रवीत्॥२॥ विष्णुदास उवाच॥ कुशांतः सूर्यवंशोत्र गुरो पूर्वं त्वये-
रितः॥कुशाग्रे श्रोतुमिच्छामि सूर्यवंश सविस्तरम्॥३॥ श्रीरामदास उवाच॥ विष्णोरारभ्य कथि-
ता एकषष्ठितमाः पुरा॥ एकषष्ठि नृपाअग्रे तान्वदामि सविस्तरम्॥४॥ श्रीरामस्य कुशः पुत्रो-
ऽतिथि पुत्रो कुशस्य सः॥ निषधस्त्वतिथेः पुत्रो निषधस्यात्मजो नभः॥५॥ नभाज्जातो पुण्डरीकः
क्षेमधन्वा तु तत्सुतः॥देवानीक स्तत्सुतो भूद्देवानीक सुतो महान्॥६॥ अहीनः प्रोच्यते सद्भिः पारियात्र-
स्तत्सुतः स्मृतः॥ पार्यात्रस्य बलः पुत्रो स्थलः पुत्रो बलस्य हि॥७॥स्थलस्य वज्रभानु स्तु खगण
स्तस्य कीर्त्यते॥खगणाद्विधृतिर्जातो विधृते स्तनयः शुभः॥८॥ जातो हिरण्यनाभस्तु तस्य पुष्पः
प्रकीर्त्यते॥ पुष्पात्स ध्रुवसंधि स्तु ध्रुवसंधेः सुदर्शनः॥९॥ सुदर्शनादग्निवर्ण तस्माच्छ्रीघ्रः प्रकीर्त्य-
ते॥शीघ्राज्जातो मरुः पुत्रो मरोः प्रश्रुतः सुतः॥१०॥ प्रश्रुतस्य तु संधिर्हि संधेः पुत्रस्य मर्षणः॥
मर्षणस्य नहस्वांश्च विश्वबाहुश्च तत्सुतः॥११॥ तस्मात्प्रसेनजित्प्रोक्त तस्माज्जातस्तु तक्षकः॥
बृहद्बलस्तक्षकाश्च तस्माज्जातो बृहद्रणः॥१२॥ तस्मादुक्रियः प्रोक्तो वत्सवृद्धस्तु तत्सुतः॥ व-
त्सवृद्धस्य व्योमस्तु व्योमाद्भानुः प्रकीर्त्यते॥१३॥ भानोः पुत्रो दिवाकस्तु सहदेवश्च तत्सुतः॥
सहदेवात्मजो वीरो वीरस्य तनयः शुभः॥१४॥ बृहदश्व इति ख्यातस्तस्य पुत्रो तु भानुमान्॥ भा-

नुमतः प्रतीकाशः सुप्रतिकस्तु तत्सुतः ॥ सुप्रतीकस्य पुत्रोभून्मरुदेव इति स्मृतः ॥ मरुदेवात्सु-
नक्षत्रः सुनक्षत्राच्च पुष्करः ॥१६॥ पुष्करस्यांतरिक्षश्च सुतपा अंतरिक्षजः॥ सुतपातनयो मित्रजि-
त्प्रोक्तस्तत्सुतः शुभः ॥१७॥ ब्रुहद्राज इति ख्यातस्तस्य बर्हिः स्मृतो बुधैः॥ बर्ह्रेः कृतंजयः पुत्रस्त-
स्य पुत्रो रणंजयः ॥१८॥ रणंजयात्संजयस्तु संजयाच्छाक्य उच्यते ॥ शाक्य पुत्रस्तु शुद्धोदः शु-
द्धोदाल्लांगलः स्मृतः ॥१९॥ लांगलस्य प्रसेनजित्तस्य पुत्रो तु क्षुद्रकः ॥ क्षुद्रका द्रुणकः प्रोक्तोद्रुणका-
त्सुरथः स्मृतः ॥२०॥ सुरथास्तनयोजात स्तनयस्य सुतो महान् ॥ नाम्ना सुमित्रः परमः पूर्णो वंशस्त-
तः परम् ॥२१॥ पूर्वमुक्तो मरुरिति नाम्ना यो नृपतिर्मया॥ कलाप ग्राममाश्रित्य हिमाद्रौ बद्रिका-
श्रमे ॥२२॥ स तपश्चिरकालं हि करात्यत्र समाधिमान् ॥ कृतायुगे पुनः प्राप्ते सूर्यवंश करिष्यति
॥२३॥ एवं मया समाख्यातः सूर्यवंशो मनोरमः ॥ विष्णोरारभ्य कथिता एकषष्ठि समामया ॥२४॥ ए-
कषष्ठि नृपा अग्रे मध्ये रामो विराजते ॥ त्रयोविंशोत्तर शताश्चैवं विष्णोर्मयोदिता ॥२५॥ एवं यथा
त्वया पृष्टं शिष्य वंशानुकीर्तनम् ॥ तन्मया कथितं सर्वं श्रवणात्पुण्यवर्द्धनम् ॥२६॥ विष्णुदास उवा-
च ॥ गुरो मया श्रुतं कस्यचिन्मुनेर्मुखतः पुरा ॥ रामायण सविस्तारं तच्चैवं नैव भासते ॥२७॥ त-
स्मादंत्रांतरं प्रोक्तं त्वया सर्वत्र मां गुरो ॥ संदेहोऽनेन मे जातस्त्वं छेत्तुमहार्हसि ॥२८॥ रामदास
उवाच ॥ पुनः पुनः कल्पभेदाज्जाता श्रीराघवस्य च॥ अवताराः कोटिशोऽत्र तेषु भेदः क्वचित्क्व-
चित् ॥२९॥ कृतोस्ति राघवेणैव न सर्वे सदृशाः कृताः ॥ रामायणान्यपि तथा पुरा वाल्मीकि नैव हि

॥३०॥ अनेकान्यंतरेणैव कीर्तितानि सविस्तरात् ॥ शतकोटिमिता तेषां सर्वेषां गणना कृता ॥ ३१॥
तस्मात्त्वया न संदेहः कार्यः शिष्यात्र बुद्धिमान् ॥ यन्मया कथितं तेहि तत्तथ्यं विद्धिनान्यथा ३२
भागाच्छतखंडांतर्गताद्रामायणात्पुरा ॥ नारदादि पुराणानि व्यासेनात्र कृतानि हि ॥३३॥ तेषु म-
त्कथितं चेदं सम्यग्विस्तारितं द्विज॥ तव जातो यथा शिष्य संदेहोऽत्र कथांतरात् ॥३४॥ भविष्य-
ति तथाऽन्येषामग्रे यदि कदाक्वचित् ॥ नारदादि पुराणेषु पश्यनीयं हि तैर्जनैः ॥ ३५॥ दृष्ट्वा मदु-
क्तं सर्वेषु पुराणादिषु पंडितैः ॥ त्यक्तव्या स्वीय संदेहः सत्यं ज्ञेयं मयेरितम् ॥३६॥ इतिश्रीश-
तकोटि रामचरितांतर्गत श्रीमदानंद रामायणे वाल्मीकिये पूर्णकांडे सूर्यवंशानुवर्णनं नाम
सप्तमः सर्गः ॥ शुभं भवतु ॥ श्रीसीता रामचंद्रार्पणमस्तु ॥

आकोला
भाद्रपद कृष्ण १४
शके १८७५

॥श्रीगणेशायनमः ॥ विष्णुदास उवाच ॥ गुरोऽधुना वदस्व त्वं यन्मया पृच्छते तव ॥ अनुक्रमणिका सर्गे तथा पापादिभिः फलम् ॥१॥ कांडसंख्यां सर्गसंख्यां श्लोकसंख्यां सविस्तराम् ॥ उद्यापनं ग्रंथदान-फलं वै शकुनेक्षणम् ॥२॥ अनुष्ठान विधानं च श्रोतुं काल विनिर्णयः ॥ कांडानां पृथग्संख्या सर्व त्वं वक्तुमर्हसि ॥ ३॥ रामदास उवाच ॥ अनुक्रमणिका चैव प्रोच्यतेयं मयाधुना ॥ यस्य संश्रवणात्प्रोक्तं सर्वग्रंथफलं शुभम् ॥ ४॥ सर्गेत्र प्रथमं प्रोक्तं कौसल्यायाः स्वयंवरम् ॥ रामादिनां सुजन्मानि द्विति-ये कीर्तितानि हि ॥५॥ सीता स्वयंवरं प्रोक्तं तृतिये मिथिलापुरि ॥ वृंदाशापादि कथनं चतुर्थे मुद्गलेन हि ॥६॥ दशरथपूर्वजन्म कैकेय्याश्चापि पंचमे ॥ वनप्रयाणं रामस्य प्रोक्तं षष्ठे सविस्तरम् ॥७॥ विराध खग मारीच वधादि सप्तमे कथि ॥ किष्किंधायां वालि घातो राघवेणाष्टमे कृतः ॥८॥ नवमे जानकी शुद्धिर्लंका दग्धा हनूमता ॥ दशमे सेतुमहात्म्य काशिविश्वेश्वरागमः ॥९॥ एकादशे रावणादि वधाः प्रोक्ताश्च राघवात् ॥ सीतया स्वपुरीं गत्वा द्वादशेऽभून्नृपो विभुः ॥१०॥ त्रयोदशे रावणस्य विक्रमश्च ह-नूमतः ॥ समाप्तं सारकांडं हि यात्राकांडमुदीर्यते ॥११॥ वाल्मीकात्प्रथमे सर्गे श्लोकोत्पत्ति प्रकीर्तिता ॥ रा-मायण विभागोत्र द्वितिये समुदाहृतः ॥१२॥ तृतिये सीतया रामो यात्रार्थं प्रार्थितो मुदा ॥ चतुर्थे रामचंद्र-स्य प्रस्थानं जान्हवीं प्रति ॥१३॥ पंचमे मुनिवाक्येन यात्रां गंतुं विनिश्चयः ॥ षष्ठे प्रोक्ता पूर्वदेश तीर्थ-यात्रा सविस्तरा ॥१४॥ प्रोक्ता दक्षिण तीर्थाणां यात्रा रामस्य सप्तमे ॥ तीर्थाटनं पश्चिमायामष्टमे राघवस्य च ॥१५॥ यात्रोत्तर प्रदेशस्य रामस्य नवमे कथि ॥ यात्राकांड समाप्तं तु यागकांडमुदिर्यते ॥१६॥ सर्गेऽत्र

प्रथमे प्राह यज्ञोपकरणं गुरुः ॥ द्वितिये रामचंद्रस्य यागारंभोऽत्र वर्णितः ॥१७॥ पृथ्विप्रदक्षिणा प्रोक्ता तृतियेऽध्वर वाजिनः ॥ कुंभोदरस्य रामस्य संवादोऽत्र चतुर्थके ॥१८॥ पंचमे रामनाम्नां वै ह्यष्टोत्तर-शतं शुभम् ॥ षष्ठेऽऽन्हिकं हि सर्वेषां वाजीमेध प्रकीर्तितम् ॥१९॥ ध्वजारोप विधानं च सप्तमे समुदाहृतम् ॥ अष्टमेऽवभृथ स्नानं राघवस्यात्र वर्णितम ॥२०॥ नवमे वाजिमेधस्य समाप्तिः कीर्तितात्र सा॥ यागकांड समाप्तं हि विलासाख्यमुदीर्यते ॥२१॥ प्रथमे रघुवीरस्य स्तवराजोत्र कीर्तितः ॥ द्वितिये र-तिशालायाः जानक्याश्चापि वर्णनम् ॥२२॥ तृतिये राघवेणोक्तं देहरामायणं स्त्रियै ॥ दिनचर्या भूष-णानि जानक्यायाश्चतुर्थके ॥२३॥ जलयंत्रगता क्रीडा पंचमे शेषमान्हिकम् ॥ द्विजस्य पत्न्यै प्रासादे षष्ठेऽलंकारमंडनम् ॥२४॥ मूर्तिणां सप्तमे दानं देवस्त्रीणां वरास्तथा ॥ गुणवत्या पिंगलायाः वरदान-मथाष्टमे ॥२५॥ कुरुक्षेत्रस्य यात्रायां नवमे जानकीजयः ॥ विलासाख्यं समाप्तं हि जन्मकांडमुदीर्यते ॥२६॥ आरामे दोहद क्रीडा सीतायाः प्रथमे कथि ॥ द्वितिये विविधाः क्रीडाः सीमंतोनयनोत्सवः ॥२७॥ रजकस्योदितं श्रुत्वा सीतात्यागस्तृतीयके ॥ जन्मकर्म चतुर्थेत्र कुशस्याथ लवस्य च ॥२८॥ सर्गेत्र पं-चमे प्रोक्ता रामरक्षा सुखावह ॥ षष्ठे लवस्य कमलहरणे जय ईरितः ॥२९॥ युद्धादि कौतुकं प्रोक्तं पुत्रयोः सप्तमे विभो ॥ सीतादिव्यं च तल्लाभो ऽष्टमे प्रोक्तोत्र मंडपे ॥३०॥ जन्मोपनयनादिनि बाला-नां नवमे कथि ॥ जन्मकांड समाप्तं हि विवाहाख्यमुदीर्यते ॥३१॥ स्वयंवरार्थं गमनं रामस्य प्रथ-मे कथि ॥ स्वयंवरं चंपिकायाः द्वितिये समुदाऽहृतम् ॥३२॥ स्वयंवरं सुमत्याश्च तृतिये परिकीर्तितम्

कुशस्याथ लवस्यापि विवाहौ द्वौ चतुर्थके ॥३३॥ गंधर्व नाग कन्यानां मोचनं पंचमे कथि ॥ षष्ठे तासां
विवाहानां निश्चयः समुदाहृतः ॥३४॥ विवाहा द्वादश प्रोक्ताः सर्वासां सप्तमेत्र हि ॥ अष्टमे यूपके-
तोश्च वर्णितोत्र पराक्रमः ॥३५॥ प्रोक्तो मदनसुंदर्या विवाहो नवमे महान् ॥ पूर्णे विवाहकांडं च राज्य-
कांडमुदीर्यते ॥३६॥ रामं नाम सहस्रं च सर्गे प्राथमिके कथि ॥ द्वितियेत्र समानीतौ रामेण सुरपादपौ
॥३७॥ राम कृष्णोपासकयोः संवादश्च तृतीयके ॥ शत स्त्रीणां च निद्राया वरदानं तथा पुनः ॥ ३८ ॥
राम विश्लेष विरहः सीतायाः पंचमे कथि ॥ मूळकासुर घातश्च षष्ठे राज्यानि वै पृथक् ॥३९॥ जयो
भरतखंडस्य रामेण सप्तमे कृतः ॥ जंबूद्वीपजयः प्रोक्तोऽष्टमे रामस्य विस्तरात् ॥४०॥ षट् द्विपानां
जयः प्रोक्तो नवमे राघवस्य च ॥ यति शूद्र गृध्र शिक्षा रामेण दशमे कृता ॥४१॥ चतुः स्त्रीणां वर-
दानां रामेणैकादशे कृतम् ॥ स्त्री षोडशसहस्राणां द्वादशेत्र वरार्पणम् ॥४२॥ अश्वत्थ हासितं
हास्य मुक्तिराज्ञा त्रयोदशे ॥ चतुर्दशे वाल्मीकि स्वजन्म त्रयमीरितम् ॥४३॥ पंचदशे रामराज्य व-
र्णनं विस्तरां कृतम् ॥ वर्णिता राजनीतिं श्रीराघवेणात्र षोडशे ॥४४॥ सप्तदशेत्र कथिं कुशकन्या
स्वयंवरम् ॥ अष्टादशे रामनाथपुरं दत्तं द्विजन्मना ॥४५॥ एकोनविंशे रामस्य दिनचर्येरिता शुभा
॥ राज्ञा विंशेऽवतारेषु श्रेष्ठः प्रोक्तस्त्वयं महान् ॥४६॥ एकविंशे राघवेण दास्यै दत्ता वरो मुदा ॥ सी
तया तुलसीपत्रं द्वाविंशे संधितं शुभम् ॥४७॥ त्रयोविंशे स्मृताऽनंदरामायण फलश्रुतिः ॥ चतुर्विं-
शे यमशीक्षा धर्मशीक्षा च भूतले ॥४८॥ राज्यकांड समाप्तं हि मनोहरमुदीर्यते ॥ सर्गेत्र प्रथमं

प्रोक्तं लघुरामायणं शुभम् ॥४९॥ नागराणां च मातॄणामुपदेशा द्वितीयके ॥ रामपूजोपासनादि वि-
स्तारश्च तृतीयके ॥५०॥ रामतोभद्र विस्तारश्चतुर्थे समुदीरितः॥ रामलिंगतोभद्राणि भेदाः प्रोक्ताश्च
पंचमे ॥५१॥ नवमी व्रत विस्तारः षष्ठे प्रोक्ता च तत्कथा ॥ श्रीरामनाम्नां लक्षस्योद्यापनादि च सप्तमे
॥५२॥ वेदादीनां हि सर्वेषामष्टमे फलमीरितम् ॥ सार्द्धमासद्वयी पूजा कथिता नवमे विभोः ॥५३॥
दशमे चैत्रमासस्य महिमा समुदीरितः ॥ एकादशे मधुस्नाना सर्वेषां गति ईरिता ॥५४॥ अद्वैतं द-
र्शितं राज्ञा द्वादशे स्त्री कदंबकम् ॥ वायुपुत्रस्य रामस्य कवचे द्वे त्रयोदशे ॥५५॥ सीतायाः कवचादि-
नि प्रोक्तान्यत्र चतुर्दशे ॥ पंचदशे कवचानि तद्बंधूनां स्मृतानि हि ॥५६॥ व्रतं हनुमतः प्रोक्तं पता-
काख्यं हि षोडशे ॥ प्रोक्तं सप्तदशे साररामायणमनुत्तमम् ॥ अष्टादशे शरसेतोः खंडनं च हनूम-
ता ॥ जातं मनोहरं कांडं पूर्णकांडमथोच्यते ॥५८॥ वाल्मीकिनो सोमवंशो विस्तारः प्रथमे कथि ॥
रामचंद्रस्य प्रस्थानं द्वितिये हस्तिनापुरम् ॥५९॥ सूर्य सोमवंशजयो र्युद्धं प्रोक्तं तृतीयके ॥ सोम
सूर्य वंशजयो मैत्रिकिं च चतुर्थके ॥६०॥ कुशादीनां राघवेण स्व स्व मात्रं विसर्जनम् ॥ वैकुंठारोहणं ष-
ष्ठे गंगायां राघवस्य च ॥६१॥ सप्तमे सूर्यवंशीय नृपाणां वर्णनं कृतम् ॥ अनुक्रमणिका सर्गः प्रोक्तोयम-
ष्टमो महान् ॥६२॥ ग्रंथश्रुति फलादिनि नवमे कीर्तितानि हि ॥ नवसर्गैः पूर्णकांडं संपूर्णं नवमं त्विदम्
॥६३॥ अनुक्रमणिका चेयं मया शिष्या प्रवर्णिता ॥ अस्या श्रवणमात्रेण रामायण श्रुतेः फलम् ॥६४॥
रामायणपुस्तकस्य नित्यं कार्यं प्रपूजनम् ॥ विशेषं पूजनस्यापि वदामि शिष्य तं शृणुः ॥६५॥

सारकांडं विभोः स्थाने लक्ष्मणीय द्वितीयकम् ॥ नवायतन रीत्येथं शेषाणि स्थापयेत्क्रमात् ॥६६॥
सप्तकांडानि विधिवत्तेषां पूजनमाचरे ॥ अथवा राज्यकांडस्य पूर्वार्धं रामसत्स्थले ॥६७॥ राज्यकांड-
स्योत्तरार्धं सीतास्थाने न्यवेशयत् ॥ लक्ष्मणीये सारकांडं शेषाण्यग्रे क्रमेण तु ॥६८॥ एवं संस्थाप्य
कांडानि तेषां पूजनमाचरेत् ॥ नवायतन पूजायाः फलमेतेन कीर्तितम् ॥६९॥ इति श्रीशतकोटि
रामचरितांतर्गत श्रीमदानंदरामायणे वाल्मीकिये पूर्णकांडे अनुक्रमणिका नामाष्टमः
सर्गः ॥ शुभं भवतु ॥ श्रीसीतारामचंद्रार्पणमस्तु ॥

आकोला

आश्विनशुक्ल ५ शके १८७५

॥श्रीगणेशायनमः॥ सारं यात्राख्य यागाख्य विलासाख्यं तु जन्मकम्॥ विवाहाख्यं हि राज्या-
ख्यं श्रीमनोहर पूर्णके ॥१॥ कांडान्यनुक्रमेणैवानंदरामायणे नव ॥ त्रयोदश सारकांडे सर्गा वाल्मी-
किनेरिताः॥२॥ यात्राकांडे नव ज्ञेया यागकांडेऽपि वै नव ॥ नव ज्ञेया विलासाख्ये जन्मकांडेऽपि
वै नव ॥३॥ नव ज्ञेया विवाहाख्ये चतुर्विंशाख्य राज्यके॥ मनाहराख्ये ज्ञातव्याः सर्गा अष्टादशत्र वै
॥४॥ पूर्णकांडे नव ज्ञेयाः सर्गाः पापहरा नृणाम्॥ एवं नवोत्तरशत (१०९) सर्गा ज्ञेयाः शुभावहाः ५
सारकांडे पंचविंशच्छताश्लोका स त्रिंशकाः ॥यात्राकाण्डे सप्तशताः पंचत्रिंशोत्तरा स्मृता॥६॥याग
कांडे षट्शताश्च पंचविंशोत्तरा शुभाः ॥ विलासाख्ये षट्शताश्च साष्टसप्तयः स्मृतः॥७॥जन्म
कांडे ह्यष्टशताः सद्भिश्लोकाः प्रकीर्तिताः ॥विवाहाख्ये पंचशताः कीर्तिता स त्र्यंशीतयः॥८॥सद्वा-
विंशा राज्यकांडे सु षड्विंच्छताः स्मृताः॥ एकत्रिंश शताः श्लोकाः प्रोक्ताः कांडे मनोहरे॥९॥ पूर्णकां-
डे पंचशताः श्लोकाः प्रोक्तातिमिश्रिताः॥ आनंदरामचरिते सहस्राणि हि द्वादश ॥१०॥ द्वे शते च
द्विपंचाश श्लोका ज्ञेया मनीषिभिः॥ (१२२५२) एवं शिष्य मया प्रोक्त यथा पृष्टं त्वया पुरा॥११॥
रामस्य तोष चरितं श्रवणात्पातकापहम्॥ पूर्णकाण्डमिदं ज्ञेयं श्रवणात्पुण्यवर्द्धनम्॥१२॥सारकांड
श्रवादेव संसारान्मुच्यते नरः॥यात्राकांडेन यात्राणां लभ्यते मानवैः फलम्॥१३॥यागकांडेन यज्ञा-
नां लभ्यते फलमुत्तमम्॥ विलासकांड श्रवणादप्सरोभिर्विमोहते ॥१४॥जन्मकांडेन प्राप्नोति नरः
पुत्रादि संततिम्॥ विवाहकांड श्रवणाद्रम्या स्त्री लभ्यते भुवि ॥१५॥ राज्यकांडेन राज्यं हि मा-

॥आ॰रा॰॥
पूर्णकाण्ड

सर्गः ९
॥२१॥

नवै र्लभते भुवि ॥ कांडं मनोहरं श्रुत्वा लभ्यते मनसेप्सितम् ॥१६॥ पूर्णकांड श्रवादेव विष्णोः पूर्णपदं लभेत् ॥ सर्व विस्तरतः श्रुत्वाऽऽनंदरामायणं त्विदम् ॥१७॥ सच्चिदानंद रूपेऽसौ लीनो भवति मानवः ॥ रामायणं नरैः श्रुत्वा कार्यमुद्यापनं विधिः ॥१८॥ रामायण श्रुते दद्याद्रथं हेममयं सुधिः ॥ चतुर्भिर्वाजिभिर्युक्तं तथा क्षौम पताकया ॥१९॥ यत्रैश्चैव समायुक्तं किंकिणीनाद नादितम् ॥ संपादितेऽस्य सम्यक् वै धेनुं दद्यात्पयस्विनी ॥२०॥ ब्राह्मणान्भोजयेत्पश्चाच्छतमष्टोत्तरं सुधिः ॥ एवं कृतविधानेन तन्महाकाव्यं फलप्रदम् ॥२१॥ रामायण भवेन्नूनं नात्र कार्या विचारणा ॥ यस्मिन्रामस्य संस्थानं रामायणमथोच्यते ॥२२॥ नरः प्रातः समुत्थायानंदरामायणं पठेत् ॥ यः कामानवाप्नोति सकलादिन्वि दुर्लभान् ॥२३॥ चैत्रे मासे सिते पक्षे नवम्यां रामजन्मनि ॥ शतमाष सुवर्णेन वायुपुत्रं विधाय च ॥२४॥ एकविंशति माषैर्वा यथाशक्त्याथवा नरैः ॥ वायुपुत्रं संविधायानंदरामायणं त्विदम् मौल्यद्वारा लिखित्वान्यै लिखितं वा स्वहस्ततः ॥ तत्पुनश्चित्र रंगाद्यै र्भूषितं तु विशोधितम् ॥२६॥ वेष्टितं पट्टकूलाद्यैस्ततस्तत्पुस्तकं शुभम् ॥ स्कंधे श्रीमारुते स्थाप्य पूजितं दक्षिणान्वितम् ॥२७॥ माध्यान्हे ब्राह्मणं पूज्य नानाशास्त्र विशारदम् ॥ तस्मै देयं पुस्तकं तद्वायुपुत्र समन्वितम् ॥२८॥ एवं यः कुरुते दानं तस्य पुण्यं वदाम्यहम् ॥ कोटिभार सुवर्णस्य कुरुक्षेत्रे रविग्रहे ॥२९॥ दानेन पुण्यं यत्प्रोक्तं तस्मादेतच्छताधिकम् ॥ अक्षराण्यत्र यावंति संति ह्यानंद संज्ञके ॥३०॥ तावद्युगसहस्राणि वैकुंठे मोदते नरः ॥ सप्तजन्म भवेद्विप्रस्तत्रोऽत्र वेदपारगः ॥३१॥ रम्यं पवित्रमानंददा-

यकं च मनोहरम् ॥ आनंदसंज्ञकं रामचरितं पुण्यवर्द्धनम् ॥३२॥ रामायणमिदं पुण्यं ये श्रृण्वंति
नरोत्तमाः ॥ पुत्रैः पौत्रैः सुहृद्भिश्च न वियोगं लभंति ते ॥३३॥ रामायणमिदं येऽत्र भक्त्या श्रृण्वं-
ति मानवाः ॥ तेषां स्त्रीभिर्वियोगोऽत्र न कदापि हि जायते ॥३४॥ आनंदसंज्ञकं पुण्यं या श्रृ-
ण्वंत्यत्र वै स्त्रियः ॥ स्वभर्तृभिर्वियोगं ता न गच्छति यथा रमा ॥३५॥ ग्रामं देशांतरं तीर्थं ये गता-
श्च चिरं नराः ॥ तेषामागमनार्थं हि पठनीयमिदं सदा ॥३६॥ एषां भाविनि कार्याणि लब्धुं त्वरय-
ते मनः ॥ आनंदसंज्ञकं तैस्तु पठनीयं प्रयत्नतः ॥३७॥ प्रथमे दिवसे कांडमेकमेव पठेच्छुभम् ॥
प्रथमं च द्वितीयं च द्वितिये दिवसे पठेत् ॥३८॥ एवं क्रमेण कांडानां वृद्धिः कार्या दिने दिने ॥ नव
काण्डानि नवमे दिवसे सं पठेन्नरैः ॥३९॥ अष्ट काण्डानि दशमे क्षयस्त्वेकेन वै क्रमात् ॥ सप्तदश दि-
नैर्ज्ञेयमनुष्ठानमिदं महत् ॥४०॥ अथवा क्रमेण कांडानि प्रथमं प्रथमे पठेत् ॥ द्वितियं च द्वितिये-
न्हि नवमं नवमे दिने ॥४१॥ अष्टमं दशमे प्रोक्तं क्षयः कार्यः क्रमेण हि ॥ सप्तदशदिनैरेतदनु-
ष्ठानं सुखावहम् ॥४२॥ अथवा पृथक्कांडेषु सर्गवृद्धिः क्षयः क्रमात् ॥ एवमेव दिनन्यून सप्तमा-
सैश्च रेद्धतम् ॥४३॥ (दिनसंख्या २०९) अथवा प्रथमे सर्गस्त्वेक एव पठेन्नरैः ॥ द्वे सर्गौ च द्विति-
येन्हि वृद्धिस्त्वेवं क्रमेण हि ॥४४॥ नवोत्तरशते प्राप्ते दिने कृत्स्नं त्विदं पठेत् ॥ पुनः क्षयोऽनु-
क्रमतस्त्वेवं सप्त दिनोत्तरैः ॥४५॥ सप्तमासैरनुष्ठानं ज्ञेयं कार्यैक साधकम् ॥ (२१७) अथवा प्रथ-
मे चान्हि सर्गः प्राथमिकः पठेत् ॥४६॥ द्वितियेन्हि द्वितीयश्च तृतियेन्हि तृतीयकः ॥ नवोत्तरशते

प्राप्ते दिनेयं चरमः पठेत् ॥४७॥दशोत्तरशते प्राप्ते ऽन्यष्टोत्तर शताभिधः॥ पठेत्सर्गः क्रमेणैव शिष्य सप्तदिनोत्तरैः॥४८॥सप्तमासेननुष्ठान ज्ञेयं साधारणं नृणाम्॥ पंचानुष्ठान भेदाश्च मयैवं परिकीर्तिता॥४९॥ अनुष्ठान समाप्तौ हि होमः कार्यो यथाविधिः॥ पृथक् श्लोकं समुच्चार्य स्वाहां तं पायसैः फलैः॥५०॥ नवान्नेनाथवा कार्यो होमो द्विजवरैः सह॥ब्राह्मणान्भोजयेत्तदनुष्ठान दिनैर्मितान्॥५१॥ एतत्प्रातः समुत्थायानंदरामायणं शुभम्॥ ये पठंति नरा भक्त्या ते सुखं प्राप्नुवंति हि॥५२॥द्वादश्यामपि चेतद्धे पठनीयं प्रयत्नतः॥पारायणं नवदिनैः कार्यमस्य सुखावहम्॥५३॥काण्डं सर्गोऽथवा श्लोक स्त्वानंदाख्यस्य प्रत्यहम्॥ न नरा कीर्तयंत्यत्र तेषां जन्मो निरर्थकः॥५४॥ पुत्रार्थे रतिशालायां श्रृणोतु पुरुषः स्त्रिया॥ निशायां शयनारूढो पुत्री पुत्र मवाप्नुयात्॥५५॥ नवराशीषु व्रीहिनां ध्यात्वा कार्यं तु विन्यसेत्॥पूगिफलानि चत्वारि पूर्वेण काण्डमुच्यते॥५६॥ द्वितियेन हि सर्गस्तु तृतियेन फलेन हि॥दशकोऽस्य विजानीयश्चतुर्थेन फलेन च॥५७॥श्लोको ज्ञेयः पूर्वराशेः सर्वेषां गणने रिता॥ सर्वत्रां ते नवश्लोके न विपरिते फलं स्मृतम्॥५८॥एवं सर्वैः पश्यनीयः शकुनश्च शुभोऽशुभाः॥एवं शिष्य त्वया यद्यत्पृष्टं तत्तन्मयोदितम्॥५९॥ आनंदरामायणमेतदुत्तमं- नवोत्तरं सर्ग शतं मयेरितम्॥ कांडानि यास्मिन्नव कीर्तितानि। ते हे विष्णुदासाद्यहरं मनोहरम्॥६०॥दिने दिने पाप च यान्प्रकुर्व- न्नरः पठेच्छ्लोकमपीह भक्त्या॥ विमुक्त सर्वप्रचयः प्रयाति रामस्य सालोक्यमनन्य लभ्यम्॥६१॥आनंदरामायणमेतदुत्तमं मे रामदासस्य मुखेन कीर्तितम्

॥ त्रि राघवेणैव जनाघनाशनम् ॥ नानाचरित्रैर्वरकौतुकैर्युतम् ॥ ६२॥ धन्यः स वाल्मीकि मुनिः कवी-
श्वरो- रामायणं वै शतकोटि संमितम् ॥ कृतं पुरा येन सविस्तरं शुभं - यस्माच्च सारं कथितं मया तव
॥६३॥ आनंदरामायणमेतदुत्तमं- श्रीजानकी क्रीडन कौतुकैर्युतम् ॥ शृण्वंति गायंति वदंति वा परा-
न्- कुर्वंति पारायणमादराच्च ये ॥६४॥ लभंति पुत्रानति बुद्धिमत्तरान्- स्त्रीश्चापि पुत्रान्परमान्म-
नोहरान् ॥ धनानि धान्यानि पशूंश्च मानवाः - श्रीरामचंद्रस्य पदं प्रयांति ते ॥६५॥ आनंद संज्ञं
पठतश्च नित्यं- श्रोतुश्च भक्त्या लिखितुश्च रामः ॥ अतिप्रसन्नश्च सदा समीपे- सीतासमेतः श्रिय-
मातनोति ॥६६॥ आनंदरामायण जान्हवीयं- पापापहं हंत्रि मलिनस्य जंतोः ॥ आनंदरामायण का-
मधेनु- स्त्वियं जनानामतिकामदोग्ध्री ॥६७॥ रामायणं जनमनोहरमादि काव्यं । ब्रह्मादिभिः सुरव-
रैरपि संस्तुतं च ॥ श्रद्धान्वितः पठति यः शृणुयात्स नित्यं- विष्णोः प्रयांति सदनं स विशुद्ध देहः
॥६८॥ नवोत्तरशतैः सर्गैः रामकीर्तनमालिका ॥ कृत्वा कंठे सुखं तिष्ठ शिष्ये मा त्वं मयोदिताम् ६९
॥ श्रीशिवउवाच ॥ आनंदराम चरितमिदं स्वीय गुरोर्मुखात् ॥ श्रुत्वा स विष्णुदासस्तं ननामाच्यं
पुनः पुनः ॥७०॥ रामदासः स्वशिष्यायानंदरामायणं प्रिये ॥ एवंमुक्त्वा मुनिः संध्यां कर्तुं गोदा गमि-
ष्यति ॥७१॥ एवं देवी तवाग्रेऽद्य मयानि परिकीर्तितम् ॥ आनंदरामचरितं श्रवणात्पुण्यवर्द्धनम्
॥७२॥ रामकीर्तनमालाया मेरुस्थाने त्वयं महान् ॥ सर्गो मया ते कथितः श्रवणान्मंगलप्रदः ॥७३॥
॥ श्रीपार्वत्युवाच ॥ यदा वाल्मीकिना देव कृतं रामायणं वरम् ॥ तदा क्व रामदासः स संवादोऽस्मि

न्त्वया कथि ॥७४॥क्व तदा विष्णुदासोऽपि संशयो मेऽत्र जायते ॥ श्रीशिवउवाच॥त्रिकाल-
या ज्ञानदृष्ट्या मुनिनात्र कथांतरे ॥७५॥उभयोर्भावि संवादः सोऽपि पूर्वं प्रवर्णितः॥ तथा राम-
स्य चरितं रामात्पूर्वं प्रवर्णितम् ॥७६॥ संदेहोऽत्र त्वया नैव कार्यः पर्वतकन्यके ॥रामदास मुखे-
नैतद्राघवेणैव वर्णितम् ॥७७॥*आनंदरामायणमादरेण- पुत्रे प्रजाते पठनीय भक्त्या ॥ विवाह
काले व्रतबंधकाले- श्राद्धे पठेत्पर्वणि मंगले च ॥७९॥आनंदरामायणमादरेण-कारागृहस्थस्य
विमुक्तिदायकम्॥ उत्पात शांत्यै भयनाशनाय- प्रभोः कृपार्थं पठनीयमेतत् ॥८०॥आनंदरामायणमाद-
रेण- श्रृणोति यः श्रावयते च भक्त्या ॥स्वकीय कामानखिलानवाप्य- वैकुंठ कं खलु जग्मतु स्तै
॥८१॥ आनंदरामायणतोऽधिकानि-वसंत तीर्थानि हरेः स्थलानि ॥क्षेत्राणि दानान्यपि पुण्यदानि
तथा पुराणान्यथ कीर्तनानि ॥८२॥ आनंदरामायणमेतदुत्तमं-प्रोक्तं मया ते गिरिजे सविस्तरम्
॥त्वं चित्घनं तत्परमं निरंतरं-मनोहरं लप्स्यसि राघवे मतिम्॥८३॥ हत्वा युद्धे दशास्यं द्विजव-
चन गुरुत्वेन यात्राश्च यज्ञान्-कृत्वा भुक्त्वाति भोगानवनितल विंशतिं गृहित्वां च सीताम्॥लब्ध्वा
नानास्नुषास्तास्त्ववनितलगतान्पार्थिवादिंश्च जीत्वा-कृत्वा नानोपदेशान्गजपुर निवां स्वीय लोकं
जगाम ॥८४॥वामे भूमिसुता पुरस्तु हनुमान्पृष्ठे सुमित्रासुतः शत्रुघ्नो भरतश्च पार्श्वदलयोर्वाय-
व्यकोणादिषु ॥सुग्रीवश्च बिभीषणश्च युवराट् तारासुतो जांबवान्मध्ये नीलसरोज कोमल रुचिं
रामं भजे श्यामलम् ॥८५॥आनंदरामायण संज्ञकोपमं- ये पूर्णकांडं चरमं नरोत्तमाः ॥पठंति श्रृण्वंति

*आनंदरामायणमादरेण- श्रीरामचंद्रेण मुनेर्मुखेन ॥ तद्रामदासस्य मुखेन चोक्तं- मुक्तिप्रदं मुक्तिदमेतदस्ति ॥७८॥

हरेः परं पदम् ॥ गच्छंति पूर्णेप्सित मा लभंति ते ॥ ८६॥ आनंदरामायणमेतदुत्तमं- जप्यं पवित्रं श्रव-णीयमादरात् ॥ यन्मंगलानामपि मंगलप्रदं-स्मरामि नित्यं प्रणमामि सादरम् ॥ ८७॥ इति श्रीशतको-टि रामचरितांतर्गत श्रीमदानंदरामायणे वाल्मीकिये आदिकाव्ये पूर्णकांडे उमामहेश्वर तथा रामदास विष्णुदास संवादे ग्रंथश्रुतिर्नाम नवमः सर्गः ॥ शुभंभवतु ॥ श्रीसीतारामचंद्रार्पणमस्तु ॥

॥ श्लोक संख्या ५७७ ॥ पत्र संख्या २४ ॥

यादृशी पुस्तकं दृष्ट्वा तादृशी लिखितं मया ॥ यदि शुध्दमशुध्दो वा मम दोषो न विद्यते ॥१॥ भग्न पृष्ठि कटि ग्रीवा स्तब्ध दृष्टिरधोमुखम ॥ कष्टेन लिखितं ग्रंथं यत्नेन प्रतिपालयेत् ॥२॥ तैलाद्रक्षे जलाद्रक्षे रक्षे सीतलबंधनात् मूर्खहस्ते न दातव्यं एवं वदति पुस्तकम् ॥३॥

